प्रतिपद्यपि कर्तव्यं श्राध्धं श्राध्धविदो विदुः ॥

कालादर्शे जाबालिवचनेन अमावास्याया अभावेऽपि प्रतिपदः कालत्वेन विधानात् ॥ कुतपे उपक्रांतस्य प्रतिपद्भागे समाप्तावपि न दोषइति व्याख्यातं ॥

[१४] लौगाक्षिः

सिनीवाली द्विजैः कार्या साग्निकैः पितृकर्मणि ।
स्त्रीभिः शूद्रैः कुहूः कार्या तथा चानग्निकैर्द्विजैः ॥

जाबालिरपि

अपराण्हद्वयव्यापी यदि दर्शस्तिथिक्षये ।
आहिताग्नेः सिनीवाली निरग्न्यादेः कुहूर्मतेति ॥

अन्होऽपरो भागोऽपराण्हः ॥ आदिशब्देन स्त्रीशूद्राणामुपसंग्रह इति॥ [१५] यदा तु तिथिक्षयवशात् दिनद्वयेऽपि कुतपे अमावास्या न लभ्यते तदा सिनीवाली सर्वैर्ग्राह्या ॥ तिथिक्षये सिनीवालीति वचनात् ॥ यत्तु कैश्चिद्दिवसस्य त्रिधा विभागपक्षेऽपराण्हेऽमावास्यादिश्राध्धं निर्णीतं तत्तेषां

पूर्वाण्हे चेदमावास्या नापराण्हे भवेद्यदि ।
भूतविध्धैव सा ग्राह्या पित्र्ये कर्मणि सर्वदा ॥

तथा

अपराण्हः पितॄणां तु यापराण्हानुयायिनी ।
सा ग्राह्या पितृकार्ये तु न पूर्वाण्हानुयायिनी ॥

इत्यादिवचनेषु तयोः पूर्वाण्हापराण्हयोरंतर्वर्तिना मध्यान्हकालेनांतर्हितयोः परस्परं संबंधः कथं स्यात् ॥ कालस्य

व्यापकत्वात्संबंध इति चेत् तर्हिं विचाराय दत्तो जलाञ्जलिः॥ "पंचधा विभागे तु प्रातः संगवो मध्यान्होऽपराण्हः सायान्ह इति पूर्वाण्हशब्दो नास्ति ॥ द्विधा विभागे तु

कुं यत्र गोपतिर्गोभिः कात्स्न्येंन तपाति क्षणे ।
सकालः कुतपस्तत्र पितृणां दत्तमक्षयम् ॥

यथा

दिवसस्याष्टमे भागे मंदीभवति भास्करे ।
सकालः कुतपस्तत्र पितृणां दत्तमक्षयम् ॥

यथा

अपराण्हे तु संप्राप्ते अभिजिद्रौहिणोदये ।
यत्किंचिद्दीयते तत्र तदक्षय्यमदाहृतम् ॥

तथा

शुक्लपक्षस्य पूर्वाण्हे श्राध्धं कुर्याद्विचक्षणः ।
कृष्णपक्षापराण्हे तु रौहिणं तु न लंघयेत् ॥

इत्यादि स्मृतिपुराणवचनान्युपपन्नानि भवन्ति ॥ तस्माच्छ्राध्धे द्विधाविभाग एव साधीयानिति ॥

ननु

पूर्वाण्हे दैविकं श्राध्धमपराण्हे तु पैतृकम् ।
एकोद्दिष्टं तु मध्यान्हे प्रातर्वृध्धिनिमित्तकमिति ॥

त्रिधा विभागपरम् ॥ न श्राध्धविशेषेण कालविशेषो विधीयते ॥ मध्यादधस्तनो विभागः पूर्वाण्हः तदुत्तरोऽपराण्हः ॥ मध्यान्हः कुतपमुहूर्त्त स्तेस्याहो मध्यत्वात् ॥

तदुक्तं

सप्तमात्परतो यस्तु नवमादधरस्तु यः ।

उभयोरपि मध्यस्थः कुतपः सोऽभिधीयत ॥ इति ॥

तस्यैव मध्यत्वोक्तेः ॥ तस्मिन्नेव श्राद्धारम्भविधानाच्च ॥

गौतमः

प्रारभ्य कुतपे श्राद्धं कुर्यादारौहिणाद्बुधः ।

विधिज्ञो विधिमास्थाय रौहिणं तु न लङ्घयेत् ॥इति॥

रौहिणं नवमो मुहूर्तः ॥ अतः एकोद्दिष्टं पार्वणमपि च श्राद्धं कुतपे प्रारभ्य रौहिणे समापनीयम् ॥ रौहिणातिक्रमे दोषस्तु तेनैवोक्तः

रौहिणं लङ्घयेद्यस्तु ज्ञानादज्ञानतोऽपिवा ।

आसुरं तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठति ॥

अतएव कदाचिद्दैवापराधान्मानुषाद्वापराधाद्रौहिणातिक्रमे सति तज्जनितदोषशंकानिवृत्यर्थमापस्तंबवचनमुपपन्नं ॥

यथा

कुतपादिमुहूर्त्तांस्त्रीन्यदा चरति भास्करः ।

सकालः कुतपस्तत्र पितॄणां दत्तमक्षयम् ॥ इति ॥

कुतपो रौहिणो विरंचिरिति त्रयः ॥

यत्तु कैश्चित्

त्रिमुहूर्तापि कर्त्तव्या पूर्वा दर्शे तु बह्वृचैः ।

कुहूरध्वर्युभिः कार्या यथेष्टं सामगीतिभिः ॥

इत्येतद्धारीतवचनमन्वापद्यते ॥ इदं वचनं वेदमूलं न

संभवति ॥ वेदो हि द्विजातिसाधारणं धर्मं विदधाति ॥ इदं हि बह्वृचश्राद्धादौ कालविशेषं विधत्ते ॥ बह्वृचादेः साग्नित्वनिरग्नित्वकृतो यो विशेषः सोऽपि न श्रूयते ॥ किं च यथेष्टं सामगीतिभिरित्येतत्प्रमाणं स्यात् ॥ कथं तर्हि छंदोगपरिशिष्टादिकगतं पिण्डयज्ञमन्वाहार्यकं च छंदोगमुख्यान्प्रति व्यवस्थितं विधत्ते ॥ अत इदं कुतपकालादेर्विधायिकाभिः स्मृतिभिर्विरुध्धमिदमनादरणीयमिति ॥ एवमनन्तभट्टेऽपि प्रतिपादितम् ॥

॥ इतिनिराग्निकामावास्यानिर्णयः ॥

## अथ पौर्णमासीश्राद्धनिर्णयः

अमावास्याश्राध्धनिर्णयवत्पौर्णमासीश्राध्धनिर्णयः ॥

पौर्णमासीषुश्राध्धाकरणे दोषमाह

पितामहः

अमावास्याव्यतीपातपौर्णमास्यष्टकासु च ।
विद्वान् श्राध्धमकुर्वाणः प्रायश्चित्तीयते तु सः ॥

गार्गिः

पौर्णमासीषुयत्छ्राध्धं यच्च दानं यथाविधि ।
उपवासादिकं यच्च तदनन्तफलं स्मृतम् ॥
पौर्णमासीषु सर्वासु निषिध्धं पिण्डपातनम् ।
वर्जयित्वा प्रोष्ठपदीं यथा दर्शस्तथैव सेति ॥

चित्रानक्षत्रसंयुक्ता चैत्री विशाखानक्षत्रसंयुक्ता वैशाखी एवं स्वस्वनक्षत्रसंयुक्ताः सर्वाः पुण्यतमा इति ॥ साग्निकानां

पुनरपराण्हे पिण्डपितृयज्ञानंतरं दर्शश्राध्धस्य विहितत्वात्तद्विषयो दर्शनिर्णयः पृथक्प्रस्तूयते इति ॥ साग्निकविषये

मनुः

पितृयज्ञं तु निर्वर्त्य विप्रश्चन्द्रक्षयेऽग्निमान् ।
पिण्डान्वाहार्यकं श्राध्धं कुर्यान्मासानुमासिकम् ॥

अत्र केचित् पितृयज्ञशब्देन तर्पणं व्याचक्षमाणामत्स्यपुराणवचनमुदाहरन्ति ॥

यथा

पितृयज्ञं तु निर्वर्त्य तर्पणाख्यं तु योऽग्निमान् ।
पिण्डान्वाहार्यकं श्राध्धं कुर्यादिन्दुक्षये सति ॥

सर्वैः स्नानं तर्पणं च कृत्वैव श्राध्धमाचरेत् ।

तस्य साग्निनिरग्न्योरविशेषात्प्राप्तेर्योऽग्निमानित्यनर्थकम् ॥ तर्पणस्यदेवर्षिपितृमनुष्यसाधारण्यादसाधारणपिण्डपितृयज्ञव्यपदेशो न युज्यते ॥ तर्पणस्य पिण्डरूपत्वाभावात् ॥ पिण्डान्वाहार्यकव्युत्पत्तिरपि न घटते ॥ पिण्डानामनु पश्चादाह्रियते क्रियते इति ॥ अतोऽस्यवचनस्यानर्थकत्वभिया महायज्ञान्तर्भूतं देवयज्ञभूतयज्ञानन्तरं पितृभ्यः स्वधा नम इति दक्षिणतः ॥ एँव पारस्करादिगृह्यविहितं पितृयज्ञं निर्वर्त्य पिण्डान्वाहार्यकं श्राध्धं कुर्यादित्यर्थः ॥ अयमेव पितृयज्ञस्तर्पणाख्यः ॥

उक्तंच मत्स्यपुराणे

जपो हुतोऽहुतो होम प्रहुतो भौतिको बलिः ।
ब्राह्म्यं तु तद्द्विजाग्र्येषु प्राशितं पितृतर्पणं ॥

अनेन मत्स्यवचनेन प्राक्पिंडपितृयज्ञादग्निमतो वैश्वदेवाख्यं महायज्ञानुष्ठानं विधीयते ॥ भविष्यत्पुराणे स्पष्टमेतदुपदिश्यते

मासांते कर्म निर्वर्त्य वैश्वदेवं तु साग्निकः ।
पिण्डयज्ञं ततः कुर्या त्ततोऽन्वाहार्यकं बुधः ॥ इति ॥

पिण्डपितृयज्ञः पितृयज्ञशब्देनोच्यते ॥

शांखायनः

पिण्डपितृयज्ञोऽपराण्हेऽमावास्यायां॥ एवं पितृयज्ञं तु निर्वर्त्येत्यत्रक्त्वा प्रत्ययादेशश्रवणबलात्पिण्डपितृयज्ञस्य पिण्डान्वाहार्यकस्य च एकस्मिन्दिने सिद्धेऽपि विरोधो दृश्यते ॥

यथा

यदामावास्याप्रतिपत्संधिर्मध्यान्हादुपरि अमावास्या च दिनद्वयेऽप्यपराण्हव्यापिन्यां तिथिक्षये सिनीवालीति ॥

सिनीवाली द्विजैः कार्या साग्निकैः पितृकर्मणि ।

इत्यादिना द्वयोः पिण्डपितृयज्ञश्राद्धयोः एकत्र प्राप्तौ आपस्तंबकात्यायन वचनाभ्यां विरुद्धमिवप्रतिभाति ॥ यदहश्चन्द्रमसं न पश्यंति तदहः पिण्डपितृयज्ञं कुर्यादित्यापस्तंबवचनेन चन्द्रादर्शन एव पिण्डपितृयज्ञो विहितः ॥

कात्यायनोऽपि

अमावास्यायामपराण्हे पिण्डपितृयज्ञश्चन्द्रादर्शने इति ॥ चतुर्दशी यत्र मुहूर्तत्रयादर्वाक् समाप्यते तत्र चंद्रदर्शनं न भवतीति प्रसिध्धं ज्योतिःशास्त्रे ॥ अतो मुहूर्तत्रयाधिकायां चतु-

दश्यां चन्द्रदर्शने सति ॥ आपस्तंबवचनेन चन्द्रादर्शने विहितस्य पिंडपितृयज्ञस्य सति चन्द्रदर्शने निषेधादेतदुत्कृष्य पिंडपितृयज्ञः परेन्हि कुह्वां क्रियते ॥ पितृयज्ञं तु निर्वर्त्य विप्रश्चन्द्रक्षयेऽग्निमानिति ॥ अनेन विहितं पिंडान्वाहार्यकं श्राद्धं तु मुख्यस्य पिंडपितृयज्ञस्य सिनीवाल्यां बाधदर्शनान्मुख्यार्थबाधेऽन्योर्थोलक्ष्यत इत्यनेन लक्षणया तर्पणाख्यं पितृयज्ञमाश्रित्य कुतपकालिकायां सिनीवाल्यां साग्निना क्रियते श्राद्धमिति ॥ ७८एवं भिन्नतिथिप्राप्तयोर्द्वयोः कर्मणोरेकतिथिविधानविधेरिच्छया पिंडान्वाहार्यकस्यार्थशून्यतालक्षणदोषपरिजिहीर्षया च परिशिष्टकारः आपस्तंबादिसूत्रार्थं व्याचष्टे ॥

यदुक्तं यदहस्त्वेव दर्शनं नैति चंद्रमाः ।

तत्क्षयापेक्षया ज्ञेयम् ॥ क्षीणे राजनि शस्यते इति सूत्रे यदुक्तं यदहश्चंद्रमसं न पश्यतीति तत्क्षयाभिप्रायेणअदर्शनेन क्षयोऽभिप्रेतः ॥ यदहश्चन्द्रक्षयो भवति तस्मिन्नहानि पिंडपितृयज्ञ इति सूत्रार्थो व्याख्यातः ॥

७९चन्द्रक्षयकालस्तु

अष्टमेंऽशे चतुर्दश्याः क्षीणो भवति चंद्रमाः ।
अमावास्याऽष्टमे भागे ततःकिल भवेदणुरिति ॥

प्रातश्चन्द्रमसि दृष्टेऽप्यपराण्हे क्षयाभिप्रायेण हारीतोऽप्याह

यस्यां संध्यागतः सोमो मृणालमिव दृश्यते ।
अपराण्हे क्षयस्तस्यां पिंडानां करणं ध्रुवम् ॥

पिंडानां पितृयज्ञविहितानां पिंडानां विधायकत्वेऽस्य वा-

क्यस्यार्थवत्ता भवति॥ पिंडपितृयज्ञरहितस्य श्राद्धस्य कुतपकालिक्याममावास्यायां नियतत्वात् ॥

श्रुतिरपि

एषवै सोमो राजा देवानामन्नं यच्चन्द्रमाः स एतां रात्रिं क्षीयते तस्मिन्क्षीणे ददाति स एवापराण्हे ददाति ॥ पूर्वाण्हो वै देवानां मध्यंदिनोमनुष्याणामपराण्हः पितृणां तस्मादपराण्हे ददाति ॥ अस्य श्रुतिद्वयस्य विहितस्य पितृयज्ञस्य चन्द्रक्षये प्रतिपादनादेतदुक्तं भवति ॥ प्रातश्चन्द्रदर्शने सति अपराण्हे यदा चन्द्रः क्षीयते तदा पिंडपितृयज्ञः क्रियत इति ॥

[८०]कात्यायनोऽपि

पिंडान्वाहार्यकश्राद्धं क्षीणे राजनि शस्यते ।
वासरस्य तुरीयेंऽशे नातिसंध्यासमीपतइति॥

अत्र पिंडान्वाहार्यकमित्यर्थाभिधानं ॥ पिंडपितृयज्ञार्थं कालविशिष्टं श्राद्धं विधीयते ॥ तच्च क्षीणे चन्द्रे प्रशस्तमिति ॥ एभिर्वचनैश्चन्द्रादर्शने एव पिंडपितृयज्ञो विधीयते ॥ तस्माच्चन्द्र-दर्शननिमित्तो नोत्कर्षः पिंडपितृयज्ञस्येति ॥ [८१]कात्यायनेन पिंडपितृयज्ञो दर्शांगमित्युक्तं ॥ करकोपाध्यायेनाप्युररीकृतं ॥ पूर्वमेव दर्शश्राद्धात्पिंडपितृयज्ञो न पश्चादिति ॥ जैमिनेर्मतेऽनङ्गत्वेऽपि दर्शात्पूर्वमेव ॥ तत्र क्रमपरां श्रुतिं दर्शयति॥ पूर्वेद्युः पितृभ्यो यज्ञं निष्क्रणीय प्रातर्देवेभ्यः प्रतनुते इति ॥ अनया श्रुत्यैवोत्कर्षशंङ्का निरस्ता ॥ तदेवं पूर्वेद्युः पिंडपितृयज्ञः उत्तरेद्युर्दर्शेष्टिः रिति निर्णीतं ॥ [८२]अन्वाधानं पिंडपितृयज्ञो दर्शश्राद्धं चेत्येकदिन इत्युक्तम् ॥

कालादर्शे

त्रीण्येकवासरे कुर्यादिति प्राहुर्महर्षयइति ।

कारिकायां

श्राद्धं स्यात्पिंडयज्ञांते पिंडान्वाहार्यसंज्ञकम् ।

पित्रादिभ्यस्तथा मातामहादिभ्यः सधर्मकम् ॥

श्राद्धात्पूर्वः पितृयज्ञः श्रौतत्वादेककालिकः ।

अनाहिताग्नेः प्राप्तिश्च तस्य श्रौतातिदेशत इति ॥

८३तथा

अमायां नित्यहोमान्ते देवतानां परिग्रहः ।

प्रातः संकल्पवपनं पुंसः स्नातौ तु दंपती ॥

हुतादीन्बलिपित्र्यांतान् पृथक् पाकात्समर्प्य तान् ।

पितृयज्ञविधिः श्रुत्यामुक्तः श्राद्धविधिः स्मृतौ ॥

अपराण्हे पितृयज्ञात्परं श्राद्धं तु दार्शिकम् इति ।

८४प्रातश्चन्द्रदर्शने सत्यपराण्हे क्षयाभिप्रायेण यज्ञपार्श्वोऽप्याह

अर्धे चतुर्दशी यत्र परे पञ्चदशी भवेत् ।

चतुर्दश्यवसाने तु पितृयज्ञं तु कारयेत् ॥

कारयेदिति पिंडपितृयज्ञस्याध्वर्युकर्तृकत्वे शाखाभिप्रायेण णिच्प्रत्ययः ॥ स्वयं कर्तृकत्वे स्वार्थे णिजिति कल्प्यते ॥

८५अस्तमयपर्यंतायामपिचतुर्दश्यां पिंडान्वाहार्यकं श्राद्धं विधीयते । यदि द्वितीयेऽहानि अमावास्याः क्षयो भवति ॥

तदुक्तं

यदा चतुर्दशी यामं तुरीयमनुपूरयेत् ।

अमावास्या क्षीयमाणा तदैव श्राद्धमिष्यते इति ॥

तदैवेति चतुर्दश्यां वासरतुरीयेंऽशे तदैव चन्द्रस्य क्षीण-त्वात् ॥ वासरस्य तुरीयेंऽशे इति कात्यायनवचनाच्च ॥
स्मृत्यंतरे

चतुर्दश्यां चतुर्यामे अमा यत्र न दृश्यते ।
श्वोभूते प्रतिपद्यत्र भूते कव्यादिका क्रियेति ॥

"एतानि चतुर्दश्यां पिंडपितृयज्ञपिंडान्वाहार्यकश्राद्ध-विधायकानि वाक्यनि ॥ वृश्चिकसंक्रांत्यादौ दिनमानाल्पत्वे अमावास्याः प्रतिपदश्चात्यंतक्षयवशात् प्रतिपदि यागका-लाभावेऽपि इति वेदितव्यानि॥ प्रतिपदि यागकालसद्भावे तु चतुर्दश्यामन्वाधानादीनां निषेध उक्तः ॥
तत्र स्मृतिवचनम्

भूतेऽहनि चतुर्दश्याममां कुर्वंति ये द्विजाः ।
विहारं पितृयज्ञं च तत्सर्वं निष्फलं भवेत् ॥

विहारं उध्धरणं ॥ द्वितीयेऽहनि यागकालसद्भावे सति च-तुर्दश्यामन्वाधानादेर्निषेधात् ॥ यागकालप्रमाणं
वृद्धशातातप आह

"पर्वणो यस्तुरियोंऽश आद्याः प्रतिपदस्त्रयः ।
यागकालःस विज्ञेयः प्रातर्युक्तो मनीषिभिः॥

तथा यज्ञपार्श्वोऽपि

पञ्चदस्याः परः पादः पक्षादेः प्रथमास्त्रयः ।
कालः पार्वणयागे स्यादन्यथा तु न विद्यते ॥

इत्यादिवाक्यैर्विहितस्य यागकालस्य प्रतिपदि सद्भावे भूतेऽहनी-ति वाक्यं चतुर्दश्यां निषेधकं प्रतिपदि यागकालाभावे निषे-

धकाभावात् ॥ अन्यथा पूर्ववचनैर्विरोधः स्यात् ॥ तस्मात्स्वा-
मिना यागकालपर्यालोचनया दिवसस्य त्रिधा विभागापराण्हे
अमावास्यायां चतुर्दश्यां वा पिंडपितृयज्ञः कर्तव्यइति सिद्धेऽपि
तद्विषये द्विधाविभागो नास्तीति म मंतव्यं ॥ पिंडपितृयज्ञो
द्विधाविभागइत्यत्र वचनानि ॥ पर्वसंधिकालभेदेन व्यवस्था-
माह ॥

लौगाक्षिः

अपराण्हेऽथवा सायं यदि पर्व समाप्यते ।
उपोष्य तस्मिन्नहनि श्वोभूते याग इष्यते इति ॥

अपराण्हे दिवसस्योत्तरार्धे यदि पर्वसमाप्तिस्तदा द्विती-
येऽहनि यागकालसद्भावे सति तस्मिन्नुपोष्येत्यन्वाधानादि व्रतं
कृत्वा श्वोभूते परेऽहनि यागः ॥ अपराण्होऽत्र दिवसस्य द्वि-
तीयो भागो न तृतीयो नापि पञ्चधाविभक्तस्य चतुर्थो भागः ॥
अत एवार्धे चतुर्दशी यत्र परं पञ्चदशीत्यत्र वाक्ये पितृयज्ञका-
लविधौ द्विधाविभागस्य गृहीतत्वात् । मुख्यश्चायमपराण्हश-
ब्दार्थः अन्होऽपरोभागोऽपराण्हः ॥ पूर्वापराधरोत्तरेति समा-
सः ॥ "तथा पिंडपितृयज्ञे दिवसद्विधाविभागपरा गृह्यकारिका॥

पञ्चदशी प्रतिपच्च समेते एकदिने महती यदि तस्मिन् ।
पञ्चदशी प्रकृतेरुपवासः पञ्चदशी क्रियते यदि यागः ॥

समेते मिलिते इत्यर्थः ॥ पञ्चदशी यदि महती दिनो-
त्तरभागे पिंडपितृयज्ञकरणसमर्था तस्मिन्दिने ॥ तदा ग्रंथांत-
रे चापराण्हिकी त्रिघटिका यदा ॥ प्रकृतेर्दर्शपौर्णमासयोरुप-
वासो व्रतमिति ॥ एतद्द्वितीये दिने यागकालसद्भावे वेदितव्यं॥

पञ्चदशी ह्रियते यदि क्षीयते तदा तस्मिन्नहनि यागः।
अर्थात्पूर्वेद्युर्व्रतामिति ॥ ७९

तथा च गोभिलः

आवर्तनात्परः संधिर्यदि तस्मिन्नुपक्रमः।
परेद्युरिष्टिरित्येष पर्वद्वयविनिर्णय इति ॥

आवर्त्तनं मध्यान्हस्तस्मात्परः पर्वप्रतिपदोः संधिस्तदा तस्मिन्व्रतं परेद्युः परदिने इष्टिरिति ॥ एवमित्यादिबहूनां वचनानां पर्यालोचनया व्रतयागयोः पूर्वोत्तरादिनसंबंधत्वेन परदिने चन्द्रदर्शने सत्यसति वायागः॥ पूर्वेद्युरुद्धरणादिकमिति ॥८० स्मृत्यर्थसारेऽप्येवमुक्तं ॥ अमावास्यायां तु अपराण्हादिपर्वसंधौ सति परेऽहनि दृष्टचन्द्रऽपियागः कार्य इति ॥ अमावास्या पूर्णिमा च पर्वशब्देनोच्यते ॥ तथा च श्रुतिः ॥ अर्धमासःपर्व देवानस्मिन्प्रीणन्तीति ॥ एवं पिंडपितृयज्ञादौ द्विधाविभागोऽप्युक्तः ॥

कृतेऽचलद्विवेदेन ग्रंथे निर्णयदीपके।
निरग्न्यादेश्च साग्नीनाममावास्याविनिर्णयः ॥

## इत्यमावास्या निर्णयः

---

## [८१]अथ याग काल निर्णयः

दर्शे पौर्णमास्यां वा आहिताग्न्यनाहिताग्न्योः संधौ यजेतेति वाक्येन विहितस्य यागस्य पर्वप्रतिपत्संधिनिर्बंधनत्वात् संधेरतिसूक्ष्मत्वात् तत्र यागानुपपत्तेरुभयतः समीपलक्षणायां कालनिश्चयमाह

याज्ञवल्क्यः

पञ्चदश्याः परः पादः पक्षादेः प्रथमास्त्रयः ।
यागकालः स विज्ञेयः प्रातर्युक्तो मनीषिभिरिति ॥

एवं पर्वचतुर्थांशादि प्रतिपदंशत्रयं यावद्यागकालः स प्रातः कालीनो गृहीतव्यः ॥ प्रातर्यत्रैतन्महावृक्षाग्राणि सूर्य आतपति स होमकालः स्वस्त्ययनतम इति गृह्यसूत्रं ॥ उदित आदित्ये पौर्णमासं तंत्रं प्रक्रमेत्प्रागुदयादारभ्यामावास्यामित्यापस्तंबः ॥ यदा मध्यान्हात्पूर्वं मध्यान्हे वा पर्वप्रतिपदोः संधिस्तदा संधिदिने यागः पूर्वेद्युरन्वाधानं ॥

तदाह लौगाक्षिः

पूर्वाण्हेऽप्यथ मध्यान्हे यदि पर्व समाप्यते ।
उपोष्य तत्र पूर्वेद्युस्तदहर्याग इष्यते ॥

९२गोभिलः

पर्वप्रतिपदोः संधिरर्वागावर्त्तनाद्भवेत् ।
तस्मिन्नहनि यष्टव्यं पूर्वेद्युः स्यादुपक्रमः ॥

तथा

आवर्तने यदा संधिः पर्वप्रतिपदोर्भवेत् ।
तदहर्याग इष्येत परतश्चेत्परेऽहनि ॥

आवर्त्तनं मध्यान्हः ॥ आवर्त्तनादूर्ध्वं पर्वसंधौ परेऽहनीति यागकाले सतीति वेदितव्यं ॥

संग्रहेऽपि

पूर्वाण्हे वाथ मध्यान्हे पर्वसंधिर्यदा भवेत् ।
तत्रोपोष्या सिनीवाली श्वो न दृष्टा न लक्षणेति ॥

चन्द्रमिति शेषः ॥

एतानि वचनानि मध्यान्हात्पूर्वं मध्यान्हे वा पर्वप्रतिपत्संधौ संधिदिने यागविधायकानि ॥ [५३] अथ मध्यान्हादूर्ध्वं सायं काले वा पर्वसमाप्तिस्तदा संधिदिवसे अन्वाधाय परेद्युर्यागः ॥

तदाह लौगाक्षिः

अपराण्हेऽथवा सायं यदि पर्व समाप्यते ।
उपोष्य तस्मिन्नहनि श्वो भूते याग इष्यते ॥ इति ॥

संग्रहेऽपि

अपराण्हे क्षपायां वा पर्वसंधिर्भवेद्यदि ।
उपोष्य तत्कुहूस्तत्र यदहर्नेति लक्षणा ॥ चन्द्रोनेत्यर्थः ॥

गृह्यकारिका

पञ्चदशी प्रतिपच्च समेते एकादिने महती यदि तस्मिन् ।
पञ्चदशी प्रकृतेरुपवासः पञ्चदशी क्रियते यदि यागः ॥

गोभिलः

आवर्त्तनात्परः संधिर्यदि तस्मिन्नुपक्रमः ।
परेद्युरिष्टिरित्येष पर्वद्वयविनिर्णय इति ॥

एतानि वचनानि अपराण्हपर्वसंधौ परदिने यागविधायकान्यपि यागकालसद्भावे वेदितव्यानि अन्यथा संधिदिने एव याग इति ॥ [५४]अयं निर्णयः पूर्णिमाऽमावास्ययोः साधारणः॥ अमायां तु यागकालानुपातेऽपि पर्वतृतीयेंऽशेऽपि यागो भवेदिति ॥ तत्र युक्तिः वृश्चिकसंक्रांत्यादौ दिनमानाल्पत्वे सति यदा तिथेः क्षयो भवति तदा द्वितीयेऽहनि प्रतिपत्तृतीयांशा-

भावाच्चतुर्थांशस्य निंदाश्रवणाच्च। यदा चतुर्दशी यामं तुरीयमित्यादिवचनैः पिंडपितृयज्ञादिकं कर्म चतुर्दश्यामुपदिश्यते ॥ तच्चोपजीव्य द्वितीयदिवसे पूर्वेद्युः पितृभ्यो यज्ञं निष्कृणीय प्रातर्देवेभ्यः प्रतनुत इत्यनया क्रमपरया श्रुत्यार्थात्प्रातः पर्वतृतीयांशे यागः स्यादिति सिद्धम् ॥ [५५] इयांस्तु विशेषः प्रतिपद्यप्रविष्टायां ब्राह्मणतर्पणं न कर्त्तव्यं ॥

प्रतिपद्यप्रविष्टायां यदि त्विष्टिः समाप्यते ।
पुनः प्रणीय कृत्स्नेष्टिः कर्तव्या यागवित्तमैः ॥

इति गार्ग्यवचनात् ॥

यत्तु

पञ्चमी यत्र सम्पूर्णा द्वितीया क्षयगामिनी ।
चरुरिष्टिरमावास्यां भूते कव्यादिका क्रिया ॥

अमावास्याप्रभृतीनां तिथीनामनुस्यूते षट् षट् घटिकाक्षये पञ्चमी सम्पूर्णा भवति॥ तिथिक्षये प्रतिपदि चन्द्रदर्शनं भवति । तथा सति भूते कव्यादिकां क्रियां विदधतोऽस्य वचनस्य प्रतिपदिचन्द्रदर्शने सति पर्वप्रतिपत्संधिनिमित्तो यागो न कार्य इत्यत्र तात्पर्यं ॥ [५६]एतदुपजीव्य चन्द्रदर्शने यागनिषेधकानि मुनिवचनानि प्रवर्त्तन्ते ॥

यजनीयेऽन्हि सोमश्चेद्वारुण्यां दिशि दृश्यते ।
अन्वाधाय चतुर्दश्याममायां तु यजेत्तदा ॥

तथा

आदित्येऽस्तमिते चन्द्रः प्रक्षीण उदियात्तदा ।
प्रतिपद्यतिपत्तिः स्यात्पञ्चदश्यां यजेत्तदा ॥

वृद्धवसिष्ठः

इन्दौ निरुप्ते हविषि पुरस्तादुदिते विधौ ।
यद्वैगुण्यं हुते तस्मिन्पश्चादपि हि तद्भवेत् ॥

स्मृत्यंतरे

वर्धमानाममावास्यां लभेच्चेदपरेऽहनि ।
यामांस्त्रीनधिकान्वाऽपि पितृयज्ञस्ततो भवेत् ॥

ततस्तस्यां सप्तम्यर्थे तासिल्॥ वृद्धौ चंन्द्रदर्शनं न संभवति ॥[५७]

तथा

पर्वणोंऽशे तृतीये तु कार्या त्विष्टिर्द्विजोत्तमैः ।
द्वितीयासहितं यस्माद्दूषयंत्याश्वलायनाः ॥
अर्वागस्तमयाद्यत्र द्वितीया तु प्रदृश्यते
तत्र यागं न कुर्वीत विश्वेदेवाः पराङ्मुखाः ॥

अत्र वचनद्वये द्वितीयामात्रेऽतिप्रसंगादस्तमये त्रिमुहूर्तव्यापिन्या द्वितीयायाश्चन्द्रदर्शने यागनिषेधलक्षणादर्थान्निषेधे प्राप्तेऽपि पुनर्द्वितीयानिषेधस्त्रिमुहूर्ताधिकव्यापि द्वितीयाविशेषेऽवतिष्ठते ॥ अर्वागस्तमयात्सायान्हात्पूर्वमित्यनेन सूचितो द्वितीयाविशेषो वृद्धशातातपेनोक्तः ॥

त्रिमुहूर्ता द्वितीया चेत्प्रतिपद्यापराण्हिकी ।
अन्वाधानं चतुर्दश्यां परतः सोमदर्शनादिति ॥

अपराण्हश्चतुर्थस्त्रिमुहूर्तस्तत्र भवा आपराण्हिकीति कालादर्शे व्याख्यातं ॥ [५८]कार्तिकशुक्लप्रतिपन्निर्णये निर्णयामृतेऽप्यङ्गीकृतं ॥ प्रतिपदि षण्मुहूर्तव्यापिनी द्वितीया आपराण्हिकीति व्याख्यातं च॥ एवं प्रतिपदि षण्मुहूर्तायां द्वितीया-

र्यां चन्द्रदर्शने यागनिषेध इति प्राप्ते ॥ एतानि सर्वाणि वचनानि प्रतिपदि यागनिषेधकानि पर्वतृतीयांशे यागविधायकानि तानि क्षयपक्षेऽवकल्प्यंते ॥ प्रतिपदि सोमदर्शनस्य कारणस्य क्षय एव संभवात् । तिथिवृद्धौ तु

क्षयगा या तिथिः पूर्वा वृद्धिगा या परा स्मृता ।

तथा

खर्वदर्पौ परौ पूज्यावित्यादिना अपराण्हसंधिशास्त्रबलाच्च ॥ प्रतिपदि सोमदर्शनेऽपि प्रातः प्रतिपत्तृतीयांशे लभ्यमाने याग इति सर्वसंमतं ॥ "अथाप्येतद्वचनजातं प्रतिपदि सोमदर्शने यागनिषेधकं तथाप्यपराण्हे संधिशास्त्रविधानान्यथानुपपत्या प्रतिपदि सोमदर्शने सति यागानुष्ठानं वैकल्पिकं द्रष्टव्यं ॥ यदि हि प्रातः प्रतिपत्तृतीयांशे लभ्यमाने सोमदर्शनमात्रेण दर्शयागः प्रतिषिध्यते

तदा

यजनीयेऽन्हि सोमश्चेद्वारुण्यां दिशि दृश्यते ।

तत्र व्याहृतिभिर्हुत्वा दण्डं दद्याद्विजातये इति ॥

कात्यायनवचनमसंगतं स्यात् । कथं । प्रतिपच्चन्द्रदर्शनभयेन चतुर्दश्यामन्वाधानं कृत्वा पञ्चदश्यां यागे कृते प्रतिपदि यजनीयेऽह्नि सोमश्चेदित्युच्यमानमसंगतं ॥ तस्यान्होयजनीयत्वाभावात् ॥ यागस्तु पूर्वदिवसे कृत इति ॥ अतस्तत्र प्रतिपदि यागाभावे व्याहृतिहोमाद्यसंगतम् ॥ "सोमदर्शने न तु पाक्षिकयागप्रतिषेधे अभ्युपगम्यमाने पक्षे चन्द्रदर्शने सति होमादिसहितो यागो विधीयते । तदेवं वचनमर्थवत् नान्यथा

इति ॥ अनन्तभट्टोऽपि चन्द्रदर्शनेऽपि यागो विकल्पेनाश्रित इ- त्ति चन्द्रदर्शने पाक्षिकयागानुष्ठानेऽपि पर्वतृतीयांशे आर्थिकः कालः ॥ प्रतिपत्तृतीयांशे वाचनिकः काल इति ॥ पर्वणोय- श्चतुर्थांश इति अनेनेदमत्र रहस्यं ॥ त्रिमुहूर्ता द्वितीयाचेत्य- नेन वृद्धशातातपोक्तेन पूर्णषण्मुहूर्तद्वितीयाव्याप्तौ यागनिषेध उक्तः ॥ सायं षण्मुहूर्तन्यूनकालव्यापिन्यां द्वितीयायां चन्द्रद- र्शने सति तैत्तिरीयश्रुतिः॥ यदहः पश्चाच्चन्द्रमा अभ्युदेति तदह- र्यजंते इमांल्लोकानभ्युदेष्यन्ति एषा वै सुमनानामिष्टिर्यामन्वेवा मुंचन्द्रमा अभ्युदेति इति॥तस्माद्यागकालस्य प्रातः कालव्या- पित्वविचारेण यागः कार्यः॥

## इत्यमावास्यायागनिर्णयः

---

## अथ पौर्णमासीयागनिर्णयः

पौर्णमासीयागनिर्णयार्थं तावत्पौर्णमास्याः स्वरूपमुच्यते। तदाह गोभिलः

परमो विप्रकर्षः सूर्याचन्द्रमसोः सा पौर्णमासी ॥ सा द्विधा। या चतुर्दशीयुक्ता पौर्णमासी सानुमती ॥ प्रतिपद्यु- क्ता राका ॥

स्मृतिरपि

राका चानुमतिश्चैव पौर्णमासी द्वयं विदुः ।
राका सम्पूर्णचन्द्रा तु कलोनानुमतिः स्मृता ॥

अत्र श्रुतिः

या पौर्णमासी सानुमतिर्योत्तरा सा राकेति ॥

पुराणे

पूर्णमासी दिवा दृष्टे शशिन्यनुमतिः स्मृता ।
रात्रिदृष्टे पुनस्तस्मिन्सैव राकेति कीर्त्यते ॥

अथ पौर्णमास्यपि संधिविशेषेण यागार्थं निर्णीयते ॥

पूर्वाण्हे वाथ मध्यान्हे यदि पर्व समाप्यते ।
उपोष्यानुमतिस्तत्र सा श्वःपूरितलक्षणा ॥

तत्रानुमतिं पूर्वामुपोष्य संधिदिने यागः ॥

[१०३]लौगाक्षिः

पूर्वाण्हे त्वथ मध्यान्हे यदि पर्व समाप्यते ।
उपोष्य तत्र पूर्वेद्युस्तदहर्याग इष्यते इति ॥

गोभिलः

पर्वप्रतिपदोः संधिरर्वागावर्त्तनाद्भवेत् ।
तस्मिन्नहनि यष्टव्यं पूर्वेद्युः स्यादुपक्रमइति ॥

संधिदिने यागपराणि ॥ अथ

अपराण्हेऽथ वा रात्रौ यदि पर्व समाप्यते ।
उपोष्या तत्र राका स्यात्संपूर्णोत्सर्पिलक्षणा ॥

राका प्रतिपद्युक्ता ॥ द्वितीयदिने यागः ॥

अतएव लौगाक्षिः

अपराण्हेऽथवा रात्रौ यदि पर्व समाप्यते ।
उपोष्य तस्मिन्नहनि श्वोभूते याग इष्यते ॥

गोभिलः

आवर्त्तनात्परः संधिर्यदि तस्मिन्नुपक्रमः ।
परेद्युरिष्टिरित्येतत्पर्वद्वयविनिर्णयः ॥ इति ॥

१०४ पौर्णमास्यामयमधिको विशेषः ॥

अपराण्हसंधौ यदि द्वितीयदिने प्रातः प्रतिपत्तृतीयांशो लभ्यते तर्हि तत्रैवेष्टिः कर्तव्या॥ नान्यदन्वेषणीयमिति॥पूर्वाण्हसंधौ तु संधिदिने याग इति निर्णयः॥पौर्णमास्यामिष्टिर्द्विधा द्व्यहकाला सद्यःकाला च । यस्यां पूर्वेद्युरन्वाधानादि द्वितीयदिने यागः साद्व्यहकाला अपरा सद्यःकाला ॥ सद्यइति समानेऽहनि अन्वाधानाद्यारभ्य यस्यां यागः समाप्यते सा सद्यःकाला॥ यदा सङ्गवकालस्य मध्यान्हस्य चान्तरा सङ्गवमध्यान्हयोर्मध्ये पूर्णिमाप्रातिपत्संधिः स्यात् तदा सद्यःकालविधिर्भवेत्॥ तदुक्तं

पूर्णिमाप्रातिपत्संधिर्यदि सङ्गवमंतरा ।
आवर्तनं च तस्य स्यात्सद्यः कालविधिर्भवेत् ॥

कात्यायनोऽप्याह ॥ आवर्त्तनमध्यान्हः ।

संधिश्चेत्संगवादूर्ध्वमर्वागावर्त्तनाद्यदि ।
सा पौर्णमासी विज्ञेया सद्यःकालविधौ तिथिरिति ॥

नन्वेवमग्नीनन्वादधातीति इष्टिपशुबंधेषु पूर्वेद्युरित्यादिविधिविरोधः स्यादिति चेन्न॥ सद्यः कालविधेरपि दर्शनात्॥ तथा च आपस्तंबः

पौर्णमास्यां वान्वाधानपरिस्तरणोपवासाः सद्यो वा सद्यःकालायां सर्वं क्रियत इति ॥ सद्यो वान्वाधाय यज्ञः कर्तव्य इति यावत् ॥ संग्रहकारेणाप्यनयोः पक्षयोः व्यवस्था चोक्ता ॥

अन्वाहितं चास्तरणोप्रवासौ
पूर्वेद्युरेते खलु पौर्णमास्यां ।
आवर्तनात्प्राग्यदि पर्वसंधिः
सद्यस्तदा वा क्रियते समाप्तिः ॥

सर्वस्य कर्मण इति शेषः ॥ इति सद्यःकाला ॥ पर्वण्य-निवृत्ते इष्टिर्न समापनीया ॥

तदुक्तं

प्रतिपद्यप्रवृत्तायां यदि त्विष्टिः समाप्यते ।
पुनः प्रणीय कृत्स्नेष्टिः कर्तव्या यागवित्तमैः ॥

पर्वसमाप्तिज्ञानोपायस्तु यदा प्रतिपदधिकगामिनी तदा वृद्धिनाडीनामर्धं पर्वणि संयोज्यं ॥ यदा क्षयगामिनी तदा क्षयनाडिनामर्धं पर्वणि वियोज्यं॥ समायां समता ॥ एवं ज्ञेया पर्वसमाप्तिः ॥

तदाह लौगाक्षिः

तिथेः परस्था घटिकास्तु याः स्यु-
र्न्यूनाः समा वाभ्यधिकास्तु तासाम् ।
अर्धं वियोज्यं च तथा प्रयोज्यं
ह्रासे च वृद्धौ प्रथमे दिने तत् ॥

तथा

तिथ्यादौ तु भवेद्यावान्ह्रासो वृद्धिः परेऽहनि ।
तावान्ग्राह्यः स पूर्वेद्युरदृष्टोऽपि स्वकर्मणि ॥

१०१ ननु अपराण्हसंधावन्वाधाने कृते परेद्युः कालातिपत्तौ कथमिति तत्रोत्तरमाह वृद्धशातातपः ।

संधिर्यद्यपराण्हे स्याद्यागः प्रातःपरेऽहनि ।
कुर्वाणः प्रतिपद्भागे तुरीयेऽपि न दुष्यति ॥

केचन इदं पौर्णमासयागपरं व्याचक्षते ॥ अमायां तु अवश्यंभाविना सोमदर्शनेन निषिद्धत्वात् ॥

१०७ ननु

न यष्टव्यं चतुर्थांशे यागैः प्रतिपदः क्वचित् ।
रक्षांसि तद्विलुंपन्ति श्रुतिरेषा सनातनीति ॥

कात्यायनवचन विरोधः स्यादिति ॥ एवं आद्यांशे काल-संभवे आलस्यादिना चतुर्थांशे न यष्टव्यमित्येवंपरत्वात्तस्य ॥

१०८ अथखर्वीपौर्णमासी

वाजसनेयिमतानुसारिभिर्विप्रैरनुमता ॥ मध्यान्हात्पूर्वसंधिमत्यां तस्यामुपोष्य परेद्युस्तृतीयांशाभावात् प्रतिपच्चतुर्थांशेऽपि प्रातःकालीनो यागः क्रियते ॥

तदुक्तं भाष्य संग्रहे

मध्यंदिनात्स्यादहनीह यस्मिन्
प्राक्पर्वणः संधिरेवं तृतीया ।
सा खर्विका वाजसनेयमत्या
तस्यामुपोष्याथ परेद्युरिष्टिः ॥

लौगाक्षिः

आवर्त्तनादधः संधिर्यद्यन्वाधाय तद्दिने ।
परेद्युरिष्टिरित्याहुर्विप्रावाजसनेयिनः ॥

इतिखर्विका

[१०९] अथ दिनसंबंधेनेष्ट्यभिधानं

षोडशेऽहन्युत्तमेष्टिर्मध्या पञ्चदशेऽहनि ।
चतुर्दशे जघन्येष्टिः पापा सप्तदशेऽहनि ॥

बौधायनस्तु

सप्तदशे त्रयोदशेऽह्नि च औपवसथं कर्म प्रतिषेधति ॥

यत्रौपवसथं कर्म यजनीयात्त्रयोदशं ।
भवेत्सप्तदशं चापि तत्प्रयत्नेन वर्जयेत् ॥

यद्यपि त्रयोदशे सप्तदशे वौपवसथं न प्राप्नोति तथापि स्वविहितकालस्तुत्यर्थोऽयं नित्यानुवादः ॥ नांतरिक्षे न दिवीति वत् ॥ [११०] केचित्त्वागामिपर्वपर्यालोचनया पूर्वेष्टिदिननिश्चय इत्याहुः ॥ तदयुक्तं । आगामिपर्वपर्यालोचनया तु तिथीनां क्षयवृद्धिवशात् कदाचिद्द्वितीयायां कदाचिच्चतुर्दश्यामिष्टिः प्राप्नोति ॥ तथाऽनुष्ठाने विधिवैगुण्यं स्यात् अतो नागामिपर्वपर्यालोचनया उपयोगइत्यलमतिप्रपञ्चेन ॥ एवं प्रकृतिर्विचारिता ॥

## [१११] अथ विकृतीष्टिकालोनिर्णीय ते.

दर्शपूर्णमासेष्टिः प्रकृतिः वैश्वानर्यादयो विकृतयः ॥ यइष्टया पशुना सोमेन यजेत सोऽमावास्यायां पौर्णमास्यां वा यजेत ॥ इदं विकृतिविषयम् ॥ प्रकृतिर्दर्शपूर्णमासेष्टिः प्रतिपदि क्रियते ॥ पूर्वाण्हे पर्वसमाप्तौ प्रातरेव प्राप्तयोः प्रकृतिविकृत्योः का पूर्वं कर्तव्येत्यपेक्षायामापस्तंब आह ॥ प्रकृतेः पूर्वोक्तत्वादपूर्वमंते स्यादिति ॥ अपूर्वा विकृतिरंते स्यात् ॥ [११२] अपराण्हे पर्वस-

नाप्तावपि परेद्युः प्रतिपदि यागकालाभावे पर्वसंधिदिन एव प्रकृतिविकृतियागौ कर्तव्यावित्येवमर्थंकारिका स्पष्टं वक्ति ॥

यदा प्रातः प्रतिपदस्त्रिभागोऽपि न लभ्यते ।
स पर्वसंधिः पक्षादिनिमित्ते यागकर्मणि ॥

पर्वसंधि पर्वेति प्राच्यैर्व्याख्यातं ॥

क्षीरस्वामिग्रन्थे

तदा स दिवसः प्रकृतिविकृतियागे पर्वनिमित्ते विकृतियागे पक्षादिनिमित्ते प्रकृतियागे स्यात् । आगन्तूनामंते निवेश इति न्यायेन विकृतिरंते भवति ॥

कात्यायनः

आवर्त्तनात्प्राग्यदिपर्वसंधिः कृत्वा तु तस्मिन्प्रकृतिं विकृत्याः ।
तदैव यागः परतोयदि स्यात्तस्मिन्विकृत्या प्रकृतेः परेद्युः ॥

तस्मिन्दिने प्रकृतियागः तदैव विकृत्याःसंबंधी यागः स्यात् । आवर्त्तनात्परतो यदि पर्वसंधिः स्यात्तस्मिन्संधिदिने विकृत्याः संबंधीयागः स्यात् । परेद्युः प्रकृतेः संबंधी यागः स्यादित्यर्थः ॥

[?]शावप्युक्तं

अर्थादन्हो भवति नियतः पर्वसंधिःपरस्तात्
कृत्वातस्मिन्नहनि तु पशुः सद्य एव त्र्यहं वा ।
आरभ्याथ प्रकृतिरथ चेत्पर्वसंधिः पुरस्तात्
कृत्वातस्मिन्प्रकृतिमथ तु स्यात्पशुः सद्य एव ॥

स्मृत्यर्थसारे

आवर्त्तनात्पुरा संधौ प्रकृतिं समाप्य विकृतिः कार्या ॥
ऊर्ध्वं संधौ विकृतिं समाप्य प्रकृतेः प्रारंभः ॥ आग्रयणेष्टिका-

ले यद्यमावास्या संपद्येत तर्हि अमावास्यायागानंतरमाग्रय
णेष्टिः ॥ यदि पौर्णमासी संपद्येत तर्हि आग्रयणेष्ट्यनंतरं पौ
र्णमासयाग इति ॥

[११३]अथ वा पूर्वपक्षे नक्षत्रमुद्दिश्य यस्मिन्नक्षत्रे का
मयेत तस्मिन्यजेत इतिकौषीतकीः ॥ आग्रयणं पर्वालाभे
शुक्लपक्षे देवनक्षत्रे कार्यमिति स्मृत्यर्थसारे । समानतंत्रं वा
दर्शपूर्णमासाभ्यामिति शांखायनः । एवं प्रकृति विचारित॥

कृतेऽचलद्विवेदेन ग्रंथे निर्णयदीपके ।
प्रकृत्याश्च विकृत्याश्च यागेजातोविनिर्णयः ॥

---

## [११४]अथामावास्या श्राद्धे पिंडनिर्णयः ॥

अमावास्याश्राद्धप्रसंगादागतं किंचिन्निरूप्य पुनस्तद्विषयं निरू-
प्यते ॥ शंखायनेन तु अमावास्या श्राद्धप्रकरणे भूक्तवत्सु पिंडा-
न्दद्यात्पुरस्तादेक इति ॥ साग्निनिरग्निसाधारणं गृह्यस्मृता-
वुक्ता पुनः सूत्रे सूचितं ॥ नाभ्धावृत्तिः पिंडपितृयज्ञस्यास्ती-
ति ॥ एतत्सूत्रं भाष्यकृता पितृयज्ञे कृतत्वात्साग्निना दर्शश्राद्धे
पुनः पिंडा न कर्तव्या इति वृद्धसंप्रदाय इति व्याख्यातं ॥

[११५] तथा सति गृह्यकारिकाकारः

पितृयज्ञे कृतत्वाच्च पुनः श्राद्धे तु दार्शिके ।
न स्युः पिंडा वदन्ति स्म वृद्धास्तानुत्तरं त्विदं ॥
अग्नौ करणपिंडादि श्राद्धे स्यादतिदेशतः ।
कृतेऽपि पिंडदाने स्यात्सिद्धे सूत्रस्य सूत्रणात् ॥
उक्तं तत्र भवद्भिर्यद्भाष्ये स्याद्वृद्धकारणात् ।

अग्नौ करणपिंडानां दर्शे नेष्टा पुनः क्रिया ॥
तत्र चैके पठन्ति स्म अन्यार्थे स्वात्मनः क्रिया ।
दृष्टा श्राद्धेऽथ यद्वृद्धसंप्रदायस्य भाषणं ॥
न तदस्मन्मतं वृद्धा भ्रांतास्तदिति भाषितं ।
मासे दर्शेन यागः स्यादयने कुंडपायिनाम् ॥
सकृत्क्रिया पिंडयज्ञे इत्येवास्माभिरुच्यते ।
११६ न च सामान्यतो दृष्टमतिदेशमपीष्यते ॥
मासि मासीत्युपक्रम्य यत आहात्र सूत्रकृत् ।
अग्नौ कृत्वा न चेद्विप्रान्पितृनुद्दिश्य भोजयेत् ॥
अग्निकर्म कुतस्तस्य इत्याकांक्षा यदा तदा ।
कालैक्यात्स्वयमेवैषः श्रौतकल्प उपास्थितः ॥
तत्र सिद्धे पुनः सूत्रे कृता शङ्का निवृत्तये ।
कल्पो व्याख्यात इति यस्तस्माच्छ्राध्धे पुनः क्रिया ॥
श्राध्यान्ते व्रतमश्नीयाद्दम्पती इति तत्समामिति ।

## इति दर्शे पिंडविधिः

११७ अथ साग्निनिरग्न्यादीनां दर्शाष्टकादिश्राद्धे निमित्ततः पिंडाभाव उच्यते॥ तदाह काष्णर्याजिनिः ॥

मौंजीबंधाद्विवाहाच्च वर्षार्धं वर्षमेव वा ।
पिंडान्सपिंडा नो दद्युः सपिंडीकरणादृते ॥

अत्र सपिंडीकरणे पिंडविधानात् तत्पूर्वेषामुत्क्रान्तिप्रभृतीनां श्राद्धानामर्थात्पिंडविधानमनुज्ञानामिति ॥ उद्वाहादि कृतेऽपि महालयगयामृताहेषु पिंडान्दद्युः ॥

तदुक्तं

महालये गयाश्राद्धे माता पित्रोर्मृतेऽहनि ।

कृतोद्वाहोऽपि कुर्वीत पिंडनिर्वपणं सुत इति ॥

गयाशब्देन तीर्थान्युपलक्ष्यन्ते॥ ११८ मृताहेऽपि मातापित्रो स्तद्व्यतिरिक्तानामपि च मृताहे अनुमासिकेषु च ॥

संग्रहेऽपि

विवाहोपनयादूर्ध्वं वर्षं वर्षार्धमेव वा ।

न कुर्यात्पिण्डनिर्वापं न दद्यात्करणानि च ॥

करणानि आवाहनार्घ्यादीनि ॥ विवाहादिनिमित्तेनोक्तकाल- पर्यंतममावास्याष्टकादिषु संकल्पश्राद्धं कुर्यात् ॥ पिंडपितृयज्ञ- स्तु श्रुतिबलाद्भवति ॥

॥ इतिपिंडनिर्णयः ॥

## ॥ अथवैश्वदेवनिर्णयः ॥

श्राद्धदिवसे वैश्वदेवाख्यं कर्म श्राद्धात्पूर्वं पश्चाद्वेति संदेहे साग्निकनिराग्निकविषये व्यवस्थोच्यते ॥

शालङ्कायनः

श्राद्धात्प्रागेव कुर्वीत वैश्वदेवं तु साग्निकः ।

एकादशाहिकं मुक्त्वा तत्र ह्यन्ते विधीयते ॥

भविष्यत्पुराणे

मासान्ते कर्म निर्वर्त्य वैश्वदेवं तु साग्निकः ।

पिंडयज्ञं ततः कुर्यात्ततोऽन्वाहार्यकं बुधः ॥

१२० भिन्नान्नेन तु वैश्वदेविकमनु श्राद्धं चरेत्साग्निकः ।

पश्चाद्भूतमखादीति दीपिका ॥ वैश्वदेवो भिन्नपाकादिति का-रिका ॥ दर्शे नैमित्तिकक्षयाहश्राद्धे प्राप्ते तच्छ्राद्धानंतरं पिंड-पितृयज्ञादिकं कुर्यात् ॥

तदुक्तं स्मृत्यंतरे

दर्शे नैमित्तिके प्राप्ते श्राद्धे नैमित्तिकादनु ।
वैश्वदेवक्रिया पूर्वं दर्शश्राद्धं समाचरेत् ॥
नष्टचन्द्रे यदा काले क्षयाहदिवसो भवेत् ।
वैश्वदेवं क्षयाश्राद्धं कृत्वा प्राक् दर्शकर्मणः ॥

एतत्साग्निकविषयं॥

निरग्निकस्तु मत्स्यपुराणे

उच्छेषणं तु तत्तिष्ठेद्यावद्विप्रा विसर्जिताः ।
वैश्वदेवं ततः कुर्यान्निवृत्ते श्राद्धकर्मणि ॥

[१२१] स्मृत्यंतरे

यदा श्राद्धं पितृभ्यस्तु दातुमिच्छति मानवः ।
वैश्वदेवं ततः कुर्यान्निवृत्ते श्राद्धकर्मणि ॥

निबंधान्तरे

वृध्धावादौ क्षये चान्ते मध्ये जुह्वति पार्वणे ।
पिंडांतेऽपरपक्षे तु वैश्वदेवविधिः स्मृतः ॥
[१२२] याजुषाः सामगाः पूर्वं मध्ये श्राद्धेषु बह्वृचाः ।
अथर्वाः पाकशेषेण वैश्वदेवं तु कारयेत् ॥
आदौ यत्नेन कर्तव्यो वैश्वदेवस्तु पार्वणे ।
एकोद्दिष्टे निवृत्ते तु तदन्नरहितेन वा ॥

प्रागेव केचिदिच्छान्ति पश्चाद्ब्राह्मणभोजनं ।

पितॄन् संतर्प्य विधिवद्बलिं पश्चाद्दिनिः क्षिपेत् ॥ इति ॥

इमे पक्षा यथा कुलाचारमाश्रणीयाः ॥

[१२३]पैठीनसिः

श्राद्धं निर्वर्त्य विधिवद्वैश्वदेवादिकं ततः ।

कुर्याद्भिक्षां ततो दद्याद्हन्तकारादिकं तथा ॥

ार्कंडेयः

ततो नित्यक्रियां कुर्याद्भोजयेच्च तथातिथीन् ।

ततस्तदन्नं भुञ्जीत सह भृत्यादिभिर्नरः ॥

ततस्तेन श्राद्धशेषेणान्नेन नित्याक्रिया यत्र साध्या अतो नित्य-श्राद्धमपि तेनैव कार्यं ॥ [१२४] यत्तु भुञ्जीत पितृसेवितमित्य-स्य कुत्रचिदेकोद्दिष्टश्राद्धशेषभोजने निषेध उक्तः॥ स नवश्रा-द्धादिविशेषविषयः ॥

तदुक्तं

नवश्राद्धे तु यच्छिष्टं गृहे पर्युषितं च यत् ।

दम्पत्योर्भुक्तशेषं च न भुंञ्जीत कदाचनेति ॥

[१२५]स्मृत्यर्थसारे ॥ नित्यश्राद्धे वैश्वदेवं गृहबलिं च पूर्वमेव अ-न्यश्राद्धे सर्वं पश्चादेव कार्यं ॥ दर्शश्राद्धे वैश्वदेवं पूर्वं पश्चा-द्वेति विकल्पः ॥ साग्नि निरग्निविषये व्यवस्थितः ॥

इतिश्राद्धेवैश्वदेवनिर्णयः

[२५]अथ ब्राह्मणसंपत्या श्राध्धसंपत्तिरिति श्राध्धार्हा ब्राह्म-ा उच्यन्ते ॥

तदुक्तं

अग्र्याः सर्वेषु वेदेषु श्रोत्रियो ब्रह्मविद्युवा ।
वेदार्थविज्ज्येष्ठसामात्रिमधुस्त्रिसुपर्णकः ॥

वेदेषु अग्र्याः अस्खलिताध्यायिनः ॥ ज्येष्ठसामेति सामविशेषस्तदध्ययनयुक्तः ॥ ज्येष्ठसामा ॥ त्रिमधुरिति ऋग्वेदव्रताचरणेन ऋग्वेदैकदेशाध्यायी त्रिमधुः ॥ एवं यजुरेकदेशव्रताचरणयुक्तस्त्रिसुपर्णक इति ग्रंथान्तरे व्याख्यातं ॥ शेषं सुगमं ॥

तथा

स्वस्त्रीय ऋत्विक् जामाता याज्यश्वशुरमातुलाः ।
त्रिणाचिकेतदौहित्रशिष्यसंबंधिबांधवाः ॥

स्वस्त्रीयो भगिनीसुतः ॥ यजुर्वेदैकदेशाध्यायी त्रिणाचिकेतः॥

तथा

१२७कर्मनिष्ठास्तपोनिष्टाः पंचाग्निव्रतचारिणः ।
पितृमातृपराश्चैव ब्राह्मणाः श्राध्धसंपदे ॥

चकारात् ज्ञाननिष्ठाः ब्राह्मणा न क्षत्रियाः पूर्वोक्ता वेदाध्यायिनो अक्षय्यसंपत्तिहेतवोभवन्तीति ब्राह्मणाः प्रशस्ताः ॥

अथानिषिध्धाः कथ्यन्ते ॥

रोगी हीनातिरिक्ताङ्गः काणः पौनर्भवस्तथा ।
अवकीर्णी कुण्डगोलौ कुनखी श्यावदंतकः ॥

महारोगवान् काणश्चक्षुर्वर्जनात् अंधबधिर विध्धप्रजननखलातिदुष्कर्मप्रभृतयो वर्जिताः ॥ पुनर्भूलक्षणं ॥

अन्यदत्ता तु या कन्या दत्वान्यस्मै प्रदीयते ।
तस्याश्चैव न भोक्तव्यं पुनर्भूः कीर्त्यते बुधैः ॥

तस्या अपत्यं पौनर्भवः ॥ स्खलितब्रह्मचर्योऽवकीर्णी ॥ कुण्डगोलौ जीवति भर्तरि अन्यस्माज्जायते मृते वा तौ ॥ तदुक्तं

परदारेषु जायेते द्वौ सुतौ कुण्डगोलकौ ।
पत्यौ जीवति कुण्डः स्यान्मृते भर्तरि गोलकः ॥

इत्येवं लक्षणौ ॥ श्यावदन्तः कृष्णदन्तः ॥
१२८ तथा

भृतकाध्यापकः क्लीबः कन्यादूष्यभिशस्तकः ।
मित्रध्रुक् पिशुनः सोमविक्रयी परिविन्दकः ॥

मूल्येनाध्यापयति स भृतकाध्यापकः । मूल्यं दत्वाधीते स क्लीबः । नपुंसको वा । कन्यार्थे असत्यकर्त्ता कन्यादूषी । विद्यमानेनाविद्यमानेन वा महादोषेण युक्तः अभिशस्तकः । मित्रद्रोही । परदोषवक्ता पिशुनः । परिविन्दक इति ज्येष्ठे सोदरे अधिकारिणि सति यः पूर्वं दारपरिग्रहं करोति अग्नि-होत्रं च करोति स परिवेत्ता। ज्येष्ठः परिवेत्ता उभावश्राध्धीयौ । तदाह मनुः

दाराग्निहोत्रसंयोगं यः करोत्यग्रजे स्थिते ।
परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः ॥

तयोर्दातृयाजकावपि ॥

परिवित्तिः परिवेत्ता च यया च परिविद्यते ।
सर्वे ते नरकं यान्ति दातृयाजकपञ्चमाः ॥इति वचनात् ॥

१२९ तथा

मातापितृगुरुत्यागी कुण्डाशी वृषलात्मजः ।

परपूर्वापतिः स्तेनः कर्मदुष्टाश्च निन्दिताः ॥

एवं भार्यासुतत्याग्यपि

वृध्धौ च मातापितरौ साध्वी भार्या सुतः शिशुः ।
अथ कार्यशतं कृत्वा भर्तव्या मनुरब्रवीत् ॥

इतिसमाननिर्देशात् ॥

कुण्ड इति गोलकस्याप्युपलक्षणं ॥ तयोरन्नमश्नातीति वृषलो निर्धर्मः तत्सुतो वृषलात्मजः परपूर्वा पुनर्भूस्तस्याः पतिः । स्तेनश्चोरः । कर्मदुष्टाः शास्त्रविरुध्धकारिणः । चकारात् कितवद्देवलकप्रभृतयः ॥ एते निन्दिताः ॥

अथ चेन्मंत्रविद्युक्तः शारीरैः पङ्क्तिदूषकैः ।
अदूष्यन्तं यमः प्राह पंक्तिपावन एव सः ॥

इत्यादि ब्राह्मणसंपत्तिः प्रशस्तालाभे निषिध्धरहिता ग्राह्या इति ॥

१३० अथ श्राध्धानुष्ठानार्हाः प्रदेशा अभिधीयन्ते ॥ भूमिः श्राध्धे पञ्चगव्यैर्लिप्तेति वायुपुराणे ॥

मत्स्यः

गोमयेनोपलिप्तायां गोमूत्रेण तु मण्डले ।

वाराहपुराणे

वस्त्रशौचादि कर्तव्यं श्वः कर्त्तास्मीति जानता ।
स्थानोपलेपनं भूमौ कृत्वा विप्रान्निमंत्रयेत् ॥

देवलः

श्वः कर्त्तास्मीति निश्चित्य दाता विप्रान्निमंत्रयेत् ॥
हविष्यान्नं सकृद्भुक्त्वा सर्वभुक्तजने गृहे ॥

असंभवे परेद्युर्वा ब्राह्मणांस्तान्निमंत्रयेत् ।

दक्षिणप्रवणे देशे श्राध्धं कुर्याच्च पैतृकं ॥

पितृणां पावनो देशः स प्रोक्तोऽक्षयतृप्तिकृत् ।

परगृहे श्राध्धं तु भाटकादिना कर्तव्यं ॥ अन्यथा दोषश्रवणात् ॥ तदाह यमः

परकीयप्रदेशेषु पितृणां निर्वपेत्तु यः ।

तद्भूमिस्वामिपितृभिः श्राध्धं कर्म विहन्यत इति ।

तीर्थानि सर्वेषां साधारणानि फलानंत्यदायीनि च ॥

[31] तदुक्तंपुराणसंग्रहे

वनानि गिरयो नद्यस्तीर्थान्यायतनानि च ।

देवखातश्च गर्ताश्च न स्वामी तेषु वर्ततइति ॥

आयतनानि देवालयानि तथा

गङ्गाद्वारे प्रयागे च नैमिषे पुष्करेऽर्बुदे ।

सन्निहत्यां गयायां च श्राध्धमक्षय्यतां व्रजेत् ॥

विष्णुधर्मोत्तरे

दक्षिणप्रवणे देशे तीर्थादौ वा गृहेऽपि च ।

भूसंस्कारादिसंयुक्ते श्राद्धं कुर्यात्प्रयत्नत इति ॥

भूसंस्कार उपलेपनादि

## इतिश्राध्धप्रदेशाः

---

## अथ श्राध्धकालः

मीताक्षरादौ सामान्येनापराण्हे श्राध्धमित्युक्त्वा कुतपे प्रारभ्यत इति स्थापितम् ॥

कुतपस्तु

अन्हो मुहूर्ता विज्ञेया दश पञ्च च सर्वदा ।
तत्राष्टमो मुहूर्तो यःसकालः कुतपः स्मृतः ॥
मध्यान्हे सर्वदा यस्मान्मंदी भवति भास्करः ।
तस्मादनन्त फलदस्तत्रारंभो विशिष्यते ॥

अन्यदपि कुतपसप्तकं ॥

मध्यान्हः खड्गपात्रं च तथा नेपालकम्बलः ।
रौप्यं दर्भास्तिला गावो दौहित्रश्चाष्टमः स्मृतः ॥

अष्टमो मुहूर्तो मध्यान्हः अन्होमध्यत्वात् । खड्गो नाम पर्वतीयो महाजीव विशेषः ॥ तदास्थिनिर्मितं पात्रं खड्गपात्रं॥ पर्वतीयछागविशेषरोमनिर्मितः कंबलो नेपालकंबलः । रक्त-कंबल इति प्रसिध्धः ॥ रौप्यं पात्रे दक्षिणार्थे च । [१३३]

पारस्करः

पितॄणां राजतं पात्रमथ वा रजतान्वितम् ।

दक्षिणापि ॥

हिरण्यं देवतानां च पितॄणां रजतं तथा ।

दर्भास्तु आचारतिलके

न कुशं कुशमित्याहुः समूलः कुश उच्यते ।
छिन्ना दर्भास्तु विज्ञेया अग्रं तु कुतप स्मृतः ॥

तिलाः कृष्णातिलाः । गावस्तु हविः प्रदानद्वारा ।

संवत्सरं तु गव्येन पयसा पायसेन वेति स्मरणात् ॥

दौहित्रो दुहितृसुतः ।

अथवा

वनस्पतिगते सोमे यावत् स्वादति गौस्तृणम् ।
दुहिता नाम सा तस्याः धूतं दौहित्रमुच्यते ॥

एते कुतपाः । यतः

पापं कुत्सितमित्याहुस्तस्य संतापकारिणः ।
अष्टावेते यतस्तस्मात्कुतपा इति विश्रुताः ॥

इति श्राध्धकालः

[१३४] अथ श्राद्धकालनिरूपणप्रसंगेन क्षयाहश्राद्धनिर्णयः प्रस्तूयते ॥ क्षयाहस्वरूपं तु स्मृतावुक्तम् ॥

मासपक्षतिथिस्पष्टे यस्मिन्यो म्रियते यदि ।
प्रत्यब्दं तु तथाभूतं क्षयाहं तस्य तं विदुः ॥

क्षयाहोमृताहः ॥ अब्दमब्दं प्रति प्रत्यब्दं कर्तव्यमिति योगीश्वरादिभिरुक्तं ॥

[१३५] श्राद्धस्वरूपं तु ब्रह्माण्डपुराणे

देशे काले च पात्रे च श्रद्धया विधिना च यत् ।
पितृनुद्दिश्य विप्रेभ्यो दत्तं श्राद्धमुदाहृतम् ॥

मरीचिः

प्रेतपितॄन्समुद्दिश्य भोज्यं यत् प्रियमात्मनः ।
श्रद्धया दीयते यत्तु तच्छ्राद्धं परिकीर्तितम् ॥

तद्द्विविधम् ॥एकोद्दिष्टं पार्वणं चेति ॥ तयोः स्वरूपमाह ॥

काण्वः

एकमुद्दिश्य यच्छ्राद्धमेकोद्दिष्टमुदीरितम् ।
त्रीनुद्दिश्य यदा श्राद्धं पार्वणं मुनयो विदुरिति ॥

तथा

पितामहे तु वै श्राद्धे पितरं न परित्यजेदिति ।

आचारतिलकोक्तेन पितामहश्राद्धं पार्वणेन प्राप्तं तथा

एकोद्दिष्टं न कर्तव्यं पितामह्याः कदाचन ।

एकोद्दिष्टं न कर्तव्यं यदि माता च जीवती तिव्यवस्था॥

तथा

सापत्नमातुः कुर्वीत एकोद्दिष्टं न पार्वणं ।

अपुत्राया विशेषेण पार्वणं सह या मृता ॥

[१३७] तथा

अमायां तु क्षयो यस्य प्रेतपक्षेऽथवा पुनः ।

पार्वणं तस्य कर्तव्यं नैकोद्दिष्टं कदाचन ॥

इत्यनेन सामान्येन सर्वेषां पार्वणे प्राप्ते स्मृत्यंतरोक्तेन विशेषवचनेनेदं बाध्यते ॥ वचनं तु

प्रेतपक्षे प्रमीतौ चेत्पित्रोः कुर्वीत पार्वणं ।

पितृव्यभ्रातृपुत्राणामेकोद्दिष्टं न पार्वणं ॥

एवं अमावास्यायां मृतेऽपि पित्रोः प्रत्याब्दिकं पार्वणविधिना कुर्यात् ॥ तथा [१३८] मातामहस्य पुत्रसंतानाभावे दौहित्रोऽपि तत्क्षयाहश्राद्धं स्वपितृक्षयाहश्राद्धवत्कुर्यात् ॥ तदुक्तं मिताक्षरायाम् ॥

औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुतः ।

इत्यनेन पुत्रिकासुतस्य दौहित्रस्य औरसपुत्रसमानत्वेनाभिधानात् ॥

तथा च वसिष्ठः

अपुत्रपौत्रसंताने दौहित्रा धनमाप्नुयुः ।

पूर्वेषां तु स्वधाकारे पौत्रदौहित्रिका मताः ॥

इत्येतदपि पौत्रदौहित्रयोस्तुल्यत्वविधायकं ॥ अन्येषा-मेकोद्दिष्टमेवोक्तं ॥

[१३९] तथा वृद्धवासिष्ठोऽपि

सपिंडीकरणादूर्ध्वं यत्र यत्र प्रदीयते ।
भ्रात्रे भगिन्यै पुत्राय स्वामिने मातुलाय च ॥
मित्राय गुरवे श्राद्धमेकोद्दिष्टं न पार्वणं ।

इत्यादिवाक्यैः सत्यामपि व्यवस्थायाममावास्याप्रेतपक्ष-व्यतिरिक्ते मातापित्रोः क्षयाहे प्रत्यब्दं क्रियमाणं श्राद्धं एको-द्दिष्टं पार्वणं चेति विचारस्तद्‌व्यवस्थ इति तत्रोभयवचनानि ॥

पैठीनसिः

एकोद्दिष्टं हि कर्तव्यमौरसेन मृतेऽहनि ।
सपिण्डी करणादूर्ध्वं मातापित्रोर्नपार्वणं ॥

स्मृत्यंतरेऽपि

वर्षे वर्षे तु कर्तव्या मातापित्रोस्तु सत्क्रिया ।
अदैवं भोजयेच्छ्राद्धं पिण्डमेकं तु निर्वपेत् ॥

इत्यादीनी प्रतिसंवत्सरमेकोद्दिष्टविधायकानि ॥ [१४०]

पार्वणपरत्वे शातातपः

सपिण्डीकरणं कृत्वा कुर्यात्पार्वणवत्सदा ।
प्रतिसंवत्सरं विद्वांश्छागलेयोदितोविधिः ॥

जमदग्निरपि

आपद्य सह पिण्डत्वमौरसोविधिवत्सुतः ।
कुर्वीत दर्शवच्छ्राद्धं मातापित्रोः क्षयेऽहनि ॥ इति ॥

दर्शवत्पार्वणवत् ॥ विज्ञानेश्वरेणेत्यादि क्षयाहविषयविरुद्ध वचनदर्शनात् ॥ पार्वणं सन्न्यासिविषयं ॥ अथवा अमावास्या प्रेतपक्षाहविषयं संभाव्यते इत्युक्तापि पुनरुक्तं यद्यप्यन्यत्र क्षयाहविषये पार्वणैकोद्दिष्टयोर्विकल्प ॥ स्तथापि वंशसमाचारव्यवस्थायां सत्यां व्रीहियववत् व्यवस्थित इति स्थापितं ॥ विहितं प्रतिषिद्धं च विकल्पितं भवतीति न्यायेनेति ॥ स्कान्दे नागरखंडे नागरद्विजविशेषाणां प्रतिसंवत्सरं श्राद्धमेकोद्दिष्टमेवेत्युक्तं॥

अनग्निरग्नौकरणं क्षयाहेऽपि च पार्वणं ।
प्रतिपात्रं भस्मरेखां न कुर्यान्नागरद्विज इति ॥

विधवा तु स्वभर्तृक्षयाहश्राद्धं पुत्रवत्कुर्यात् ॥
तदुक्तं स्मृत्यंतरे

अपुत्रा पुत्रवद्दद्यात्पुत्रवत्यपि भर्तरि ।
श्राध्धं पिण्डं जलं चैव जलमेव तु पुत्रिणीति वचनात् ॥

क्षयाहश्राध्धप्रसक्तानुप्रसक्त किंचित्क्षयाहविषयं निर्णीय

[141]अथश्राध्यार्थ क्षयाहतिथिर्निर्णीयते

पितृश्राध्धतिथिरपराण्हव्यापिनीत्युक्तं॥तथा सति श्रुतिस्मृतिपुराणेषु चान्हो द्विधा त्रिधा चतुर्धा पञ्चधा विभागा उक्ताः ॥कुतपादिकालज्ञानार्थं पञ्चदशधाप्युक्तः॥ इति दिवसविभागप्रयोजनान्युक्तान्यमावास्यानिर्णयप्रकरणे ॥ तथापि त्रिधाविभागपक्षापराण्हपितृकार्यवचनानि पिंडपितृयज्ञपराणि इति स्पष्टमुक्त अनन्तभट्टादिषु ॥ श्रुतौ तु तत्प्रकरणे पाठात् अ-

न्हो द्विधाविभागे तु पूर्वाण्होदेवा अपराण्हः पितर इति शातपथी श्रुतिः ॥ [१४२] मनुस्तु दिनं द्विधा विभजति

यथा चैवापरः पक्षः पूर्वपक्षाद्विशिष्यते ।
तथा श्राध्धस्य पूर्वाण्हादपराण्हो विशिष्यते ॥

स्कंदपुराणमपि

आवर्त्तनात्तु पूर्वाण्हो ह्यपराण्हस्ततः परमिति ।

आवर्तनं मध्यान्हः ॥

मत्स्यपुराणे—अन्हो मुहूर्ता विज्ञेया दशपञ्च च सर्वदा ।
तत्राष्टमो मुहूर्तो यःस कालः कुतपः स्मृत इति ॥

गौतमः । प्रारभ्य कुतपे श्राद्धं कुर्यादारौहिणाद्बुधः ।
विधिज्ञो विधिमास्थाय रौहिणं तु न लङ्घयेत् ॥

नवमो मुहूर्तो रौहिणः ॥

रौहिणं लङ्घयेद्यस्तु ज्ञानादज्ञानतोऽपि वा ।
आसुरं तद्भवेच्छ्राद्धं पितृणां नोपतिष्ठति ॥

पार्वणश्राद्धमपि कुतपे प्रारभ्य रौहिणे समापयेदिति ॥

[१४३] तथा च मार्कंडेयः॥

शुक्लपक्षस्य पूवाण्हे श्राद्धं कुर्याद्विचक्षणः ।
कृष्णपक्षेऽपराण्हे तु रौहिणं तु न लङ्घयेत् ॥

अन्होऽपरमर्धमपराण्हः । त्रिधा विभागपक्षापराण्हे तु रौहिणानुप्रवेशाभावात् ॥ अत एव दिवसस्य चतुर्धा पञ्चधा विभागपक्षापराण्होऽप्यन्यप्रयोजनार्थ एवेति सूचितं ॥ प्रयोजनं चोक्तं दर्शनिर्णये ॥

आचारतिलके । ऊर्ध्वं शङ्कुं तदा कृत्वा यदा छाया न दृश्यते ।

सकालः कुतपस्तत्र पितृणां दत्तमक्षयम् ॥

चतुर्भागास्तु पूर्वाण्हेऽपराण्हे त्रय एव तु ।

पितृणां मध्यमो भागः स कालः कुतपः स्मृतः ॥

यत्तु—पूर्वाण्हे दैविकं श्राद्धमपराण्हे तु पार्वणम् ।

एकोद्दिष्टं तु मध्यान्हे प्रातर्वृद्धिनिमित्तकं ॥

[१४४] एतत् त्रिधाविभाग शङ्कोत्पादकमपि दर्शनिर्णये युक्त्या द्विधाविभागपरमभिहितं ॥ तथापि मध्यान्हे कुतपे एकोद्दिष्टं तत्पूर्वोत्तरभागौ पूर्वाण्हापराण्हावेवं वा द्विधापरं । अन्यथा कुतपरौहिणापराण्ह वाक्यैर्विरोधात् ॥ अमुमेवार्थमभिप्रेत्य हारीतेन पार्वणश्राद्धमपि कुतपकालेऽभ्यधायि

भूतविद्धाप्यमावास्या प्रतिपन्मिश्रितापि वा ।

पित्र्ये कर्मणि विद्वद्भिर्ग्राह्या कुतपकालिकी ॥

स्मृत्यंतरे—मध्यान्हे सर्वदा यस्मान्मंदीभवति भास्करः ।

तस्मादनन्तफलदस्तत्रारम्भो विशिष्यते ॥

[१४५] पुराणसमुच्चये

क्षयाहे तु पुनर्ग्राह्या मध्यान्हव्यापिनी तिथिः ।

स्मृतिरपि—कर्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः ।

तया कर्माणि कुर्वीत ह्रासवृद्धी न कारणं ॥

तथा चोक्तं—यो यस्य विहितः कालः कर्मणस्तदुपक्रमे ।

विद्यमानो भवेदङ्गं नोज्झितोपक्रमेण तु ॥

अत एव स्मृत्यर्थसारे कुतपकालव्यापिन्यां क्षयाहतिथौ श्राद्धं कार्यं ॥ असंभवे आरम्भः समाप्तिर्वा तत्तिथौ कुर्यादित्युक्तं ॥

अपराण्हः पितृणां तु यापराण्हानुयायिनी ।
सा ग्राह्या पितृकार्ये तु न पूर्वाण्हानुयायिनी ॥ इति ॥

इदं हारीतवचनं रौहिणेऽसमापनदोषदर्शनात् गौत्तमादिवचनसंमत्या कुतपकालिकदर्शश्राद्धस्य हारीतेनाप्यङ्गीकृतत्वाच्च ॥ कुतपपूर्वभागः पूर्वाण्हः । अपरो भागोऽपराण्ह इति द्विधाविभागपरं ॥ [१४६]अनन्तभट्टेनापि द्विधाविभागपरमिदं व्याख्यातं ॥ श्राद्धविषये मत्स्यपुराणेऽपि द्विधाविभाग उक्तः ॥

अपराण्हे तु संप्राप्ते अभिजिद्रौहिणोदये ।
यत्किंचिद्दीयते तत्र तदक्षय्यमुदाहृतम् ॥

अभिजित्कुतपः । रौहिणो नवमो मुहूर्तः । तस्मादुक्तवचननिकरपर्यालोचनया एकोद्दिष्टं पार्वणमपि च प्रत्याब्दिकादिश्राद्धं कुतपकालव्यापिन्यां क्षयाहतिथौ कार्यं ॥ नापराण्हमात्रव्यापिन्यामिति ॥ यत्पुनः प्रतिसांवत्सरिकश्राद्धे

दर्शं च पौर्णमासं च पितुः सांवत्सरं दिनम् ।
पूर्वविद्धमकुर्वाणो नरकं प्रतिपद्यत इति ॥

नारदीयपुराणे पूर्वविद्धत्वमभिहितं तद्दिवसपूर्वार्धात् प्रवृत्तायां पूर्वतिथौ वेदितव्यं ॥ [१४७]यत्तु बृहन्मनुवचनं

यस्यामस्तं रविर्याति पितरस्तामुपासते
तिथिं तेभ्यस्तदा दत्तस्त्वपराण्हः स्वयंभुवा ॥

तथा—अन्ह्यस्तमयवेलायां कलामात्रापि या तिथिः ।
सैव प्रत्याब्दिके ग्राह्या नोत्तरा पुत्रहानिदा ॥

अनयोरर्थः ॥ अन्हि दिवसमध्ये यास्तमयवेला सायान्हकालस्तत्र सायान्हे श्राध्धनिषेधात् ॥ गंगायां वसतीति

सामीप्यलक्षणया श्राध्धकालयोग्योऽपराण्हो लक्ष्यतेऽस्तमयशब्देन। तेनश्राध्धकालयोग्यमपराण्हं व्याप्य यास्तमये सायान्हे कलामात्रा भवति सा प्रत्याब्दिकश्राध्धे ग्राह्या नोत्तरा। श्राध्धकालायोग्यापराण्हव्यापिनी पुत्रहानिदा न ग्राह्या इत्यर्थः॥ अस्मिन्नेवार्थेऽनन्तभट्टोदाह्दतं॥ [१४८] स्मृत्यंतरवचनं—

अपराण्हः पितृणां तु यापराण्हानुयायिनी।
सा ग्राह्या पितृकार्ये तु न पूर्वाण्हानुयायिनी॥

एवं सति [illegible] त्रिधा पञ्चधा दिवसविभागापराण्हकालश्राद्धविधायका[illegible] श्रुतिपुराणवाक्यानि तानि तु पिंडान्वाहार्यकश्राध्धविषया[illegible] बोध्धव्यं न प्रत्याब्दिकविषयाणीति॥ क्षयाहविषये तु आरभ्य कुतपे श्राध्धमित्यादीनि बहूनि वाक्यानि द्विधा विभक्त दिवसपराणि सन्ति॥ क्षयाहश्राध्धतिथौ दिनद्वयेऽपिकुतपाद्यपराण्हव्यापित्वे वृध्धौ समतायां च परा खर्वदर्पौ परौपूज्याविति वचनात्॥ तिथिक्षये पूर्वा हिंसा स्यात्पूर्वकालिकीति॥ उभयत्रव्यापित्वे पूर्वा॥ अत्यंततिथिक्षये परदिने श्राध्धकालव्यापित्वासंभवे पूर्वा संभवे तु परा एव॥ यदुक्तं

विधिवाक्यसहस्त्रेभ्यः कालव्याप्तिर्बलीयसी।

स्वल्पस्य मुख्यस्य संभवे महतोऽपि गौणस्य ग्रहणं मीमांसकस्य न शोभते तस्मात्कुतपाद्यनुरोधेनैव प्रत्याब्दिकनिर्णय इति पूर्वा परा वा कुतपरौहिणयोगिनी क्षयाहतिथि स्तस्यां श्राद्धं कर्तव्यमिति क्षयाहनिर्णयः॥ [१४९] गौतमादिभिस्तु रौहिणं न तु लङ्घयेदित्युक्तं॥

कुतपादिमुहूर्तांस्त्रीन्यदा चरति भास्करः ।
स कालः कुतपस्तत्र पितॄणां दत्तमक्षयमिति ॥

मुहूर्त्तत्रयपर्यन्तं श्राद्धमित्यापस्तंबाभिप्रायः ॥ प्रवासादिना कुतपादिकाले श्राद्धसंपादनासमर्थो मुहूर्तपञ्चकपर्यन्तं श्राद्धं कुर्यात् ॥ तदुक्तं

कुतपादि मुहूर्तांस्त्रीन्यन्मुहूर्तचतुष्टयम् ।
मुहूर्तपञ्चकं ह्येतत्स्वधाभवनमिष्यते ॥

अतऊर्ध्वं सायान्हस्त्रिमुहूर्तःसर्वधर्मबहिष्कृत इति ॥ तत्र श्राद्धनिषेधाद्द्वितीयेऽन्हि श्राद्धं कुर्यात् ॥

पिण्डमात्रं प्रदातव्यमभावे द्रव्यविप्रयोः ।
श्राद्धाहनि तु संप्राप्ते भवेन्निरशनोऽपि वा ॥

## [150]अथश्राद्धकर्तुर्नियमाउच्यन्ते

दन्तधावनताम्बूले स्निग्धस्नानं च भोजनम् ।
रत्यौषधिपरान्नानि श्राद्धकृत्सप्त वर्जयेत् ॥

वाराहपुराणे—वस्त्रशौचादि कर्तव्यं श्वःकर्तास्मीतिजानता ।
स्थानोपलेपनं भूमौ कृत्वा विप्रान्निमंत्रयेत् ॥

बृहस्पतिः—उपवीती ततो भूत्वा देवतार्थं द्विजोत्तमान् ।
अपसव्येन पित्रर्थे स्वयं शिष्योऽथवा सुतः ॥

यमः—प्रार्थयेत प्रदोषान्ते भुक्तानशयितान्द्विजान् ।

देवलोऽपि—श्वः कर्ताऽस्मीति निश्चित्य दाता विप्रान्निमंत्रयेत् ।
निरामिषं सकृद्भुक्त्वा सर्वभुक्तजने गृहे ॥
असंभवे परेद्युर्वा ब्राह्मणांस्तान्निमंत्रयेत् ।

तथा—तथैव यंत्रितो दाता प्रातः स्नात्वा सहांबरः ।
आरभेत नवैर्भाण्डै रत्नारंभस्तु बांधवैः ॥
तिलानाविकिरेत्तत्र सर्वतो बंधयेदजान् ।
असुरोपहतं सर्वं तिलैः शुध्यत्यजेन वा ॥ इति ॥
तथा—श्राद्धीयेऽन्हि दशम्यां च द्वादश्यां व्रतवासरे ।
एकादश्यां व्यतीपाते तैलं मांसं च वर्जयेत् ॥

इति श्राध्धकृन्नियमाः॥

---

## अथ श्राध्धभुङ्नियमाः

पुनर्भोजनमध्वानं भारोऽध्ययनमैथुनम् ।
दानं प्रतिग्रहो होमः श्राध्धभुक्त्वष्ट वर्जयेत् ॥
स्मृतिसारे—आमंत्रितश्चिरं नैव कुर्याद्विप्रः कथंचन ।
देवतानां पितॄणां च दातुरन्नस्य चैव हि ॥
चिरकारी भवेद्दोषी पच्यते नरकाग्निना ।
सक्रिया देशकालौ च द्रव्यं ब्राह्मणसंपदः ॥
पञ्चैतानि हि कुप्यन्ते ब्राह्मणे चिरमागते॥
प्रचेताः—श्राध्धभुक् प्रातरुत्थाय प्रकुर्याद्दन्तधावनम् ।
श्राध्धकर्ता न कुर्वीत दन्तानां धावनं बुध इति ॥
स्मृतिः—दशकृत्वः पिबेदापो गायत्र्या श्राध्धभुक् द्विजः ।
ततः संध्यामुपासीत शुध्येत्तु तदनन्तरमिति ॥
सामान्यश्राध्धभोजने॥ श्राद्धविशेषप्रायश्चित्तविशेषं वक्ष्यामः॥

इति श्राध्धभुङ्नियमाः

## ॥ अथ श्राद्धा कृत्यम् ॥

[१५२] अथ आमंत्रितानां ब्राह्मणानां श्राध्धकर्तुश्च कृत्यमुच्यते॥

तताेऽनिवृत्ते मध्यान्हे कृत्तरोमनखान्द्विजान् ।
अभिगम्य यथामार्गं प्रयछेद्दन्तधावनम् ॥

ततः अनिवृत्ते अनिष्पन्ने मध्यान्हे इति प्रचेतोवचनाद्विज्ञायते ॥ यदाह प्रचेताः

तैलमुद्वर्तनं स्नानं दद्यात्पूर्वाण्ह एव तु ।
श्राध्धभुग्यो नखश्मश्रुछेदनं चैव कारयेत् ॥

स्मृतिसारे—तैलमभ्यञ्जनं स्नानं पानीयं च पृथग्विधम् ।
पात्रैरौदुंबरैर्दद्याद्वैश्वदेविकपूर्वक ॥

उदुंबरैस्ताम्रपात्रैः ॥

वायुपुराणे—सुरभीणि च स्नानानि गंधवंति तथैवहि ।
श्राध्धेष्वेतानि यो दद्यादश्वमेधफलं भवेत् ॥

[१५३] यमः—ततः स्नानान्निवृत्तेभ्यः प्रत्युत्थाय कृताञ्जलिः ।
पाद्यमाचमनीयं च संप्रयच्छेद्यथाक्रममिति ॥

वैश्वदेविकपूर्वकमित्यनेन पार्वणश्राध्धं सूचितं॥ पार्वण श्राध्धे विश्वेदेवा भवन्ति॥ यथाक्रममित्यनेन क्रमः सूचितः॥ पूर्वं वैश्वदेविकब्राह्मणानां पश्चात्पितृब्राह्मणानां पाद्यादिकमिति॥ पार्वणं तत्कुतपापराण्हे आरभ्यते ॥ अत एव शङ्खः ॥ प्रयतोऽपराण्हे शुचिः शुक्लवासा दर्भहस्तः स्वागतमित्यागतान् ब्रुयात् ॥

शातातपः—उदङ्मुखस्तु देवानां पितृणां दक्षिणामुखः ।
पादप्रक्षालनादि श्राध्धं कुर्यात् । द्विजानां रोमनख-

निकृन्तनादिकं तु पार्वणैकोद्दिष्टयोः साधारणमिति निमंत्रितब्राह्मणविधिः ॥

### [१५४] अथ श्राद्धे ब्राह्मण संख्या ॥

वैश्वदेवे द्वौ विप्रौ प्राङ्मुखौ पित्र्ये त्रीनुदङ्मुखानुपवेशयेत्। अथवा एकं दैवे एकं पित्र्ये। एवं मातामहानां वैश्वदेवं तंत्रं वा ॥

तदाह याज्ञवल्क्यः ॥

द्वौ दैवे प्राक् त्रयः पित्र्ये उदगेकैकमेव वा ।
मातामहानामप्येवं तंत्रं वा वैश्वदेविकम् ॥

तथा ॥ पितरो यत्र पूज्यन्ते तत्र मातामहा अपि ।
अविशेषेण कर्त्तव्यं विशेषान्नरकं व्रजेत् ॥

द्वौ विप्रौ एकं दैवे एकं पित्र्ये ॥

वासिष्ठस्तु—यद्येकं भोजयेच्छ्राद्धे दैवं तत्र कथं भवेत् ।
अन्नं पात्रे समुध्धृत्य सर्वस्य प्रकृतस्य च ॥
देवतायतने कृत्वा ततः श्राद्धं प्रवर्तयेत् ।
प्रास्येदग्नौ तदन्नं वा दद्याद्वा व्रतचारिणे ॥

स्मृतिसारे—द्वौ दैवेऽथर्वणौ विप्रौ प्राङ्मुखौ तु निवेशयेत् ॥
त्रीन् पित्र्ये तूदङ्मुखांश्च बह्वृचाध्वर्युसामगान् ।
सत्क्रियां देशकालौ च द्रव्यं ब्राह्मणसंपदः ॥
पञ्चैतान्विस्तरो हन्ति तस्मान्नेहेत विस्तरम् ।

॥ इति संख्या निर्णयः ॥

## [१५५] अथ श्राद्धार्हाणि पुष्पाण्याह ॥

याज्ञवल्क्यः॥ श्राद्धे जात्यः प्रशस्ताः स्युर्मल्लिकाः श्वेतयूथिकाः।
जलोद्भवानि सर्वाणि कुसुमानि च चम्पकम् ॥
जात्यः कुत्रचित्तु निषिद्धा : ॥
आचारतिलके— शमी भृंगारकश्चैव पद्मपत्रं विशेषतः ।
तुलसी शतपत्रं च भृंगराजं च चम्पकम्॥
तगरं मरुकं चैव पितॄणां दत्तमक्षयम् ।
तथा॥ उग्रगंधीन्यगंधीनि चैत्यवृक्षोद्भवानि च।
पुष्पाणि वर्जनीयानि रक्तवर्णानि यानि च ॥
न कंटकीजं कंटकिजमपि शुक्लं सुगंधि यत् ।
दद्याद्रक्तमपि कुंकुमजं जलजं च दद्यात् ॥

इत्यादीनि द्रष्टव्यानि ॥ चंदनमपि कुंकुमकर्पूरागरुपद्मकान्यनुलेपनार्थमिति विष्णुनोक्तं ॥ धूपे च विष्णुः प्राण्यंगं सर्वधूपार्थे न दद्यात् ॥ घृतमधुसंयुक्तं गुग्गुलश्रीखंडागरुदेवदारुसरलादि दद्यादिति ॥

दीपे च विशेषः शङ्खेनोक्तः ॥
घृतेन दीपो दातव्यास्तिलतैलेन वा पुनः ।
वसामेदोद्भवं दीपं प्रयत्नेन च वर्जयेत् ॥

वस्त्र यज्ञोपवीतादीनि आत्मनः पितॄणां च यद्यदिष्टं तत्तद्दद्यात् ॥ तदेतत् सर्वं दैवपूर्वमिति चंदनपुष्पाणीति ॥

## [१५६] अथ हविष्याणि ॥

अन्नमिष्टं हविष्यं च दद्यादक्रोधनो नरः ।

अन्नं भक्ष्यभोज्यलेह्यचोष्यपेयात्मकं पञ्चविधं इष्टं ब्राह्मणाय प्रेताय कर्त्रे वा यद्रोचते ॥ हविष्यं हविर्योग्यं ॥

हविष्यान्नेन वै मासं पायसेन तु वत्सरम् ।

यथाह मनुः—तिलैर्व्रीहियवैर्माषैरद्भिर्मूलैः फलेन वा ।

दत्तेन मासं प्रीयन्ते विधिवत्पितरो नृणाम् ॥

विष्णु—शाकैः श्यामाकैः प्रियङ्गुनीवारैर्मुद्गगोधूमैश्च मासं प्रीयन्त इति ॥ पायसेन गव्यपयसा सिद्धेन ॥

संवत्सरं तु गव्येन पयसा पायसेन च । इति स्मरणात् ॥

[१५७] तथा ॥ कदलीनां फलादीनि श्राद्धे दद्यात्प्रयत्नतः ।

माक्षिकं कालशाकं च तीक्ष्णं दीर्घंच मूलकं ॥

तथा—श्वेतमूलं सदा दद्याद्दीर्घं तीक्ष्णं च नित्यशः ।

विज्ञानेश्वरः ॥ हविष्यं श्राद्धहविर्योग्यं व्रीहिशालियवगोधूममुद्गमाषोत्पन्नकालशाकैलाशुंठीमरीचिहिंगुगुडशर्कराकर्पूरसैंधवपनसनालिकेरकदलीबदरगव्यपयोदधि घृतपायसमधुमांसप्रभृतिस्मृत्यंतरप्रसिद्धं वेदितव्यमिति ॥

[१५८] तथा मांसानि ॥

खड्गामिषं महाशल्कं मधु मुन्यन्नमेव च ।

लोहामिषं महाशाकं मांसं व्याध्रीणसस्य च ॥

यद्ददाति गयास्थश्च सर्वमानंत्यमश्नुते ।

महाशाकं कालशाकं । व्याध्रीणसो वृद्धः श्वेतच्छागः ।

महाशल्कोमत्स्यविशेषः । लोहो रक्तच्छागः ॥

त्रिः पिबंत्विन्द्रियक्षीणं श्वेतं वृद्धमजापतिम् ।

व्याध्रीणसं तु तं प्राहुर्याज्ञिकाःश्राद्धकर्मणि ॥

त्रिःपिबः पिबतः कर्णौ जिह्वा यस्य जलं स्पृशति। स त्रिभिः पिबतीति त्रिपिबः। एतदन्नं मांसादिकं पितृकर्मणि दत्तमनन्तफलहेतुकं भवति ॥ अत्र यद्यपि उत्पन्नमांसादीनि सर्ववर्णानां सामान्येन श्राद्धयोग्यानि दर्शितानि तथापि पुलस्त्योक्ता व्यवस्थादरणीया ॥

[१५९] यथा ॥ उत्पन्नं ब्राह्मणस्योक्तं मांसं क्षत्रियवैश्ययोः ।
मधुप्रधानं शूद्रस्य सर्वेषां वाविरोधि यदिति ॥

अविरोधि यद्धविष्यं कालशाकादि तत्सर्ववर्णसाधारणं ॥ हविष्यग्रहणादहविष्याणां स्मृत्यंतरप्रतिषिद्धानां कोद्रवमसूरचणकमुलककुलित्थराजमाषनिष्पावकूष्माण्डवृन्ताकबृहतीद्वयोपोदकीवंशाङ्कुरापिप्पलीवचाशतपुष्पाबिडलवणमाहिषवामाक्षीरदधिमधुघृतपयसादीनां निवृत्तिः ॥ प्रशस्तालाभे निषिद्धरहितंग्राह्यमिति हविष्याण्यहविष्याणि च ॥

## [१६०] अथ निषिद्धानि

घंटानिनादो हरसंनिधानं । शम्बूकरूपं कदलीदलं च ॥
उन्मत्तजात्यर्कहयारिजानि । श्राद्धस्य वैगुण्य कराण्यमूनि ॥

शम्बूकः शङ्खः। उन्मत्तानि धत्तूरकपुष्पाणि। जातिःप्रसिद्धा अर्कपुष्पाणि पत्राणि च । हयारिजं माहिषगोमयं ॥

तथा ॥ बिल्वपत्रं तथा शंभु धूपं चैवाज्यसंभवम् ।
कम्बिलं योगपट्टं च श्राद्धे तु परिवर्जयेत् ॥

तथा ॥ काञ्जिकं दधि तक्रं च गृतं चामृतमेव च ।
पितृपाको न दातव्यो यावत्पिंडान्न निर्वपेत् ॥

तथा ॥ वृद्धाग्निशिशुविप्रेभ्यो यतये ब्रह्मचारिणे ।
पितृपाको न दातव्यो यावत्पिंडान्न निर्वपेत् ॥ इति ॥

स्मृत्यंतरे—मित्रे चैव स गोत्र च पितृमातृसहोदरे ।
आसनं नैव दातव्यं भोक्तव्या एवमेव ते ॥
ब्राह्मणं न सगोत्रं च पूजयेत्पितृकर्मणि ।
नोपतिष्ठति तत्तेषां किं तु स्याच्च निराशता ॥
सगोत्रं भोजयेद्यस्तु पितृकार्येषु वै द्विजः ।
हताः स्युः पितरस्तेन न भुक्तमुपतिष्ठति ॥
श्राद्धं कुर्वन्द्विजोऽज्ञानात्सगोत्रं यस्तु भोजयेत् ।
स लुप्तपितृदेवः सन्नरकं प्रतिपद्यते ॥
तस्मान्न गोत्रिणं विप्रं पूजयेद्विधिपूर्वकम् ।
ज्ञातिमध्ये स भोक्तव्य उत्थितैस्तु द्विजोत्तमैः ॥

तथा पत्नीभ्राता सहोदर इति ॥ [१५१] अथ श्राद्धे इति कर्तव्यताप्रतिपादकानि वचनानि स्मृतिपुराणेभ्यः समानीय लिख्यन्ते ॥ सर्वं संभारं संपाद्योपक्रमेत श्राध्धं विप्राणां चरणक्षालनाय मण्डलद्वितयं ।

तदाह शंभुः—उदक् प्लवमुदीच्यांस्याद्दक्षिणे दक्षिणाप्लवम् ।
पूर्वं वैश्वदेवं द्वितीयं पित्र्यं ॥
उत्तरेऽक्षतसंयुक्तान्पूर्वाग्रान्विन्यसेत्कुशान् ।
दक्षिणे दक्षिणाग्रांस्तु सतिलान्विन्यसेद्बुधः ॥

मनुः ॥ आसनेषूपकूल्सेषु विप्रांस्तानुपवेशयेत्

शातातपः ॥ उदङ्मुखस्तु देवानां पितृणां दक्षिणामुखः ।

बौद्धायनः—देवानामृजवो दर्भाः पितृणां द्विगुणाः स्मृताः ।

ब्रह्मनिरुक्ते ॥ पाद्यं चैव तथैवार्घ्यं देवमादौ प्रयोजयेत् ।
मत्स्यः ॥ दक्षिणंजान्वालभ्येति ॥
पाराशरः—निमंत्रयीत तान्भक्त्या नियोगाख्यानपूर्वकम् ।
प्रचेता मंत्रमाह—सर्वायासविनिर्मुक्तैः कामक्रोधविवर्जितैः ।
भवद्भिर्देवकार्यं नः संपाद्यं मे प्रसीदत ॥
भवद्भिः पितृकार्यं नः इति पित्र्ये ॥
मत्स्यः—एवं निमंत्र्य नियमांश्छ्रावयेत्पैतृकांस्ततः ।
अक्रोधनैः शौचपरैः सततं ब्रह्मचारिभिः ॥
भवितव्यं भवद्भिश्च मया च श्राद्धकारिणा ।
मनुः—प्राचीनावीतिना भाव्यमपसव्यमतन्द्रिणा ।
पित्र्यमानिधनात्कार्यं विधिवद्दर्भपाणिना ॥
तथा—विप्राणां क्षालयेत्पादानभिवंद्य पुनः पुनः ।
स्मृत्यंतरे—त्रिषु स्थानेषु या पत्नी वामभागे प्रशस्यते ।
पादशौचे पितॄणां च रथारूढे तथा ऋतौ ॥
[११२] मनुः—दर्भपाणिर्द्विराचम्य लघुवासा जितेन्द्रियः ।
उपस्पृश्योदकं सम्यक् विप्रांस्तानुपवेशयेत् ॥
यमः - आसनं संस्पृश्य सव्येन पाणिना दक्षिणेन ब्राह्मणमुप-
संगृह्य समाध्वमिति चोक्त्वा उपवेशयेत् ॥
धर्मः—जान्वालभ्य ततो देवानुपवेश्य ततः पितॄन् ।
समस्ताभिर्व्याहृतिभिरासनेषूपवेशयेत् ॥
यमः—दक्षिणसंस्था आसीरन् न स्पृशेयुः परस्परम् ।
ब्रह्मोद्याश्च कथाः कुर्युः पितृणामेतदीप्सितम् ॥
तथा—पवित्रपाणयः सर्वे ते च मौनव्रतान्विताः ।

प्रत्यगुपक्रमा प्रागपवर्गा दक्षिणसंस्था इतिमञ्जर्यां ॥

बौध्धायनः ॥ दक्षिणमुदक्संस्थं ॥

मनुः—ब्राह्मणं भिक्षुकं वापि भोजनार्थमुपस्थितम् ।
ब्राह्मणैरभ्यनुज्ञातः कामंतमभिभोजयेत् ॥
ज्योतिर्द्वयं प्रकुर्वीत श्राध्धे च सहदैविके ।
तत्र द्वयं न कुर्वीत यत्र दैवविवर्जितम् ॥
देवार्चने जपे होमे स्वाध्याये श्राध्धकर्मणि ।
स्नाने दाने तथा ध्याने प्राणायामास्त्रयः स्मृताः ।
नैकवासा न च द्वीपे नान्तराले कदाचन ॥
श्रुतिस्मृत्युदितं कर्म न कुर्यादशुचिः क्वचित् ।

योगीश्वरः—प्राणस्य चायमं कृत्वा आचमेत्प्रयतोऽपि सन् ।

प्रचेताः—अपसव्यं ततः कृत्वा जप्त्वा मंत्रं तु वैष्णवम् ॥
गायत्रीं प्रणवं वापि ततः श्राद्धमुपक्रमेत् ॥

[१६३] अग्निपुराणे—सप्तव्याधा दशार्णेषु मृगाः कालञ्जिरे गिरौ ।
चक्रवाकाः शरद्वीपे हंसाः सरसि मानसे ॥
तेऽपि जाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः ।
प्रस्थिता दीर्घमध्वानं यूयं तेभ्योऽवसीदथ ॥
श्राद्धादौ पठिते श्राद्धं पूर्णं स्याद्ब्रह्मलोकदम् ।

ब्रह्मपुराणे—द्विजाभावे दर्भबटूनासनेषूपवेशयेत् ॥

ब्रह्माण्डपुराणे—देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ।
नमः स्वाहायै स्वधायै नित्यमेव नमोनमः ॥
आद्येऽवसाने श्राद्धस्य त्रिरावृत्तं जपेदिदं ।

पुराणे—श्राद्धभूमौ गयां ध्यात्वा ध्यात्वा देवं गदाधरम् ।

ताभ्यां चैव नमस्कारं कृत्वा श्राद्धं प्रवर्तयेत् ॥

गयायां पितृरूपेण स्वयमेव जनार्दनः ।

तं ध्यात्वा पुण्डरीकाक्षं मुच्यते च ऋणत्रयात् ॥

[१६४] बृहस्पतिः—आसने चार्घदाने च पिंडदानेऽवनेजने ।

संबंधगोत्रनामानि यथार्हमनुकीर्तयेत् ॥

प्रतिब्राह्मणमासनं ॥

निगमे—अपहताइति तिलान् विकिरेत् ॥

पुराणे—सप्रश्रयंश्चोपरिष्टात्सर्वान्पृच्छेद्विजोत्तमान् ।

कुरुष्वेति स तैरुक्तो दद्यादर्भासनं ततः ॥

याज्ञवल्क्यः—पाणिप्रक्षालनं दत्वा विष्टरार्थे कुशानपि ।

पुराणे—आसने चासनं दद्यात् ॥

तथा—पितृकर्मणि वामे वै दैवे कर्मणि दक्षिणे ।

भर्तृयज्ञः—पाणौ तोयं परिक्षिप्य न दर्भास्तु कदाचन ।

यो हस्ते चासनं दद्यात्तं दर्भं बुद्धिवर्जितः ॥

पितरो नासने तत्र प्रकुर्वन्ति निवेशनम् ।

काठके ॥ देवानां सयवा दर्भाः ॥

[१६५] संग्रहे ॥ ततः पुनरपो दत्वा निमंत्रयेत् ॥

यमः—यवहस्तस्ततो देवान्विज्ञाप्यावाहनं प्रति ।

आवाहयेदनुज्ञातो विश्वेदेवा स इत्यृचा ॥

बृहस्पतिः—उत्पत्तिं नाम चैतेषां न विदुर्ये द्विजातयः ।

अयमुच्चारणीयस्तैः श्लोकः श्रद्धासमन्वितैः ॥

आगच्छन्तु महाभागा विश्वेदेवा महाबलाः ।

ये अत्र विहिताः श्राध्धे सावधाना भवन्तु ते ॥

विश्वेदेवाः शृणुतेति मंत्रं जप्त्वा ततोऽक्षतान् ।
ॐओषधय इतिमंत्रेण विकरेत्तु प्रदक्षिणम् ॥
अपसव्यं ततः कृत्वा पितृणामप्रदाक्षिणम् ॥
ततो वै स्वपितॄन् ध्यात्वा तिलानादाय संयतः ।
पितॄनावाहयामीति प्रच्छेद्विप्रानुदङ्मुखान् ॥
आवाहयेत्यनुज्ञात उशंतस्त्वेत्यृचा पितॄन् ।
क्षिप्त्वाप्रसव्यं च तिलान् पितॄन्ध्यायेत्समाहितः ॥
जपेदायंतु न इति मंत्रं सम्यगशेषतः ।
रक्षार्थं पितृसत्रस्य त्रिःकृत्वः सर्वतो दिशम् ॥
तिलांस्तु प्रक्षिपेन्मंत्रमुच्चार्यापहता इति ।

उदकोपस्पर्शनं ॥ ब्राह्मणबहुत्वेऽपिदेवतैक्ये सकृदेवेति चन्द्रिका ॥

[१६६] प्रचेता—पवित्रे इति मंत्रेण पवित्रे कारयेद्बुधः ।
ते निधायार्घपात्रेषु शन्नोदेवीत्यपः क्षिपेत् ॥

भर्तृयज्ञः—शंनोदेवीलिमंत्रेण अर्घपात्रे जलं क्षिपेत् । वैजवापगृह्ये ॥ दर्भेषु निधायेति । गोभिलः—एकैकस्मादेकैकेन ददाति ॥ यथा दैवं पात्रसंख्यां वैश्वदेवे तु पूरयेत् । पात्रयुग्मं तु यज्ञियवृक्षचमस इति ॥

मत्स्यशाट्यायनवचनाभ्यां ब्राह्मणसंख्यया यथादैवतं वा ॥ पित्र्ये विष्णुः ॥ दक्षिणाग्रेषु दक्षिणापवर्गेषु ॥ चतुर्विंशतिमते ॥ द्वे द्वे शलाके देवानां ॥

तथा—तिस्रस्तिस्रः शलाकाः स्युः पितृपात्रेषु पार्वणे ।
योगीश्वरः ॥ नान्तर्गर्भे कुशाच्छिन्ने कौशे प्रादेशसम्मिते ॥

मत्स्यः ॥ यवोसीति यवान्क्षिप्त्वा गंधपुष्पैः प्रपूजयेत् ।
यवोसियववयास्मद्वेषो यवयारातीः ॥ इति मंत्रः ॥

पितृपात्रे विशेषोयं तिलोऽसीति तिलान्क्षिपेत्
तिलोसि सोमदेवत्यो गोसवे देवनिर्मितः ।

प्रत्नवद्भिः प्रत्तः स्वधया पितॄनिमान्लोकान् प्रीणयाहि नः
स्वधानमः ॥ इति मंत्रः ॥

एतदेषामिति निवेदनं । स्वाहार्घ्या इति चाग्रे स्थापनं ॥
[१६७]ब्रह्मपुराणे ॥ ततो वामेनहस्तेन गृहीत्वा चमसान् क्रमात् ।
गार्ग्यः ॥ दत्वाहस्ते पवित्रं तु कृत्वा पूजां च पादतः ।

यादिव्या इति मंत्रेण हस्तेष्वर्घं विनिक्षिपेत् ॥
स्वधेति चैव मंत्रान्ते पितॄणां वचनं तथा ।
स्वाहेति चैव देवानां होमकर्मण्युपाहरेत् ॥

भर्तृयज्ञः ॥ सपवित्रेषु हस्तेषु दद्यादर्घं समाहितः ।
प्रचेताः ॥ पादप्रभृति मूर्धान्तं देवानां पुष्पपूजनम् ।

शिरः प्रभृति पादान्तं नमो व इति पैतृके ॥

पैठीनसिः ॥ ततो ब्राह्मणहस्तेषु उदकपूर्वकं दर्भान् प्रदायोदकपूर्व मर्घादिकं दद्यादिति ॥ यादिव्या इत्युक्त्वा स चैतत्तेऽर्घोदकमिति ॥

अपउपस्पृश्यैवमेव तयोरिति ॥ अत्रहस्तवहुवचनमेकदैवत्यानेकब्राह्मणापेक्षया ॥ अग्रबिन्दु निपातमात्रेण दानसिद्धेः शेषस्य स्वाहृतेरपि संभवात् ॥ अनेकदैवत्यापेक्षया वा मुख्य एवार्घ्यः ॥

१५८ प्रचेताः—प्रथमे पितृपात्रे तु सर्वान्संभृत्य संस्रवान् ।
अर्घ्यसंस्रवपात्रं तु शुंधन्तामिति संस्पृशेत् ॥
पितृभ्यः स्थानमसीति न्युब्जं कुर्यात्पवित्रवत् ।
तस्योपरि कुशं दत्वा ॥

उशनाः ॥ भमौ तिलान् कुशांश्चैव दक्षिणमूलान्निक्षिपेत् ॥ गंधादिभिः पूजयेदिति च ॥

मत्स्यः ॥ न्युब्जमुत्तरतो न्यसेत्
नोद्धरेत्प्रथमं पात्रं पितृणामर्घपातितम् ।
आवृतास्तत्र तिष्ठन्ति पितरः शौनकोऽब्रवीत् ॥

कात्यायनः—अर्घ्यः स्वधा व इत्युक्त्वा संस्रवानभिमंत्रयेत् ।
यादिव्या इति मंत्रेण पुत्रकामो मुखं स्पृशेत् ॥

१५९ अनक्ति ॥ मंत्रः ॥ यादिव्या आपः पयसा संबभूवुर्या अन्तरिक्ष्या उतपार्थिवीर्याः ॥ हिरण्यवर्णा यज्ञियास्तान आपः शिवाः शंस्योनाः सुहवा भवन्तु ॥ इति मंत्रः

गोभिलः—गन्धपुष्पधूपदीपाच्छादनानां प्रदानं ॥ याज्ञवल्क्यः ॥ दत्वोदकं गन्धेति ॥ अलाभे यज्ञोपवीतमिति खादिरे ॥

तथा—योऽनुलिंपति गात्राणि श्राद्धं कुर्वन्द्विजन्मनाम् ।
देवाश्च पितरश्चैव तस्य तुष्यन्ति सर्वदा ॥

व्यासः—पवित्रकरोऽनुलिंपेत् ॥

देवलः—यज्ञोपवीतं विप्राणां स्कन्धान्नैवावतारयेत् ।

शाङ्खः—इदं वो ज्योतिरित्युक्त्वा दीपं तेषां प्रदर्शयेत् ।
सुज्योतिरसीति तैः सर्वैर्वक्तव्यं तदनन्तरम् ॥

प्रदेयप्रशस्यमंत्रादिकमन्यतोऽवगन्तव्यं ॥

आचारतिलके—सर्वदानानि विप्रस्य करे दद्याच्च दक्षिणे ।

दीपमन्नं च पिंडं च भूमौ दद्याद्विचक्षणः ॥

अन्नं सिद्धमन्नं ॥

कात्यायनः—अर्घेऽक्षय्योदके चैव पिंडदानेऽवनेजने ।

तंत्रस्य विनिवृत्तिः स्यात्स्वधावाचन एव च ॥

[१७०]मनुः ॥ न नियुक्तः शिखावर्जं माल्यं शिरसि धारयेत् ।

क्रतुः ॥ ललाटे पुंड्रकं दृष्ट्वा स्कन्धे मालां तथैव च ।

निराशाः पितरो यान्ति शापं दत्वा च दारुणम् ॥

प्राप्यार्चनस्य पूर्णत्वमाचामेच्च ततः स्वयं ॥

ब्रह्माण्डे ॥

निहन्मि सर्वं यदमेध्यवद्भवेद्धताश्च सर्वे सुरदानवा मया ।
रक्षांसि यक्षाः सपिशाचगुह्यका । हता मया यातुधानाश्चसर्वे॥

इति तिलान् प्रक्षिपेत् ॥ पात्रं वै तैजसं दद्यात्॥ तद्वि-
शेषाः भग्नादिनिषेधाश्च निबन्धेषु ॥

ब्रह्माण्डे ॥ प्रक्षाल्य हस्तं पात्रादि पश्चादाद्भिर्विधानवित् ।

प्रक्षालनजलं दर्भैस्तिलैर्मिश्रं क्षिपेच्छुचौ ॥

[१७१] याज्ञवल्क्यः

अग्नौ करिष्यन्नादाय पृच्छत्यन्नं घृतप्लुतम् ।

कुरुष्वेत्यभ्यनुज्ञातो हुत्वाग्नौ पितृयज्ञवत् ॥

मदालसा ॥ हुतावशेषं दद्याच्च भोजनेषु द्विजन्मनाम् ।

तथा ॥ शेषयेत्पितृविप्रार्थे पिंडार्थं चावशेषयेत् ॥

पुराणे ॥ अग्नौकरणशेषं तु नदद्याद्वैश्वदेविके ॥

वासिष्ठः ॥ अग्नौकरणशेषं तु प्रदद्यात्तु समाहितः ।

तस्मादशून्यहस्तेन दद्यादन्नमुपस्थितम् ॥

मनुः ॥ पाणिभ्यामुपसंगृह्य स्वयमन्नस्य वर्धितम् ।

विप्रान्तिके पितॄन्ध्यायन्नुदकैरुपनिक्षिपेत् ॥

नागरखण्डे—अनग्निरग्नौकरणं क्षयाहे चैव पार्वणम् ।

पात्रे भस्ममयी रेखा न कुर्यान्नागरद्विजः ॥

[१७२] कार्ष्णाजिनिः—अपसव्येन कर्तव्यं पित्र्यं कृत्यमशेषतः ।

अन्नदानादृते सर्वमेवं मातामहेष्वपि ॥

स्मृत्यंतरे—पात्रप्रक्षालनादूर्ध्वं हस्ताभ्यां पात्रधारणम् ।

संकल्पे दक्षिणस्त्याज्यो विकरे वाममुत्सृजेत् ॥

धर्मः—परिवेषणमिष्टं स्याद्भार्यया पितृतृप्तये ।

फलस्यानन्तता प्रोक्ता स्वयं च परिवेषणे ॥

शौनकः—विधिना दैवपूर्वं तु परिवेषणमाचरेत् ।

नापवित्रेण हस्तेन नैकेन न विनाकुशं ॥

भर्तृयज्ञः—इदमन्नं ततो दत्वा पात्रमालभ्य संजपेत् ।

विप्राङ्गुष्ठं समादाय पाकमध्ये निधाय च ॥

पृथ्वी ते पात्रमादाय वैष्णव्या च तथा ऋचा ।

तदन्नं रुचिरं स्वादु दद्यात्पायसपूर्वकम् ॥

[१७३] याज्ञवल्क्यः ॥ दत्वान्नं ॥ पृथ्वी ते पात्रं द्यौः पिधानं ब्राह्मणस्य मुखे अमृते अमृतं जुहोमि स्वाहेति मंत्रः ॥ पैठीनसिस्तु ॥ स्वधेति पाठः ॥

कृत्वेदं विष्णुरित्यन्ने द्विजाङ्गुष्ठं निवेशयेत् ।

पुराणे—विष्णो हव्यं च कव्यं च ब्रूयाद्रक्षेति च क्रमात् ।

वारिस्वन्नप्रवृत्तेषु तमङ्गुष्ठं निवेशयेत् ॥

कात्यायनः—

अङ्गुष्ठमन्नेऽवगाह्यापहताइति मंत्रेण तिलान्विकीर्य

एकैकस्याथ विप्रस्य गृहीत्वाङ्गुष्ठमादरात् ।

अत्रिः—हस्तेन मुक्तमन्नाद्यमिदमन्नमितीरयन् ।

स्वाहेति च ततः कुर्यात्स्वसत्ताविनिवर्तनम् ॥

गोत्रसंबंधनामानि इदमन्नं ततः स्वधा ।

पितृक्रमादुदीर्येत स्वमन्नं विनिवर्तयेत् ॥

पुराणे—पात्रालंभं द्विजः कुर्यादिदं वोन्नमितीरयन् ।

यमः—अन्नहीनं क्रियाहीनं मंत्रहीनं च यद्भवेत् ।

सर्वमच्छिद्रमित्युक्त्वा ततो यत्नेन भोजयेत् ॥

प्रचेताः—सव्याहृतिकां गायत्रीमिति ॥

योगी—अपोशनं प्रदायाथ सावित्रीं त्रिर्जपेदथ ।

मधुवाता इतितृचं मध्वित्येवं त्रिकं तथा ॥

ततः संकल्पसिद्धं च प्राथ्यसमृध्यर्थ ॥ ॐतत्सदितित्रिः ॥

याज्ञवल्क्यः—जप्त्वा यथा सुखं वाक्यं ॥

मदालसा—यथासुखं जुषध्वं भोरिति वाच्यमनिष्ठुरम् ॥

व्यासः—जुषध्वमिति चोक्ताः

१७४ अत्रिः—दत्ते वाप्यथवादत्ते भूमौ यो निक्षिपेद्बलिम् ।

तदन्नं निष्फलं याति निराशैः पितृभिर्गतैः ॥

परिशिष्टे—यच्च पाणितले दत्तं यच्चान्नमुपकल्पितम् ।

एकीभावेन भोक्तव्यं शङ्खस्य वचनं यथा ॥

शाङ्खायनगृह्ये ॥ भुञ्जानेषु महाव्याहृतीः सावित्रीं मधुवातीयाः पितृदैवत्याः पावमानीश्च जपेत् ॥

जमदग्निः—अपसव्येन कर्तव्यं सर्वं श्राद्धं यथाविधि ।
सूक्तस्तोत्रजपं मुक्त्वा विप्राणां च विसर्जनम् ॥
प्रचेताः—तृप्तान् बुध्वान्नमादाय सतिलं पूर्ववज्जपेत् ।
व्याहृत्यादिकं ॥ कात्यायनः ॥ जप्त्वा तृप्ताः स्थेति पृच्छति ॥ व्यासः ॥ ते ब्रूयुःस्तृप्ताः स्मेति ॥

मनुः—सर्ववर्णिकमन्नाद्यं सन्नीयाप्लाव्य वारिणा ।
समुत्सृजेद्भुक्तवतामग्रतो विकिरं भुवि ॥
कण्डिकायाम्—विकिरं ग्रासमात्रं तु दध्योदनसमन्वितम् ।
षडङ्गुल परित्यज्य दद्यादुच्छिष्टसन्निधौ ॥
प्रचेताः ॥ ये अग्नीति भुवि दर्भास्तृतायामिति ॥ मार्कंडेयः ॥ अन्नंसतृणमभ्युक्ष्येति ॥

येऽग्निदग्धाश्च जीवा येऽनग्निदग्धाः कुले मम ।
भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् ॥
इति मंत्रः ॥ [१७५] मरीचिः ॥
श्राद्धेषु विकिरं दत्वा नाचमेन्मातिविभ्रमात् ।
पितरस्तस्य षण्मासान्भवन्त्युच्छिष्टभोजिनः ॥
नागरखण्डे—सकृत्सकृज्जलं दत्वा गायत्री त्रितयं जपेत् ।
मधुवातेति संकीर्त्य ततः पृच्छेद्द्विजोत्तमान् ॥
तृप्ताःस्थ इति राजेन्द्र ह्यनुज्ञां प्रार्थयेत्ततः ।
बन्धूनां भोजनार्थाय शेषस्यान्नस्य भक्तिमान् ॥
मदालसा—ततस्त्वाचमनार्थाय दद्यादापः सकृत्सकृत् ।
विष्णुः—उदङ्मुखेष्वादौ ततः प्राङ्मुखेषु पूर्वोत्तराचमनमंत्राः ॥ प्राणाहुत्यादयोभवन्त्यविरुद्धत्वात् ॥ ब्राह्मे ॥ तथा च हरिं स्मरेत् ॥

[१७६] याज्ञवल्क्यः ॥ सर्वमन्नमुपादाय सतिलं दक्षिणामुखः ।

उच्छिष्टसन्निधौ पिंडान् दद्यात्तु पितृयज्ञवत् ॥

मदालसा ॥ पितॄनुद्दिश्य दर्भेषु दद्यादुच्छिष्टसन्निधौ ।

सतिलेन ततोन्नेन पिंडान् सर्वेण पुत्रकः ॥

व्यासः–अरत्निमात्रमुत्सृज्य पिंडांस्तत्र प्रदापयेत् ।

यत्रोपस्पृश्यतां वापि प्राप्नुवन्ति न विन्दवः ॥

स्मृतिसारे–पितृपात्रादरत्न्यां तु विकिरं कारयेद्बुधः ।

पिंडानिर्वपणं कुर्याद्विकिरात् षड्भिरङ्गुलैः ॥

कात्यायनः–तृप्तान् ज्ञात्वान्नं प्रकीर्य सकृदापो दत्वा पूर्ववद्गायत्रीं जप्त्वा मधुमतीर्मधुमाध्विति चेति ॥

देवलः–मण्डलं चतुरस्रं वा दक्षिणावनतं महत् ।

पितृयज्ञ इतिकर्त्तव्यता कल्पसूत्रे ॥ अपहता असुरा रक्षांसि वेदिषदः ॥ इति ॥ स्फ्येनोन्मृज्याभ्युक्ष्य ॥

[१७७] ब्रह्मांडे–वज्रेणाथ कुशैर्वापि दद्यादुल्लेखनं द्विजः ।

कल्पसूत्रे ॥ अभ्युक्ष्य ये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया चरन्ति परा पुरो निपुरो ये भरन्त्यग्निष्टांल्लोकान्प्रणुदात्वस्मादित्युल्मुकमुन्मृष्टस्य दक्षिणार्धे निधाय मूले कुशान्सकृल्लूनानुन्मृष्टे निधायासाववनेनिक्ष्व ये च त्वामत्रान्विति पितुर्नामोद्दिश्य कुशेष्वपो निषिञ्चत्यवाचीनपाणिनैवं दक्षिणतः पितामहस्य प्रपितामहस्य चासावेतत्ते ये च त्वामत्रान्विति यथावनेजितं निधायोभावेकस्मिन्पितृभेदेन ॥ जीवत्पितुरस्ति नजीवांतर्हितायेति ॥ गृह्ये ॥ पुरस्ता-

देके पिंडान्पश्चिमेन तत्पत्नीनां किञ्चिदन्तर्धाय ब्राह्मणेभ्यः शेषं निवेदयेत् ॥

[१७८] शाङ्खायनः—श्वशुरस्याग्रतो यस्माच्छिरः प्रच्छादनक्रियाम् ।
पुत्रैर्दर्भेण सा कार्या मातुरभ्युदयार्थिनः ॥

विष्णुः—दत्वापिंडाननुमंत्रयेतात्र पितरो मा दयध्वं यथा भागमावृषायध्वमिति ॥

व्यासः—दर्भमूलेषु विमृजेद्धस्तलेपं समाहितः ।
अद्भिः प्रक्षाल्य तत्पात्रं ॥

मनुः— आचम्योदङ्मुखावृत्य ॥ विष्णुः ॥ सव्यावृदुदङ्मुखः ॥ कल्पसूत्रे ॥ त्रिरात्मनादाशित्वाऽमीमदंतपितरो यथाभागमवीवृषतेति प्रतिपर्यावृत्य ॥ विष्णुः ॥ शेषावघ्राणं कृत्वा तथैवावनेज्य ॥ मार्जारमूषकस्पर्शे पिंडे च द्विदलीकृते ।
प्रत्यवनेजनादर्वाक् ततः श्राद्धं प्रवर्तते ॥

नमोवः पितरो जीवायेति ॥ अस्माकंसगृहान्नः पितरो दत्तेति नमस्कृत्य प्रार्थयेत्

[१७९] सुमन्तुः—श्राद्धसेचनकाले तु पाणिनैकेन दीयते ।
उदकं दत्वा एतद्वः पितरो वासो वध्वं पितरइति ॥ त्रीणि सूत्राण्युपन्यस्य

नागरखण्डे—सूत्रं च प्रतिपिंडं वै दद्यात्तेषु पृथक् पृथक् ।
यः सूत्रं पूर्वपिंडेषु सततं विनियोजयेत् ॥
स विरोधं चरेत्तेषां त्रोटनाच्च परस्परम् ।

तथा च स्मृत्यन्तरे—एतद्वः पितरो मंत्रं जपन् सूत्रं तु दापयेत् ।
दशां विवर्जयेत्प्राज्ञो यद्यप्यहतवाससः ॥

ऊर्णासूत्रं तु दातव्यं कार्पासमथवा नवम् ।
दुकूलं पट्टसूत्रं वा तदभावे कुशं न्यसेत् ॥
ततः संपूजयेत्सर्वान् पिंडान्पुष्पैर्द्विजोत्तमः ।
व्यासः—गन्धपुष्पाणि धूपं च दीपं च विनिवेदयेत् ।
पुराणात्—यत्किञ्चित्पच्यते गेहे भक्ष्यं भोज्यमगर्हितम् ।
अनिवेद्य न भोक्तव्यं पिंडमूले कथंचन ॥
एवमभ्यर्च्य पूर्णतामर्पयेत् ॥ १८० मत्स्यः ॥ आचान्तेषु चाचम्य । मानवीयेन सह विकल्पः ॥
भर्तृयज्ञः—आचम्य प्रक्षाल्य तथा हस्तौ पादौ च पार्थिव ।
नमस्कृत्य पितॄन्पश्चात्सुप्रोक्षितं ततः परम् ॥
विष्णुः—सुप्रोक्षितमिति श्राद्धदेशं प्रोक्ष्य दर्भपाणिः ।
पद्मपुराणे—उदकं च ततो दत्वा पुष्पाणि सयवानि च ॥
कुशांश्चसव्येन ॥
मत्स्यः—आचान्तेषु पुनर्दद्याज्जलपुष्पाक्षतादिकम् ॥
देवलः—आचान्तेभ्यो द्विजेभ्यस्तु प्रयच्छेदथ दक्षिणाम् ।
दक्षिणां पितृविप्रेभ्यो दद्यात्पूर्वं ततो द्वयोः ॥
दत्वाशीः प्रतिगृण्हीयात् द्विजेभ्यः प्राङ्मुखो बुधः ।
पारस्करः—हिरण्यं विश्वेभ्यो देवेभ्यो रजतं पितृभ्यः ।
सतिलं नामगोत्रेण दद्याच्छक्त्या तु दक्षिणाम् ॥
अपसव्यमत्राप्यक्षय्यं ॥
प्रार्थयेन्नामगोत्रेण जलं देयमनन्तरम् ।
१८१ शातातपः—अभिप्रेतार्थसिद्ध्यर्थमिष्टान्कामांश्च वाचयेत् ।

दक्षिणाः पान्तु सर्वत्र बहु देयं तथाऽस्तु नः ॥
दीर्घमायुस्तथा शान्तिः पुष्टिस्तुष्टिर्धृतिश्च मे ।
यद्यच्छ्रेयस्करं लोके तत्तदस्तु सदा मम ॥

अपसव्यं ततः कृत्वा षष्ठ्याक्षय्योदकं ददेत् । प्रति ब्राह्मणं ॥

मार्कण्डेयः—पितॄणां नामगोत्रेण जलं देयमनन्तरम् ।
ब्राह्मणानां द्विजैर्वाच्यमक्षय्यमिदमस्त्विति ॥हस्तेषु ॥

कात्यायनः—स्वधावाचनीयान् सपवित्रान् कुशानास्तीर्य स्वधां वाचयिष्य इति पृच्छति ।

याज्ञवल्क्यः—वाच्यतामित्यनुज्ञातः प्रकृतेभ्यः स्वधोच्यताम् ।

प्रकृतेभ्यः पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यः स्वधोच्यतामित्यनुज्ञाते तैर्विप्रैरस्तु स्वधेत्युच्यमाने पवित्रांतर्हितान्पिंडान्सिञ्चेत्॥

नागरखण्डे—अस्तुस्वधेति तैरुक्ते पिंडानामुपरि क्षिपेत् ।

[१८२] याज्ञवल्क्यः—अस्तुस्वधेति तैरुक्ते भूमौ सिञ्चेत्ततो जलम् ।

देवलः—परिक्रम्य च तत्पात्रं तत्रैवाप्यथ न्युब्जयेत् ॥

शङ्खायनः—ऊर्जंवहन्तीरमृतंघृतंपयः कीलालं परिस्रुतम् ।
स्वधास्थ तर्पयत नः पितॄनिति उदकशेषं निनीय ॥

चण्डः—जलं प्रसिच्य तत्पात्रं पिंडानामुपरि अधोमुखं कार्यं

याज्ञवल्क्यः—यस्मिंस्ते संस्रवाः पूर्वमर्घ्ये पात्रे निपातिताः ।
पितृपात्रं तदुत्तानं कृत्वा विप्रान्विसर्जयेत् ॥

उत्तानकरणक्रमोप्यार्थिकः ॥

[१८३] नागरखण्डे तु—उत्तानमर्घपात्रं तु कृत्वा दद्याच्च दक्षिणाम् ।
हिरण्यं देवतानां च पितॄणां रजतं तथा ॥

सर्वं कर्मापसव्येन दक्षिणादानवर्जितम् ।
तदुक्तं—सर्वं कर्मापसव्येन षट्सु स्थानेषु वर्जयेत् ।
आशीः प्रदक्षिणाः स्वस्ति प्रणामजपदक्षिणाः ॥

मत्स्यः—ततः विश्वेषु चोदकं ॥ उदकं दक्षिणोदकं सप्तमी साम्यात् ॥ चण्डः—उभयत्र सव्येन ब्राह्मण प्रतिपत्तिरियं तुष्ट्यर्थं ॥

दत्वाशीः प्रतिगृण्हीयाद्द्विजेभ्यः प्राङ्मुखो बुधः ।
अघोराः पितरः सन्तु गोत्रं नो वर्धतामिति ॥
दातारो नोऽभिवर्धन्तां वेदाः सन्ततिरेव च ।
श्रद्धा च नो माव्यगमद्बहु देयं च नोऽस्त्विवति ॥
अन्नं च नो बहु भवेदतिथींश्च लभेमहि ।
याचितारश्च नः सन्तु मा च याचिष्म कंचन ॥
एता एवाशिषः सन्तु सन्त्वित्युक्तश्च तैः पुनः ।

१८४ गोभिलः—विश्वदेवाः प्रीयन्तामिति दैवे वाचयित्वा पिंडपात्राणि चालयित्वेति। पूर्वं पिंडाः ततः पात्राणीति क्रमः ॥ब्राह्मे॥ मध्यमं पिंडमवजिघ्रति ॥ कल्पसूत्रे ॥ अवघ्राय पिंडानवघ्राय प्राश्नीयात् । ब्राह्मणाय वा दद्यात् ॥ अपो वाऽभ्यवहरेत् ॥ मध्यमं पिंडं पत्नी पुत्रकामा प्राश्नीयात् ॥ आधत्त पितरो गर्भं कुमारं पुष्करस्रजं ॥ यथेह पुरुषोऽसदित्युल्मुकमग्नौ कृत्वा सकृदाच्छिन्नानानुप्रहृत्योति ॥ अनुप्रहरणोत्तरं स्वस्तिवाचनमिति ॥

नारायणः—अचालयित्वा तत्पात्रं स्वस्ति कुर्वन्ति ये द्विजाः ।

निराशाः पितरस्तेषां शप्त्वायान्ति यथागतम् ॥

जातूकर्ण्यः—पात्राणि चालयेच्छ्राद्धे स्वयं शिष्योऽथवा सुतः ।
न स्त्रीभिर्न च बालेन ना सजात्या कथंचन ॥

[१८५] स्कान्दे नागरखण्डे ॥

श्राद्धे पिंडं च पात्रं च स्वयमेव प्रचालयेत् ।
ततः स्वस्त्युदकं दद्यात्पितृपूर्वं तु सव्यतः ॥
वाजे वाजेति च तथा विसृजेच्च ततः परम् ।

कात्यायनः—उदकं दत्वा स्वस्तिवाचनं ॥

मार्कण्डेयः—वाजे वाजइत्युत्थाप्य कृत्वा चैतान्प्रदक्षिणम् ।

मत्स्यः—वाजे वाज इति जपन् कुशाग्रेण विसर्जयेत् ।

अग्निपुराणे—पितृपूर्वं विसर्जयेत् ॥ कात्यायनः ॥ अङ्गुष्ठग्रहणं सदा ॥ स्कान्दे नागरखण्डे ॥ आमावाजस्येति च प्रदक्षिणां कृत्वोपवेशयेत् ॥

पादावमर्दनं कृत्वा आसीमान्तमनुव्रजेत् ॥

[१८६] तथा स्मृत्यन्तरे ॥

संपूज्यस्त्रक्तिपुंड्राभ्यां श्राद्धविप्रांस्ततो बहिः ।
अनुगम्या स्वसीमान्तं नत्वाऽश्नीयात्सबान्धवैः ॥
बलिं च निक्षिपेत्पश्चात् श्वभ्यश्चैव तु निक्षिपेत् ।
विप्रप्रदक्षिणा कार्या पार्वणे जलधारया ॥
एकोद्दिष्टे तिलैः कार्या वृद्धिश्राद्धे यवैस्तथा ।
उदपात्रं गृहीत्वा तु धारां दद्यात्प्रदक्षिणम् ॥
दक्षिणां दिशमाकाङ्क्षेत् पितृन् याचेत मानवः ।
दातारो न इत्यादि ॥ शातातपः ॥ एवमस्त्विति तैर्वाच्यं ॥

आर्थिकः पुष्पप्रक्षेपः शिरसि ग्राह्यः ॥

उक्त्वा चैव प्रियां वाचं प्रणिपत्य प्रसादयेत् ।
अद्य मे सफलं जन्म भवत्पादाभिवन्दनात्
अद्य मे वंशजाः सर्वे याता वोऽनुग्रहाद्दिवं ।
पत्रशाकादिदानेन क्लेशिता यूयमीदृशाः
तं क्लेशमिह संजातं विस्मृत्य क्षन्तुमर्हथ ।
जानुभ्यामवनीं गत्वा प्रणिपत्य विसर्जयेत् ॥

[१८७] मदालसा—आद्वारमनुगच्छेद्वागच्छेद्वाचानुमोदितः ।

याज्ञवल्क्यः—मातामहानामप्येवं तंत्रं वा वैश्वदेविकम् ॥

नागरखंडे—यश्चैवास्तमिते सूर्ये भुङ्क्ते च श्राद्धकृन्नरः ।
व्यर्थतां याति तच्छ्राद्धं तस्माद्भुञ्जीत नो निशि ॥
प्रदक्षिणमनुव्रज्य भुञ्जीत पितृसेवितम् ।
ब्रह्मचारी भवेत्तां तु रजनीं ब्राह्मणैः सह ॥

एकादश्यां पितृसेवितमवघ्राय उपवासं कुर्यादिति श्राद्धे इतिकर्तव्यतावचनानि विशेषस्त्वन्यतोऽवगन्तव्य

## इति पार्वणश्राद्धविधिर्निरूपितः

[१८८] इदानीमेकोद्दिष्टश्राद्धे इतिकर्तव्यतानिरूप्यते ॥ एक उद्दिष्टो यस्मिन् श्राद्धे तदेकोद्दिष्टं कर्मनामधेयं तद्विधिमाह ॥

याज्ञवल्क्यः—एकोद्दिष्टं देवहीनमेकार्घ्यैकपवित्रकम् ।
आवाहनाग्नौकरणरहितं ह्यपसव्यवत् ॥

प्राचीनावीतब्रह्मसूत्रेणेत्यर्थः ॥ उपतिष्ठतामित्यक्षय्य स्थाने विसर्जनेकर्तव्ये वाजे वाजे इति जपानन्तरं दर्भान्वा

रंभणेनाभिरम्यतामिति ब्रूयात् । ते वदेयुरभिरतास्मेति ॥शेषं पार्वणविधिवदिति॥ तथा च शाङ्खायनगृह्ये ॥ अथात एकोद्दिष्टमेकपवित्रमेकार्घ्यमेकपिंडं नावाहनं नाग्नौकरणं नात्र विश्वेदेवाः स्वदितमिति तृप्तिप्रश्न उपतिष्ठतामित्यक्षय्यस्थानेऽभिरम्यतामिति विसर्गे इति ॥

[१८९] अथ श्राद्धभोजने प्रायश्चित्तं ।

यथा ॥ आब्दिके पादकृच्छ्रः स्यादेकाहः पुनराब्दिके ।

अत ऊर्ध्वं न दोषः स्याच्छङ्खस्य वचनं यथा ॥

आब्दिके प्रथमाब्दिके । दशकृत्वः पिबेदाप इति सर्वत्र॥ मासिकादिश्राद्धभोजने प्रायश्चित्तविशेषः स्मृत्यन्तरारज्ञेयः ॥

कृतेऽचलद्विवेदेन ग्रन्थे निर्णयदीपके ।

पिंडादिनिर्णयोपेतः श्राद्धकर्तव्यानिर्णयः ॥

## इति श्राद्ध निर्णयः

## अथ पुनस्तिथिविचारः

[१९०] अथ श्राद्धार्थममावास्या निर्णीतापि उपवासादिव्रतानां प्राशस्त्यदर्शनात् पुनरुपवासादिव्रतार्थममावास्याप्रतिपदादितिथयो निर्णीयन्त इति ॥ प्राशस्त्यं यथा

भविष्यत्पुराणे—अनग्निकास्तु ये विप्रास्तेषां श्रेयोऽभिधीयते ।

व्रतोपवासनियमैर्नाना दानैस्तथा नृप ॥

महाभारते—नास्ति वेदात्परं शास्त्रं नास्ति मातृसमोगुरुः ।

न धर्मात्परमस्तीह तपो नोपोषणात्परम् ॥

तथा शातपथीश्रुतिः ॥ एतद्वै सर्वं तपो यदनाशकमि-

ति ॥ अनाशक उपवासः ॥ तथा ईश्वरेण पार्वतीं प्रति व्रता-
न्युक्त्वा पुनरप्युक्तं ॥

एकभक्तं तथा नक्तमुपवासादिकं च यत् ।
तत्सर्वं कायिकं पुंसां व्रतं भवति नान्यथा ॥
व्रतोपवासनियमैः शरीरोत्तापनं तपः ॥ इति ॥

तथा सति द्वितीयातृतीययोश्चतुर्थीपञ्चम्योः षष्ठी-
सप्तम्योरष्टमीनवम्योरेकादशीद्वादश्योश्चतुर्दशीपौर्णमास्योरमा-
वास्याप्रतिपदोश्च व्रतेषु परस्पर संबंधे प्राशस्त्यदर्शनपरं
निगमवाक्यं प्रदर्श्यते ॥

युग्माग्नियुगभूतानां षण्मुन्योर्वसुरन्ध्रयोः ।
रुद्रेण द्वादशीयुक्ता चतुर्दश्या च पूर्णिमा ॥
प्रतिपद्यप्यमावास्या तिथ्यो युग्मं महाफलम् ।
[१८१] एतद्व्यस्तं महादोषं प्रवदन्तिमनीषिणः ॥ इति ॥

युग्मं द्वितीया अग्निस्तृतीया युगं चतुर्थी भूतं पञ्चमी
षट् षष्ठी मुनिः सप्तमी वसुरष्टमी रन्ध्रं नवमी रुद्र एकादशी
एवमेतानि सप्त युग्मानि॥ चतुर्दशी पूर्णिमासाहचर्यात् प्रति-
पदमावास्यासाहचर्याच्च ॥

तथा ॥ शुक्लपक्षेऽष्टमी चैव शुक्लपक्षे चतुर्दशी ।
पूर्वविद्धा न कर्तव्या कर्तव्या परसंयुता ॥ इत्यादिषु
स्पष्टं ॥ शुक्लपक्षश्रवणात् शुक्लपक्षविषयाणीति ॥ अत्र दशमी
त्रयोदशी चागृहीतापि

षष्ठ्यष्टमी तथा दर्शः कृष्णपक्षे त्रयोदशी ।
एताः परयुताः पूज्याः पराः पूर्वेण संयुताः ॥

इति निगमवाक्येन कृष्णपक्षे त्रयोदश्याः परविद्धत्वाभिधाना-च्छुक्लपक्षे त्रयोदशी पूर्वविद्धेति गम्यते ॥ तथा ॥

दशमी चैव कर्तव्या सदुर्गा द्विजसत्तमैः ॥इति नवमी युक्ता॥

तथा ॥ सम्पूर्णा दशमी कार्या मिश्रिता पूर्वयाथवा ।

सम्पूर्णा शुक्लपक्षसंबंधिनी पूर्वया नवम्या युक्तामिश्रि-ता ॥ अथवा एकादशीयुक्ता यथासंभवं कार्या युग्मवाक्या-नादरणदोषस्तु पूर्वविद्धे परविद्धे वा दशमीत्रयोदश्योः संबं-धिनि व्रते न प्रवर्तते ॥ युग्मविधानग्रहणे तयोरग्रहणात् ॥ युग्मवाक्यवैपरीत्याश्रयणदोष एकादशी द्वादशी विहितव्रते विशेषेणावतिष्ठते ॥ अत्र युग्मवाक्ये कर्मविधेरश्रवणात् । स्तु-तिनिन्दाभ्यां विध्यमाने प्राप्ते युग्मसप्तकस्यैकेन विधिना वि-धातुमशक्यत्वाद्युग्मे युग्मे च पूर्वतिथेरुत्तरविधेयत्वं ॥ उत्त-रातिथेश्च पूर्वविधेयत्वं ॥ एवं चतुर्दशविधेयानुरोधाच्चतुर्दशैते विधयो भवन्ति ॥ ते च व्रतविशेषानुपादानादुपवासविषया-स्तावत्सन्तः क्वचिन्न व्रतविशेषविधिना बाध्यन्ते सामान्यवि-शेषन्यायेन ॥ नक्तैकभक्तादिव्रतेषु कालव्यापित्वग्रहणबलाद्यु-ग्मवाक्यावसरो न प्रसरीसरीति ॥ अथ व्रतविशेषविषया-णि युग्मानि ॥

प्रतिपत्सद्वितीया स्यात् द्वितीया प्रतिपद्युता ।
चतुर्थी संयुता या सा तृतीया च फलप्रदा॥
पञ्चमी च प्रकर्तव्या षष्ठ्या युक्ता तु नारद ।
कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी ॥
पूर्वविद्धा तु कर्तव्या परविद्धा न कुत्रचित्॥इत्यादीनि॥

पूर्वाणि च वाक्यानि सामान्यविशेषप्रवृत्तान्यपि स्व-स्वतिथिनिर्णये विविच्य वक्ष्यामः

इति युग्मानिर्णयः ॥

---

[१९२] अथोपवास विषये साधारणं किञ्चिद्विचार्यते॥

षष्ठ्यष्टमी अमावास्या कृष्णपक्षे त्रयोदशी ।

एताः परयुताः पूज्याः पराः पूर्वेण संयुताः ॥ इति ॥

तिथिरुदयादारभ्योदयपर्यन्तं प्रवृत्ता शुद्धा ॥ शुद्धापिप-रदिने यदा वर्धते तदा

तिथ्यादौ तु भवेद्यावान्ह्रासो वृद्धिः परेऽहनि ।

तावान् ग्राह्यः स पूर्वेद्युरदृष्टोऽपि स्वकर्मणि ॥ इति ॥

अनेनैव वचनेन यावती परेऽहनि वृद्धिःस्तावती पूर्व-तिथेरुदयादूर्ध्वं वेदितव्येत्यतः परविद्धासु तिथिषु पूर्वया विद्धा पूर्वा नोपोष्या द्वितीयोदयसंबंधिन्युपोष्योति कैश्चिदुच्यते॥ त-देतदसांप्रतं ॥ उपवासो ह्यहोरात्रनिष्पाद्यो यतः । अतस्तस्यां सम्पूर्णायामहोरात्रव्यापिन्यामुपवासकर्मकालव्यापित्वादुपवा-सो युज्यते ॥ द्वितीयदिने तिथिवृद्धौ पूर्वा तिथिः परित्याज्ये त्येतदेकादशीविषये स्पष्टमुपलभ्यते॥

[१९३] तिथिः सशल्या परिवर्जनीया धर्मार्थकार्येषु सदा मनुष्यैः ।

विहीनशल्यापि विवर्जनीया यदाग्रतो वृद्धिमुपैति पक्षः ॥

सशल्या दशमीविद्धा विहीनशल्या सम्पूर्णैकादशी ॥

सा द्विविधापि त्याज्या यदि परेऽहनि किञ्चिद्वर्धते

सम्पूर्णैकादशी यत्र प्रभाते पुनरेव सा ।

इत्यनेन समानार्थं तदन्यतिथिषु योजितं॥ किं च ॥ यस्यां तिथौ यद्विहितं कर्म तत्तस्याः स्वकर्म ॥ अतः स्वकर्मविषये शुद्धायां लभ्यमानायां ह्रासवृद्धिभ्यां खण्डतोऽपादनं निष्प्रयोजकं ॥ [१८४] कर्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः ।

तया कर्माणि कुर्वीत ह्रासवृद्धी न कारणम् ॥

अविद्यमानह्रासवृद्धिग्रहणे यत्प्रयोजनं तदपीह नास्ति ॥

यथा मलिम्लुचः पूर्वो दैवो मासस्तथोत्तरः ।

त्याज्या तिथिस्तथा पूर्वा वृद्धौ ग्राह्या सदोत्तरा ॥

एतद्वचनमपि खर्वदर्पौ परौ पूज्यावित्यनेन समानार्थं॥ न सम्पूर्णतिथेः परित्यागेनोपवासविषयमिति साधारणो विचारः॥ [१८५] प्रसङ्गात्खण्डातिथिः ॥ उदयादारभ्य मध्यान्हपर्यन्तं न वर्तते सा खण्डतिथिः ॥

तदाह सत्यव्रतः—उदयाच्च तिथिर्या हि न भवेद्दिनमध्यभाक् ।

सा खण्डा न व्रतानां स्यादारंभश्च समापनमिति ॥

मरीचिः ॥ अखण्डव्यापिमार्तण्डा स्याच्चेत्सूर्योदयात्तिथिः ।

साह्यखण्डा व्रतानां स्यात्तत्रारम्भः समापनमिति ॥

वृद्धवासिष्ठोऽपि—व्रतप्रारम्भणं तस्यामनष्टगुरुशुक्रयोः ।

तस्यामखण्डायामित्यर्थः ॥ अत्रोपवासादिव्रतेषु सावित्रीव्रतव्यतिरिक्ता पौर्णमास्यमावास्या च प्रतिपद्युक्ता ग्राह्या॥ पूर्णिमानिर्णयः पश्चात्करिष्यते ॥ इदानीममावास्यानिर्णयः क्रियत इति ॥ [१८६] अथ अमावास्या शुक्लचतुर्दशी शुक्लाष्टमी श्रवणद्वादशी षष्ठी रम्भाव्यतिरिक्ता तृतीया एकादशी कृष्ण-

त्रयोदशी अवरा चतुर्थी एताः परयुता उपोष्या इति ॥

तदुक्तं-अवटा पूर्णिमा चामा भूताष्टम्यौ सिते श्रुतिः ।
षष्ठ्यरम्भा तृतीयैकादशी कृष्णत्रयोदशी ॥
चतुर्थी त्ववरा युग्मेत्येताः पूज्याः परान्विताः ।
परतिथ्यन्विताः पूज्याः ॥ अवटेति न विद्यते वटसावित्रीव्रतं यस्यां पूर्णिमायाममायां वेति सावटा ॥ अतः सावित्रीव्रतरहितो दर्शः परयुत इति ॥ तथा युग्मवाक्यमपि । प्रतिपद्युगमावास्येति॥

१८७ बृहस्पतिरपि-एकादश्यष्टमी षष्ठी पौर्णमासी चतुर्दशी ।
अमावास्या तृतीया च ता उपोष्याः परान्विताः ॥

निगमेऽपि-षष्ठयष्टमी अमावास्या कृष्णपक्षे त्रयोदशी ।
एताः परयुताः पूज्याः पराः पूर्वेण संयुताः ॥

विष्णुधर्मेऽपि-एकादश्यष्टमी षष्ठी द्वितीया च चतुर्दशी ।
त्रयोदशी अमावास्या उपोष्याः स्युः परान्विताः ॥

स्कन्दपुराणे-नागविद्धा तु या षष्ठी सप्तम्या च तथाष्टमी ।
भूतविद्धाप्यमावास्या न ग्राह्या मुनिसत्तमेति ॥

भूतं चतुर्दशी ॥ नागः पञ्चमी ॥ तथा च निगमः ॥
नागविद्धा तु या षष्ठी दशम्येकादशी तथा ।
भूतविद्धाप्यमावास्या निष्फलं स्याद्दिनत्रयम् ॥

तथा-एकादश्यष्टमी षष्ठी अमावास्या चतुर्थिका ।
उपोष्याः परसंयुक्ताः पराः पूर्वेण संयुता इति ॥

एवमादिवचनेषु प्रतिपदमावास्ययोरितरेतरसंबंधापवादस्य कण्ठोक्तत्वात् सावित्रीव्रतव्यतिरिक्तव्रतेष्वमावास्या परयु-

ता ग्राह्येति सिद्धान्तः ॥ अथ वटसावित्री व्रतेऽमावास्या चतुर्दशीयुक्ता ग्राह्या ॥

तदुक्तं ॥ सावित्र्यमा पौर्णमासी चतुर्थी गणसंज्ञिता ।

रम्भा तृतीया चेत्येताउपोष्याः पूर्वसंयुताः ॥

सावित्र्यमा सावित्रीव्रतयुक्तामावास्या ॥

[१९८] ब्रह्मवैवर्ते—भूतविध्धा न कर्तव्या अमावास्या च पूर्णिमा ।

वर्जयित्वा मुनिश्रेष्ठ सावित्रीव्रतमुत्तममिति ॥

स्कन्दपुराणे—कृष्णाष्टमी चतुर्दशी सावित्री वटपैतृकी ।

पूर्वयुक्ता प्रकर्तव्येति ॥ वटपैतृकी सावित्रीव्रतयुक्तामावास्या॥

ब्रह्मवैवर्ते—कृष्णाष्टमी तथा रम्भा तृतीया वटपैतृकी ।

बृहत्तपा तथा ब्रह्मन्कर्त्तव्या संमुखा तिथिः ॥

सायान्हव्यापिनी संमुखा पूर्वविद्धेति यावत् ॥ बृहत्तपा नाम स्त्रीभिः क्रियमाणो व्रतविशेषः ॥ तथा वचनान्तरं॥

कृष्णाष्टमी बृहत्तपा सावित्री वटपैतृकी ।

अनङ्गत्रयोदशी रम्भा उपोष्याः पूर्वसंयुता इति ॥

एभिर्वचनैरमावास्या वटसावित्रीव्रते चतुर्दशीयुक्ता कार्येति ॥

[१९९] ननु—नागविध्धा तु या षष्टी दशम्यैकादशी तथा ।

भूतविध्धा सिनीवाली न तु तत्र व्रतं चरोदिति ॥

भूतविध्धायां निषेधात् कथं तत्र व्रतं स्यादिति चेत् शृणु ॥ निषेधस्तु सावित्रीव्रतव्यतिरिक्तामावास्याव्रतविषयः ॥ ज्येष्ठमासकृष्णत्रयोदशीमारभ्यामावास्यायां स्त्रीभिः सावित्रीव्रतं क्रियते तत्र प्रत्युत विधायकं वचनं यदाह जाबालिः ॥

तुलायां मकरे मीने कन्यायां मिथुने तथा ।

भूतविध्धा व्रते ग्राह्या शेषेषु प्रतिपद्युता ॥

मिथुने ज्येष्ठोमास इति प्रसिध्धिः ॥ तस्मात्सावित्रीव्रतेऽमावास्या भूताविद्धा ग्राह्येति सिध्धं ॥

## इत्युपवासादिव्रतेऽमावास्या निर्णयः॥

---

### अथ वट सावित्री

२०० वटसावित्रीव्रतविधिस्तु भाविष्योत्तरात् ॥

अमायां च तथा ज्येष्ठे वटमूले महासती ।
त्रिरात्रोपोषिता नारी विधिनानेन पूजयेत् ॥
अशक्त्या तु त्रयोदश्यां नक्तं कुर्याज्जितेन्द्रिया ।
अयाचितं चतुर्दश्याममायां समुपोषणम् ॥

इत्यादि वंशपात्र्यां तु सुवर्णसावित्रीमूर्तिवस्त्रकुंकुम कज्जलसूत्रसप्तधान्यविरूढनारिकेलादिनानाफलानि मुक्का वटमूले स्थापयित्वा वटं सावित्रीं च पूजयेत् ॥ त्रिरात्रं सावित्र्याख्यानकंश्रुणुयात् व्रतसमाप्तौ ब्राह्मणाय दत्वा आगत्य बन्धुभिःसह हविष्यान्नं भुञ्जीत ॥ व्रतेनानेन राजेन्द्र न वैधव्यमवाप्नुयात्

## इत्यादि सावित्रीव्रतविधिः ॥

२०१ वारनक्षत्रादियोगतो दर्शविशेषाः पूर्वमुक्ताः ॥ कार्तिकादावमावास्याविशेषो दीपावलिनिर्णये वक्ष्यते ॥ एकभक्तादिव्रतेऽमावास्याव्रतकालव्यापिनी ग्राह्येति ॥

तदुक्तं—एकभक्ते दिवा नक्ते निशि चन्द्रोदयव्रते ।

तिथिस्तत्कालिकी ग्राह्या पारणे त्वपरा तिथिः ॥

एकभक्तं मध्यान्हे क्रियते इत्यग्रेऽभिधास्यत इत्युद्देशः ॥

## अथबृहत्तपाव्रतम्

तत्तु गुरुतपाख्यंलोकप्रसिध्धं ॥ तत्प्रतिवर्षं तिथिवृध्ध्या क्रियमाणे तिथिः पूर्वविध्धोपवासे ग्राह्या ॥

तदुक्तं—कृष्णाष्टमी बृहत्तपा सावित्री वटपैतृकी ।
अनङ्गत्रयोदशी रम्भा उपोष्याः पूर्वसंयुताः ॥

ब्रह्मवैवर्तेऽपि—कृष्णाष्टमी तथा रम्भा तृतीया वटपैतृकी ।
बृहत्तपा तथा ब्रह्मन्कर्त्तव्या सन्मुखा तिथिः ॥

पूर्वतिथियुक्ता संमुखा इति ॥ तद्व्रतारंभे षोडशतन्तुर्दीपवर्त्तिका ॥ प्रतिवर्षमेकैकतन्तुवृध्ध्या कार्या ॥ २०२ सुपूजिते प्रदेशे अपूपदधिबदराक्षतदीपार्चितं पात्रं गृहीत्वामावास्यातः प्रतिपदं प्रतिपदो द्वितीयामित्येवं तिथिवृध्ध्या गुरुं पृच्छेत् । एवं षोडशवर्षपर्यन्तं कर्तव्यमिति सूर्यारुणात् ॥ तदप्युक्तमीश्वरेण पार्वतीं प्रति ।

मार्गशीर्षशुक्लपक्षे कुर्याद्व्रतमनुत्तमम् ।
अमापूर्वं समारम्य यावत्षोडशिका तिथिः ॥
वर्षवृध्ध्या प्रकर्तव्या वर्तिःषोडशतन्तुका ।
संख्यार्थे वर्धयेदेकां यथाव्रतमखण्डनम् ॥
महेश्वरं च संपूज्य पुष्पधूपान्नवारिभिः ।
गृहीत्वापूपदूर्वादियुतं पात्रं गुरुं प्रति ॥
गच्छेत्तिथिस्तिथिं चैतद्गुरुवाक्यात्तु सुंदरि ।
वर्षे वर्षे प्रकर्तव्यं यावद्वर्षं समाप्यते ॥

पूर्णे षोडशवर्षे तु कुर्याद्यजनमुत्तमम् । उद्यापनं चेत्यर्थः ॥
आरोग्यं पुत्रपौत्रत्वमवैधव्यं तथैव च ॥

इत्यादिगुरुतपाव्रताविधिः

---

## अथप्रतिपन्निर्णयः

प्रतिपद्यप्यमावास्येति युग्मे शुक्लप्रतिपदोऽमावास्या-विद्धत्वमुपवासे विहितम् ॥

तथा कालादर्शे—प्रतिपत्पञ्चमी कृष्णाष्टमीभूते च सप्तमी ।
नवमी दशमी शुक्ला त्रयोदश्यश्रुतिर्हरिः ॥
रम्भातृतीया चेत्येता उपोष्याः पूर्वसंयुताः ।

भूतं चतुर्दशी ॥ भूतं चाष्टमी चेतिविग्रहे पूर्वभावितिथित्वेनाभ्यर्हितत्त्वादष्टमी शब्दस्य पूर्वनिपातः ॥ अश्रुतिर्हरिश्रवणव्यतिरिक्ता द्वादशी ॥

ब्रह्मवैवर्ते ॥ प्रतिपत्पञ्चमी भूतं सावित्री वटपूर्णिमा ।
पूर्वविद्धेति पैठीनसिः ।
पञ्चमी सप्तमी चैव दशमी च त्रयोदशी ॥
प्रतिपन्नवमी चैव कर्तव्या संमुखा तिथिः ॥

संमुखेति पूर्वतिथियुक्तेत्यर्थः ॥ २०४ एतानि वचनानि विधिमुखेन पूर्वविद्धापराणि ॥

यत्तु—प्रतिपत्सद्वितीया स्यात् द्वितीया प्रतिपद्युता ।
इत्यापस्तम्बवचनं प्रतिपद्द्वितीययोः परस्परं व्रतसंबंधाभिधायकं तद्व्रतविशेषाभिप्रायेण ॥ युग्मे शुक्लप्रतिपदमुप-

वासे पूर्वविद्धाभिधानात् ॥ यत् द्वितीया पञ्चमी दशमी त्रयोदशी चतुर्दश्यः स्ववेधादुपवासविषये स्वस्मात्पूर्वामुत्तरां च तिथिं हन्युरित्येतदुक्तं वृद्ध वसिष्ठेन ।

द्वितीया पञ्चमी वेधाद्दशमी च त्रयोदशी ।
चतुर्दशी चोपवासे हन्युः पूर्वोत्तरे तिथि ॥

एतदपि शुक्लपक्षे तु द्वितीयातृतीययोश्चतुर्थीपञ्चम्यो र्युग्मवाक्ये साहचर्यश्रवणात् अप्येतन्निषेध्य तत्तत्तिथिनिर्णये-व्यवस्थयाप्रदर्शयिष्यते ॥ एतेनोपवासविषये द्वितीया पूर्वां प्रतिपदं उत्तरां तृतीयां च हन्ति स्ववेधात् ॥ [२०५]अतः प्र-तिपद्द्वितीयायुक्ता नोपोष्येति तात्पर्यार्थः ॥ उपवासे तु कृष्ण-प्रतिपदपि पूर्वविद्धैव पैठीनसिवचनात् इत्यनन्तभट्टेऽपि प्र-तिपादितं ॥

यत्—प्रतिपत्सद्वितीया स्याद्द्वितीया प्रतिपद्युता ।

इत्यापस्तम्बवचनं प्रतिपदो द्वितीयायुक्तत्वाभिधायकं तत्रोपवासशब्दाश्रवणात् तत्तिलकाशोककरवीरादिव्रतविषये व्यवस्थाप्यते ॥ तानि हि व्रतखण्डे शुक्लप्रतिपद्युक्तानि व्रता-नि पूर्वाण्ह एव विधीयन्त इति व्यवस्थापने न कश्चिद्दोषः ॥ एवमन्यान्यपि विरुद्धवाक्यानि स्वस्वविषये व्यवस्थापयिष्य-न्ते ॥ द्वितीयायाः प्रतिपद्विद्धत्वमशून्यशयनादिव्रतविषयं न एकभक्तादिविषयं ॥ तेषां स्वस्वकालव्यापिन्यां नियतत्वा दिति प्रतिपत्सामान्यनिर्णयः ॥ [२०६] निर्णयामृते तु ॥ प्र-तिपत्सद्वितीयेत्येतद्वाक्यं कृष्णपक्षयुग्ममित्युक्त्वाग्रेऽशोककरवी रादि शुक्लप्रतिपद्व्रते योजितं तदसमीक्षिताभिधानं कृतं ॥

आश्विनशुक्लप्रतिपदि अशोकव्रतं कार्यं ॥ तेन शोकं न प्राप्नोतीत्युक्तं भविष्यत्पुराणे श्रीकृष्णेन युधिष्ठिरं प्रति ॥ यथा

अश्वयुक् शुक्लपक्षस्य प्रथमेऽन्हि दिनोदये ।
अशोकं पूजयेद्वृक्षं प्ररूढशुभलक्षणम् ॥
प्ररूढैः सप्तधान्यैश्च गुणकैर्मोदकैस्तथा ।
फलैः कालोद्भवैर्हृद्यैर्नालिकेरैः सदाडिमैः ॥
पुष्पधूपादिना तत्र पूजयेत्तं नगोत्तमम् ।
अशोकं पाण्डवश्रेष्ठ शोकं नाप्नोति कुत्रचित् ॥
अशोक शोकशमनो भव सर्वत्र नः कुले ।
इत्युच्चार्य ततो दद्यादर्घं फलसमन्वितम् ॥
पताकाभिरलङ्कृत्य प्रच्छाद्य च सुवाससा ।
२०७दमयन्ती यथा ह्यासीद्यथा देवी च जानकी ॥
तथाशोकव्रतादस्माज्जायते पतिवल्लभा ।
दृष्ट्वाशोकं वने पार्थ पल्लवालङ्कृतं तनुम् ॥
कृत्वा समीपेऽलङ्कारं देवरं च तिलाक्षतैः ।
दीपालक्तकनैवेद्यैर्धूपैस्तत्र फलार्चनैः ॥
अर्चयित्वा प्रार्थितोऽसौ रक्ताशोको युधिष्ठिर ।
मैथिल्या प्राञ्जलिं कृत्वा शृण्वतो राघवस्य च ॥
चिरं जीवतु मे वृद्धः श्वशुरः कोसलेश्वरः ।
भर्ता मे देवराश्चैव जीवन्तु जनकादयः ॥
कौसल्यामपि जीवन्तीं पश्येऽहमिति मैथिली ।
यथा चेदं महाभागा द्रुमं वनविभूषणम् ॥
प्रदक्षिणमुपावृत्य ततः सा प्रययौ गृहम् ।

एवमन्यापि या नारी पूजयेदवनीगतम् ॥
तिलतण्डुलसंमिश्रैर्यवगोधूमसर्षपैः ।
क्षमाप्य वन्दयेन्मूले पादपं रक्तपल्लवम् ॥
तदभावे च सौवर्णं राजतं वा स्वशक्तितः ।
वर्णकैर्वा समालिख्य पूजयेद्विधिवत्ततः ॥
मंत्रेणानेन कौन्तेय प्रणम्य स्त्री पतिव्रता ।
महावृक्ष महाशाख मकरध्वजमन्दिर ॥
प्रार्थये त्वां महाभाग सर्वकामप्रदो भव ।
एवमाभाष्य तं वृक्षं दद्याद्विप्राय दक्षिणाम् ॥
तं च वृक्षं कृतं दद्याद्वस्त्रयुग्मसमन्वितम् ।
सखीभिः सहिता साध्वी भुञ्जीत व्रतचारिणी ॥
एतद्व्रतं च या कुर्यात्सा शोकं न तु पश्यति ।
अन्ते गौरीपदं याति भर्तृसौख्यं च विन्दति ॥

इत्य शोकाख्यमेकभक्तव्रतं ॥

॥ अथाग्निव्रतं ॥

२०८ अथ प्रतिपदोऽग्निर्देवता अतः सर्वासु प्रतिपत्सु अग्निव्रतं कार्यं ॥ तदुक्तं

पद्मपुराणे—प्रतिपद्येकभक्ताशी समाप्तौ कपिलाप्रदः ।
वैश्वानरपुरं याति व्रतं वैश्वानरं त्विदमिति ॥

तथा तस्मिन्नेव पुराणे

पृथिवीभाजनं कृत्वा यो भुङ्क्ते पक्षसन्धिषु ।
अहो रात्रेण चैकेन त्रिरात्रिफलमश्नुते ॥

॥ इतिपक्षसन्धिव्रतं ॥

## ॥ अथ गोक्रीडाख्यंव्रतं ॥

एवमुपवासरूपाण्यपि प्रतिपद्व्रतानि सन्ति तानि व्रतखण्डात्ज्ञेयानि ॥ अथ कार्तिकशुक्लप्रतिपदि गोक्रीडाख्यं कर्म विहितं ॥ तत्र प्रतिपत्पूर्वविद्धा परविद्धा चेत्युभयथा वचनानि प्रदश्यर्न्ते ॥ तावत्पूर्वविद्धावचनानि ॥

प्रतिपद्दर्शसंयोगे क्रीडनं तु गवां मतम् ।
परविध्येषु यः कुर्यात्पुत्रदारधनक्षयः ॥ इति ॥

तथा—या कुहूः प्रतिपन्मिश्रा तत्र गाः पूजयेन्नृप ।
पूजनात् त्रीणि वर्धन्ते प्रजा गावो महीपतिः ॥

परविद्धानिषेधाभिप्रायेण दार्शिकं कर्म चतुर्दश्यां विहितं दृश्यते ॥

यथा—त्रिमुहूर्ता द्वितीया चेत्प्रतिपद्यापराह्णिकी ।
अन्वाधानं चतुर्दश्यां परतः सोमदर्शनात् ॥

एतदभिप्रेत्य गोक्रीडादिकर्माणि द्वितीयानिषेधकानि वचनानि॥

गवां क्रीडादिने यत्र रात्रौ दृश्येत चन्द्रमाः
सोमो राजा पशून्हन्ति सुरभेः पूजकांस्तथा ॥
नन्दाया दर्शने रक्षा बलिदानं दिशासु च ।
भद्रायां गोकुलक्रीडा स देशो वै विनश्यति ॥ इति ॥

### भद्राद्वितीया ॥

२०९ तथा—प्रतिपद्यग्निकरणं द्वितीयायां तु गोऽर्चनम् ।
छत्रच्छेदं करिष्येते वित्तनाशं तथासुखम् ॥

इत्यादिवाक्यैः प्रतिपत्काले अग्निकरणं दीपोल्मुकं द्वितीयायां

च गोपूजनं निषिद्धं ॥

तथापि

त्रियामगा दर्शतिथिर्भवेच्चेत् सार्धत्रियामा प्रतिपद्विवृध्या ।
दीपोत्सवे ते मुनिभिः प्रदिष्टे व्रतेऽन्यथा पूर्वयुते विधेये ॥

इत्यादि वाक्यानि ॥ यामत्रयमात्रे दर्शे सायं प्रतिपदि उल्मुकादिकं विदधाति इति परविध्धावाक्यसद्भावसूचनेन इमानि पूर्वाविद्धाप्रतिपादकानीति ॥ अथ परविद्धा वाक्यानि ॥

अमावास्यायां क्रीडन्ते गावो लोकस्य मातरः ।
अश्वत्थाधिर्भवेत्तत्र राज्ञां शस्त्रभयं भवेत् ॥

तथा—कुद्दापयेस्त्रासयेच्च गोमहिष्यादिकं नरः ।
एतद्गोक्रीडनं कार्यं प्रातर्नन्दादिने नरः ।

नन्दा प्रतिपत् ॥ तथा

प्रतिपत्सद्द्वितीया चेद्गवां चैव प्रपूजनम् ।
आयुर्वृद्धिः प्रजावृद्धी राज्यवृद्धिस्तदा भवेत् ॥

तथा—कार्त्तिके शुक्लपक्षादावमास्या घटिद्वयम् ।
देशभङ्गभयान्नैव कुर्यान्मङ्गलमालिकाम् ॥

घटिद्वयमिति कुतपकालव्यापिनीत्यादि अतएव ॥

आश्विने मासि दर्शादि तिथयः कीर्तितास्त्रयः ।
दीपदानादिकार्येषु ग्राह्या मध्यान्हकालिकी ॥

इत्यादिविधिनिषेधमुखेनैव परविद्धाप्रतिपादकानीति एवं परस्परविरुद्धार्थप्रतिपादकानां वाक्यानां विचारमन्तरेण निर्णयं कर्तुं न शक्यते इति दीपोत्सवकर्माङ्गभूतास्तिथयस्तत्तत्तिथिविहितकर्मविचारपूर्वकं निर्णेतव्या इति ॥

२१० यैः कार्त्तिकशुक्लप्रतिपन्निर्णये परविद्धावाक्यानादरेण पूर्ववि-द्धामात्राणि वाक्यानि लिखितानि तैस्तु साग्निकविषयत्वं वा स्वमनीषाविजृम्भितमात्रं इतिवाक्यं प्रकटीकृतं ॥ निर्णयास्तु विश्वजनीनवृत्तयो भवन्तीति ॥

---

## ॥ अथ दीपावलि निर्णयः ॥

अथ द्वादशीप्रभृतिद्वितीयापर्यन्तमितिकर्तव्यताप्रदर्शनपूर्वकं दीपावलिर्निर्णीयते ॥ तत्रगोवत्सद्वादशी ॥

श्रीकृष्णउवाच – गोवत्सद्वादशी यावत्कार्तिके कृष्णपक्षगा ।
गौर्वत्ससहिता पूज्या सुशीला दोषवर्जिता ॥
तरुणी च सुरूपा च सुप्रसूता पयास्विनी ।
विशेषोऽत्रप्रकर्तव्यो गोवत्सद्वादशीव्रते ॥
पूजनादिविधानं तत्प्रातः काले विशेषतः ।

अर्चनविधिः—अथ ताम्रमये पात्रे कृत्वा पुष्पाक्षतैः शुभैः ॥
फलैर्नानाविधैरर्घं दधिदूर्वासमन्वितैः ॥
पादमूले तु दातव्यो मंत्रेणानेन पाण्डव ।
माता रुद्राणामित्येष मंत्रोऽयं तु द्विजन्मनाम् ॥

यत्तु वचनम्—पुण्यापि कार्तिके मासि द्वादशी कृष्णपक्षगा ।
पूर्वविद्धा प्रकुर्वीत न कुर्यादपरेऽहनि ॥
द्वादशीमिश्रिता नन्दा पूजयेद्वत्समातरम् ।
आयुर्वृद्धिः प्रजाश्चैव माण्डव्यवचनं यथा ॥

तद्भविष्योक्तसायंकालीनगोवत्सद्वादशीविषयं ॥

[२११] अथत्रयोदशी ॥

स्निग्धस्नानं न कर्तव्यं द्वीतीयायां सदैव हि ।
दशम्यां च त्रयोदश्यां वर्जयित्वा तथाऽश्विनम् ॥

एतस्माद्वचनादाश्विने द्वितीयायां दशम्यां त्रयोदश्यां च स्नानं प्रकर्तव्यं ॥ तदुक्तं स्मृत्यन्तरे

भोगाय क्रियते यत्तु स्नानं यादृच्छिकं नरैः ।
तन्निषिद्धं दशम्यादौ नित्यनैमित्तिके न तु ॥

॥ अथ चतुर्दश्यमावास्याप्रतिपन्निर्णयः ॥

विष्णुः—आश्विने कृष्णपक्षे तु चतुर्दश्यां विधूदये ।
तिलतैलेन कर्तव्यं स्नानं नरकभीरुभिः ॥

[२१२] गार्ग्यः—पूर्वविद्धचतुर्दश्यां कार्तिकस्य सितेतरे ।
पक्षे प्रत्यूषसमये स्नानं कुर्यादतन्द्रितः ॥
अपामार्गपल्लवांश्च भ्रामयेन्मस्तकोपरि ।

मंत्रः—सीतालोष्टसमायुक्त सकंटकदलान्वित
हर पापमपामार्ग भ्राम्यमाणः पुनः पुनः ॥
ततश्च तर्पणं कार्यं धर्मराजस्य नामभिः
ततः प्रदोषसमये दीपान्दद्यान्मनोरमान् ॥
ब्रह्मविष्णुशिवादीनां भवनेषु मठेषुच ।
नरकाय प्रदातव्यो दीपः संपूज्य देवताः ॥
एवं प्रभातसमये ह्यमायां तु नराधिप ।
स्नात्वा देवान्पितृन्भक्त्या संपूज्याथ प्रणम्य च ॥
कृत्वा च तर्पणं श्राद्धं दधिक्षीरघृतादिभिः ।

[२१३] ततोऽपराण्हसमये घोषयन्नगरे नृपः ॥

भ्वोऽथ राज्यं बलेर्लोका यथेष्टं चेष्टतामिति ।
लोकश्चापि प्रहृष्टात्मा सुधाधवलिताजिरे ॥
वृक्षचंदनमाल्याद्यैश्चर्चिते च गृहे गृहे ।
दीपमालाकुले रम्ये विध्वस्तध्वान्तसञ्चये ॥
प्रदोषे दोषरहिते शस्ते दोषागमे पुरे ।
आशीः पूर्वमुखाभिस्तु कन्याभिः क्षिप्ततण्डुलैः ॥
नीराजनं प्रकर्तव्यं वृक्षशाखास्थदीपकैः ।
अमावास्याप्रदोषेऽत्र ये दद्युः पितृदीपकम् ।
न तेषामन्धतमसं पश्यन्ति पितरो ध्रुवम् ॥
इयं वै कौमुदी रात्रिर्विचन्द्रापि महोज्वला ।
कर्तव्या गीतवादित्रयुक्ता निद्राविवर्जिता ॥
ततः प्रत्यूषे नारीभिः शूर्पडिण्डिमवादनैः ।
निःक्राम्यते प्रहृष्टाभिरलक्ष्मीः स्वगृहाङ्गणात् ॥
राजा प्रभातसमये यथार्हं मानयेज्जनान् ।
कुट्टापयेत् त्रासयेच्च गोमाहिष्यादिकांस्ततः ॥
एतद्गोक्रीडनं कार्यं प्रातर्नन्दादिने नरैः ।
२१४ ततोऽपराण्हसमये पूर्वस्यां दिशि भारत ॥
मार्गपालीं प्रबध्नीयात्तुङ्गे स्तंभेऽथ पादपे ।
स्थापितस्य पुरा प्रातारात्रौ दैत्यपतेर्बलेः ॥
पूजां कुर्यान्नृपः साक्षाद्विन्ध्यावल्या सह स्त्रिया ।
बलिराज नमस्तुभ्यं विरोचनसुत प्रभो ।
भविष्येन्द्र सुराराते पूजेयं प्रतिगृह्यतामिति ॥
द्वितीयायां स्वसा भ्रातुर्माङ्गल्यं विदधाति च ।

एवं द्वादश्यादि द्वितीयान्तमुत्सवो भवति॥ तत्र तिथिद्वैधे विश्लेषेणोत्सवो न कर्तव्यः ॥

यतः ॥ संलग्नमेतत्कर्तव्यं दीपोत्सवदिनत्रयम्।

विभेदं कुरुते यस्तु नरके स निमज्जति ॥

अत्र दिनत्रयमिति सर्वदिनोपलक्षणं॥ अस्मिन्नुत्सवे हि केषु चित्पुराणेषु चतुर्दश्यादि दिनत्रयं काल इत्युक्तं ॥ तदनुसारेण दिनत्रयमित्युक्तं ॥ तत्समानत्वादितरेषु तथात्वमिति न्यायात् ॥ सर्वेष्वपि संलग्नत्वं युक्तं ॥ एवं संलग्नत्वे सति यदा द्वादशी स्वल्पा तत्रैव द्वादशीत्रयोदशीकर्म ॥ चतुर्दशीस्नानं तु यदा विधूदये चतुर्दशी तदा कार्यं ॥

[२१५] अभ्यङ्गे चोदधिस्नाने दन्तधावनमैथुने।

जाते च निधने चैव तत्कालव्यापिनी तिथिः ॥

इति वचनात् उभयोर्दिनयोश्चतुर्दशीसत्त्वे पूर्वदिने स्नानं ॥ पूर्वविद्धचतुर्दश्यामिति वचनात् ॥ नचैवममावास्याविश्लेषापत्तिः प्रत्यूषस्योत्तरदिनान्तःपातित्वेन स्मृतौ वचनात् ॥ नन्वेवं द्वितीयदिन एव चतुर्दशीसद्भावे त्रयोदश्या सह संलग्नताविश्लेषः स्यात् ॥ न प्रत्यूषस्य पूर्वदिनान्तर्गतेऽपि स्मृतिवचनात् ॥ चतुर्दश्यां कालरात्रिदीपदानं विश्लेषेणापि कार्यं ॥ विधूदयस्य स्नानस्य संलग्नतयाऽरंभेण सर्वस्य चतुर्दशीकर्मणः संलग्नतासिद्धेः॥ यदि द्वितीयदिने चतुर्दशी स्वल्पा तदा रात्रावमावास्यायां चातुर्दशिकं दीपदानं सह कर्तव्यमिति ॥ दर्शे तु श्राद्धकालानुरोधेन निर्णयः ॥

[२१६] इन्दुक्षयेऽश्विने मासि पितृकर्म विधाय च।

दीपदानं ततः कुर्यात्सायान्हे च ततोल्मुकम् ॥
रिक्तायुक्ते यदा दर्शे श्राद्धकालो न लभ्यते ।
तदापरेऽन्हि कर्तव्यं श्राद्धं दीपोल्मुकं तथा ॥
श्राद्धकाले यदा दर्शोऽपराण्हे प्रतिपद्यदि ।
दीपदानादिकं कर्म तत्प्रदोषे न दुष्यति ॥
दर्शश्राद्धं विना यस्मिन्राष्ट्रे दीपोल्मुकं भवेत् ।
तद्राष्ट्रं नाशमायाति परराष्ट्राग्नितस्करैः ॥
पूर्वं नीराजनं कृत्वा दीपान्दद्यात्तथैव च ।
पश्चाद्यः कुरुते श्राद्धं तत्सर्वमासुरं भवेत् ॥

इत्यादि वचनानि च यावत् श्राद्धकालेऽपि कुतपप्रभृति श्राद्धकाले यदा दर्श इति श्राद्धकालस्य सिद्धस्यैवानुवादीनि॥

२१७ तथा—आश्विने मासि दर्शाद्यतिथयः कीर्तितास्त्रयः ।
दीपदानादि कार्येषु ग्राह्या मध्यान्हकालिकाः ॥
अर्धोदयात्सहस्रांशोः प्रातः स्यात् त्रिमुहूर्तकः ।
संगवस्त्रिमुहूर्तः स्यान्मध्यान्हस्त्रिमुहूर्तकः ॥
यदि स्युः संगवादर्वागेते च तिथयस्त्रयः ।
दीपदानादिकार्येषु कर्तव्याः पूर्वसंयुताः ॥
अथ चेत्संगवादूर्ध्वमेते स्युस्तिथयस्त्रयः ।
भवन्ति वृद्धगामिन्यः कर्तव्याः परसंयुताः ॥

अथ भविष्योत्तरपुराणे—

तिथीनां प्रवरा यस्माद्ब्रह्मणा समुदाहृता ।
प्रतिपादितेयं पूर्वा प्रतिपत्तेन चोच्यते ॥
तिस्रो ह्येताः पुरा प्रोक्तास्तिथयः कुरुनन्दन ।

कार्तिकेऽश्वयुजे मासि चैत्रे मासि च भारत ॥
स्नानं दानं शतगुणं कार्तिके या तिथिर्भवेत् ।

२१८ कालनिर्णये उक्तं ब्रह्मपुराणे

कार्तिके शुक्लपक्षे तु विधानद्वितयं हितम् ।
नारीनीराजनं प्रातः सायं मङ्गलमालिकाम् ॥
अथ चेत्प्रतिपत्स्वल्पा नारीनीराजनं भवेत् ।
द्वितीयायां तदा कुर्यात्सायं मङ्गलमालिकाम् ॥

भविष्यत्पुराणे—लभ्यते यदि वा प्रातः प्रतिपद्घटिकाद्वयम् ।
तस्यां नीराजनं कुर्यात्सायं मङ्गलमालिकाम् ॥

अत्र प्रातरित्यव्ययं पञ्चम्यन्तं व्याख्येयं घटिकेति पूर्वपदं द्विवचनान्तं ॥ घटिकयोर्द्वयं घटिकाद्वयमिति एवं प्रातस्त्रिमुहूर्तादूर्ध्वं घटिकाचतुष्टयं प्रतिपदित्युक्तं भवति ॥ एवं दशघटिकायां प्रतिपदि पूर्वेद्युः श्राद्धकाले अमावास्या भवति यदा तदा दशघटिकायां प्रतिपदि नीराजनादिकं कर्तव्यं ॥ पूर्वस्मिन्दिवसे श्राद्धकाले दर्शाभावे सति घटिकाशब्दस्य बहुवचनान्तव्याख्यानेऽपि नीराजनादि न कर्तव्यमिति ॥

२१९ तथा देवीपुराणे

प्रातर्यदि तु लभ्येत प्रतिपद्घटिकाद्वयम् ।
द्वितीयायां तदा कुर्यात्सायं मङ्गलमालिकाम् ॥
अश्विनान्ते चतुर्दश्यां नारीनीराजनं भवेत् ।
नारीणां तत्र वैधव्यं देशे दुर्भिक्षमेव च ॥
कार्तिके शुक्लपक्षादावमावास्या घटिद्वयम् ।
देशभङ्गभयान्नैव कुर्यान्मङ्गलमालिकाम् ॥

अत्रापि घटिद्वयामिति श्राद्धकालस्य कुतपस्य ग्रहणं ॥
शिवरहस्ये–प्रतिपद्दिवसे कुर्यात्पूजां गोवर्धनस्य च ।

पूर्वविद्धा न कर्तव्या यावद्दृश्या त्विनोदयात् ॥
नन्दायामे मोदमाना भद्रा नष्टा प्रजायते ।
पूतं भवति तद्वर्षं राज्यदं सुखवर्धनम् ॥

एवं सति श्राद्धकाले यदामावास्या भवति तदा सैव दीपदानादिषु ग्राह्येति सिद्धं ॥ [२२०] ननु तुलासंक्रान्तौ परविद्धा यां प्रतिपदि गोक्रीडाया निषेधः श्रूयते तेन तुलासंक्रान्तितोऽन्यत्र परविद्धा तुलासंक्रान्तौ पूर्वविद्धा ॥ तत्र वचनानि ॥

कार्तिकस्यासिते पक्षे तुले भानुर्यदा भवेत् ।
यत्नेन वर्जयेद्भद्रां गवां क्रीडनकर्मणि ॥
आश्विनान्ते चतुर्दश्यां तुलासंस्थे दिवाकरे ।
दिनान्ते दृश्यते चामा कलामात्रापि कर्हिचित् ॥
तदापराण्हे श्राद्धं स्यात्सायं दीपोल्मुकादिकम् ।
प्रातर्गोक्रीडनं कार्यं दर्शे नन्दायुते सदा ॥
अमायां च क्रीडन्ति चेद्गावो लोकस्य मातरः ।
अश्वव्याधिर्भवेन्नैव राज्ञां शस्त्रभयं नहि ॥
प्रतिपद्दर्शसंयोगे गावो यत्र प्रपूजिताः ।
तत्रायुर्वर्धते नित्यं राज्यं पुत्रधनं तथेति ॥

नैतद्युक्तं ॥ ब्रह्माण्डपुराणे ॥ [२२१] तुलासंक्रान्तावेव पूर्वविद्धायाः प्रतिपदो गोक्रीडाया निषेधात् ॥

आश्विने शुक्लपक्षे तु तुले भानुर्यदा भवेत् ।
स्त्रियः क्रीडन्तु दर्शेषु गावो नन्दासु कार्तिके ॥

कार्तिके शुक्लपक्षे तु तुले भानुर्यदा भवेत् ।
यत्नेन वर्जयेद्दर्शं गोक्रीडायां तु भूतले ॥
गावः संक्रीडमानास्तु नाशं यान्ति न संशयः ।
आयुःक्षतिः प्रजानाशश्छत्रभङ्गो नराधिप ॥
प्रतिपत्सद्वितीया चेद्गवांचैव प्रपूजनम् ।
आयुर्वृद्धिः प्रजावृद्धी राज्यवृद्धिस्तदा भवेत् ॥
अमावास्यायां क्रीडन्ति गावो लोकस्य मातरः ।
अश्वव्याधिर्भवेत्तत्र राज्ञां शस्त्रभयं भवेत् ॥

तस्मान्न तुलासंक्रान्तिसदसद्भावाभ्यां व्यवस्था ॥ किंतु श्राद्धकालेनैव व्यवस्था ॥ २२२ किं च चतुर्दश्यां कलामात्रायाममावास्यायां श्राद्धमिति वाक्येन षट्त्रिंशद्घटिकायामपि परदिने अमावास्यायां सत्यां तामुत्सृज्य पूर्वदिने श्राद्धं स्यादित्यतिप्रसङ्गः ॥ श्राद्धकालानुरोधेन व्यवस्थायां तु न कश्चिद्दोषः ॥ ननु प्रतिपच्चन्द्रदर्शने निषेधः श्रूयते ॥

यथा—नन्दा किञ्चिद्युता यत्र दृश्यते च द्वितीयया ।
बलेर्दानं न कर्तव्यं चन्द्रदर्शनसंभवात् ॥
गवां च क्रीडने नन्दा द्वितीयामिश्रिता यदा ।
क्षतिरायुः प्रजानां च छत्रभङ्गो नराधिप ॥
सायान्हे च चतुर्दश्याममा यत्र प्रदृश्यते ।
तत्र श्राद्धं तथा दीपं पितॄणामक्षयं भवेत् ॥

तथा—त्रियामगा दर्शतिथिर्भवेच्चेत्सार्धत्रियामा प्रतिपद्विवृध्द्या ।
दीपोत्सवे ते मुनिभिः प्रदिष्ट अतोऽन्यथा पूर्वयुते विधेये ॥

इति सत्यमयं निषेधः साग्निकविषयः ॥ अतः स-

र्वास्वप्यमावास्यासु चन्द्रदर्शने प्रतिपदि यागनिषेधकानि व-
चनानि ॥

त्रिमुहूर्ता द्वितीया चेत्प्रतिपद्यापराण्हिकी ।
अन्वाधानं चतुर्दश्यां परतः सोमदर्शनात् ॥

तत्रापि त्रिमुहूर्तेत्येव सिद्धा चापराण्हिकीत्युक्तिः ॥ पञ्च-
धा विभक्तापराण्हव्यापकत्वमभिप्रेतमिति कालादर्शाभि-
प्रायो लक्ष्यते ॥ प्रातः प्रतिपद्घटिकाद्वयमित्यपि द्विधाविभ-
क्तः पूर्वाण्हः प्रातस्ततो घटिकयोर्द्वयमिति व्याख्यानं युक्तं ॥
तथापि शाखाभेदेन व्यवस्था युक्ता ॥ पूर्वां पौर्णमासीमुपव-
सेदिति पैंग्यं उत्तरामिति कौषीतकं ॥ तस्मादुत्तरामुपवसेदि-
ति शतपथे तद्धैके दृष्ट्वोपवसन्तीत्येकीयमुक्त्वोक्तं ॥ यदहरेव-
पुरस्ताच्चन्द्रमा अभ्युदेति तदहर्यजन्ते ॥ [२२३] ननु तिथि-
क्षये पूर्वविद्धावाक्यानि तिथिवृद्धौ परविद्धावाक्यानि इतिव्य-
वस्थाप्यताम् ॥ सत्यं ॥ क्षयवृद्धिभ्यां श्राद्धकालस्य द्वैधे व्य-
वस्था युक्ता ॥ इतरथा क्षयवृध्धिमात्रे व्यवस्थायामतिप्रसङ्गः ॥
दीपदानकालस्तु परदिने त्रियामगायाममावास्यायां अवश्यं
त्याज्यः श्राध्धकालस्तु साग्निकैश्च यथायथं व्यवस्थितो न क-
दाचित्त्याज्य इति ऐकान्तिकीयं व्यवस्था युक्ता ॥ अत एव
विश्वरूपनिबन्धे

दर्शस्य निर्णयेनैव निर्णीता दीपमालिका ।
अतो न निर्णयस्तस्याः पृथक्त्वेन कृतो बुधैः ॥

अनन्तभट्टेऽपि कालनिर्णयकारप्रभृतिभिरपि पृथङ्नि-
र्णयस्तेनाशयेन कृतः ॥ साधारणनिर्णये सामान्यवचनमेवो-

दाहृतं ॥

यथा—श्रावणी दुर्गनवमी दूर्वा चैव हुताशनी।

पूर्वविद्धा प्रकर्तव्या शिवरात्रिर्बलेर्दिनमिति ॥

एतद्वचनेन सर्वदा पूर्वविद्धाग्रहणे सर्वत्रातिप्रसङ्गः ॥ श्रावणी विष्टिकरणेऽपि स्यात् दुर्गनवमीदिने पूर्णापि परा न स्यात् ॥

२२४ तस्मात्—यस्यामस्तं रविर्याति पितरस्तामुपासते ।

इत्यादि सामान्यवाक्यानि कुतपकालेनापराण्हकालेन व्यवस्थाप्यन्ते यथा तथा कौमुदीवाक्यान्यपि व्यवस्थापनीयानि ॥ निर्णयामृतेऽपि पूर्वविद्धावाक्यानुदाहृत्यान्वाधानं चतुर्दश्यामिति वाक्यमुदाहृतं तेन साग्निकविषयताभिप्रेता ॥ त्रियामगेवेति वाक्यं तृतीययामगेति व्याख्यातं॥संख्यातः पूरणप्रत्ययस्य लुक् दृश्यते ॥ निर्णयभास्करे पूर्वत्रिध्धवाक्यानि व्रतान्तरविषयाणीत्युक्तं ॥ यथा तत्र लिखितं ब्रह्मपुराणे ।

आश्विने शुक्लपक्षे तु तुले भानुर्यदा भवेत् ।

स्त्रियः क्रीडन्तु दर्शे तु गावो नन्दासु कार्तिके ॥

कार्तिके शुक्लपक्षे तु तुले भानुर्यदा भवेत् ।

यत्नेन वर्जयेद्दर्शे गोक्रीडायां तु भूतले ॥

गावः संक्रीडमानास्तु नाशं यान्ति न संशयः ।

आयुः क्षतिः प्रजानाशश्छत्रभङ्गो नराधिप ॥

प्रतिपत्सद्द्वितीया चेद्दर्वा चैव प्रपूजनम् ।

आयुर्वृध्धिः प्रजावृध्धी राज्यवृधिस्तथा भवेत् ॥

अमावास्यायां क्रीडन्ते गावो लोकस्य मातरः ।

अंश्वव्याधिर्भवेत्तत्र राज्ञां शस्त्रभयं भवेत् ॥

अतः सूर्योदयसंबंधिन्येवग्राह्या ॥ यत्पुनर्ब्रह्मवैवर्तवचनं ॥

प्रतिपत्संमुखा कार्या द्वितीया द्विजसत्तमेति ।

प्रतिपद्द्वितीययोरपि पूर्वविध्धत्वमुक्तं तत्कृष्णपक्षोपोषणाभिप्रायेण॥एवमन्यदपि प्रतिपदः पूर्वविध्धवचनानि व्रतांन्तरविषयाणीति सिध्धं ॥ [२२५] तथा—दीपोत्सवी द्वितीया यमद्वितीया तस्यां भगिनीभिर्भ्रातरो भोज्यन्ते ॥ तदुक्तं ॥

द्वितीयायां स्वसा भ्रातुर्माङ्गल्यं विदधाति च ।

व्रतखण्डात्—कार्तिके शुक्लपक्षस्य द्वितीयायां युधिष्ठिर ।

यमो यमुनया पूर्वं भोजितः स्वगृहेऽर्चितः ॥

अतो यमद्वितीया सा प्रोक्ता लोके युधिष्ठिर ।

अस्यां निजगृहे पार्थ न भोक्तव्यमतो बुधैः ।

स्नेहेन भगिनीहस्ताद्भोक्तव्यं पुष्टिवर्धनम् ॥

भगिन्यभावे—पितृव्यभगिनीहस्तात्प्रथमायां युधिष्ठिर ।

प्रथमायां ज्येष्ठायां ॥

तथा—सर्वैस्तु भगिनीहस्ताद्भोक्तव्यं बलवर्धनम् ।

धन्यं यशस्यमायुष्यं धर्मकामार्थसाधकमिति ॥

तथा—भ्रातृभिर्भगिन्योऽपि वस्त्रालङ्कारादिभिः पूज्याः ॥

तत्रैवोक्तं—दानानि च प्रदेयानि भगिनीभ्यो विधानतः ।

स्वर्णालङ्कारवस्त्रादिपूजासत्कारभोजनैः ॥

सर्वाभगिन्यः संपूज्या अभावे प्रतिपन्नगा इति ।

तथा—अस्यां यमुनास्नानं यमपूजनं च प्रशस्तं पुराणे ॥

ऊर्जे शुक्लद्वितीयायामपराण्हेऽर्चयेद्यमम् ।

स्नानं कृत्वा भानुजायां यमलोकं न पश्यति ॥

तथा तत्रैव–द्वितीयायां महोत्सवे नारकीयास्तु तर्पिताः ।
पापेभ्यो विप्रमुक्तास्ते मुक्ताः सर्वनिबन्धनात् ॥
तेषां महोत्सवो वृत्तो यमराष्ट्रसुखावहः ।
अतो यमद्वितीया सा त्रिषुलोकेषु विश्रुतेति ॥

॥ इति दीपावलि निर्णयः ॥

कृतेऽचलद्विवेदेन ग्रन्थे निर्णयदीपके ।
दीपावली च निर्णीता प्रतिपन्निर्णयान्विता ॥

## ॥ अथ द्वितीया निर्णयः ॥

[२२६] अथ द्वितीया तिथिरुपवासादिषु निर्णीयते ॥ परस्परविरुद्धार्थाभिधायिनां वाक्यानां व्यवस्थाप्रातिपादनं निर्णयः तथा–एकादश्यष्टमी षष्ठी द्वितीया च चतुर्दशी ।
त्रयोदशी अमावास्या उपोष्याः स्युः परान्विता इति ॥
अनेन विष्णुधर्मवचनेन द्वितीया तृतीयाविध्धोपोष्येति॥स्मृत्यन्तरवचने– ननु द्वितीया तृतीयाविध्धोपवासे निषिध्धेति तदुक्तं– तृतीयैकादशी षष्ठी तथा चैवाष्टमी तिथिः ।
वेधादधस्ताध्धन्त्युस्ता उपवासतिथिं त्विमाम् ॥
तृतीया स्ववेधादुपवासे अधस्तादधोवर्तिनीं द्वितीयां हन्तीत्यनेन तृतीयाविध्धा द्वितीया नोपोष्या इति प्राप्तं ॥ एवं द्वैधे सति ॥

श्रुतिद्वैधं तु यत्र स्यात्तत्र धर्मावुभौ स्मृतौ ।
स्मृतिद्वैधे तु विषयः कल्पनीयः पृथक् पृथक् ॥

इति वचनात् युग्माग्नीति युग्मसाहचर्येण विधिवाक्येन शुक्लद्वितीया परविध्धा ग्राह्येति ॥ कृष्णाद्वितीया पूर्वविध्धोपोष्येति एवं निषेधवाक्यस्यार्थवत्ता भवतीति व्यवस्था ॥ इदमर्थमभिप्रेत्य दीपीकाकारः ॥ [२२७] अथगादिता कृष्णा द्वितीया दिवा पूर्वाण्हे यदि सासिता तु ॥

परतः सर्वेति स्पष्टोऽ न्वयः ॥

प्रतिपत्सद्वितीया स्याद्वितीया प्रतिपद्युतेति ।

द्वितीयायाः प्रतिपद्युक्तत्वं तूपवासव्यतिरिक्ताशून्यशयनादिव्रतविशेषविषये च स्थापितं प्रतिपन्निर्णये ॥ अशून्यशयनस्य चन्द्रोदयविषयत्वात् तत्कालव्यापिन्यां तिथावेव कर्तव्यं ॥ तदुक्तं—एकभक्ते दिवानक्ते निशि चन्द्रोदयव्रते ।

तिथिस्तात्कालिकी ग्राह्या पारणे त्वपरा तिथिः ॥

यत्तु—अशून्यशयनव्रतस्य परविध्धाविधानं ॥ [२२८]

चतसृष्वसिते पक्षे मासेषु श्रावणादिषु ।

अशून्याख्यं व्रतं कुर्याज्जयया तु फलाधिकम् ॥

जया तृतीया ॥ तद्दिनद्वयव्यापित्वविषयं ॥ तिथिवृध्धौ पराभिधानादिति ॥ दीपोत्सवद्वितीया यमद्वितीया साभ्रातुर्माङ्गल्ये कर्मणि दीपोत्सवानुरोधेन पूर्वविध्धा परविद्धा वा यथासंभवं कार्या ॥

द्वितीयायां स्वसा भ्रातुर्माङ्गल्यं विदधाति च ।

भागिनीभिर्भ्रातरो भोज्यन्ते तैर्वस्त्रादिकं दीयत इति ॥

[२२९] यत्तु कैश्चित्कृष्णाद्वितीयापि परविध्धोपोष्येत्याशयेन तृतीयैकादशी त्यस्मिन्वाक्ये चोपवासशब्दः पूर्वविद्धाशून्यशय-

नादिव्रतपरो लक्षणयाभ्यधायि

तदुक्तं-प्रतिपत्संमुखाकार्या द्वितीया द्विजसत्तमेति ।

ब्रह्मवैवर्तवचनेन कृष्णाद्वितियाया उपवासे पूर्वविद्ध-त्वमाभिहितं ॥ संभवति हि मुख्यार्थे लक्षणा न न्याय्येति ॥

२३० इति द्वितीयासामान्य निर्णयः ॥

---

## ॥ अथ द्वितीया विशेषः ॥

द्वितीयाया अधिपतिर्ब्रह्मा अतः पक्षद्वयगतासु द्विती-यासु ब्रह्मा पूज्यः ॥ तदुक्तं भविष्यत्पुराणे ॥

ब्रह्माणं हि द्वितीयायां संपूज्य ब्रह्मचारिणः ।
भोजयित्वा च विद्यानां सर्वासां सारगो भवेत् ॥
सुवर्णनिर्मितो ब्रह्मा कर्तव्यश्च तिथीश्वरः ।
समिदाज्यदधिक्षीरमाक्षिकाणि च होमयेत् ॥
तेन संतोषितो ब्रह्मा स च विद्याप्रदो भवेत् ।

इतिब्रह्मव्रतं-अथ चैत्रशुक्लद्वितीया तत्रोमाशिवाग्नीनां पू-जा कार्या ॥

तदुक्तं-चैत्रशुक्लद्वितीयायामुमा पूज्या फलार्थिभिः ।
शिवपूजाग्निपूजा च कर्तव्या मुनिसत्तमेति ॥

२३१ देवीपुराणे-उमां शिवं हुताशं च द्वितीयायां प्रपूजयेत् ।
हविष्यमन्नं नैवेद्यं देयं गन्धार्चनान्वितम् ॥
फलमाप्नोतिविप्रेन्द्र सर्वक्रतुसमुद्भवम् ।

इति चैत्रद्वितीया ॥ अथाशून्यशयनद्वितीया ॥ श्रावणा-

दिषु चतुर्षु मासेषु कृष्णद्वितीयायां अशून्यशयनव्रतं कार्यं ॥

तदुक्तं भविष्यत्पुराणे ॥

समन्तुः—अशून्यशयनां नाम द्वितीयां शृणु भारत ।

यामुपोष्य न वैधव्यं स्त्री प्रयाति नराधिप ॥

पत्नीवियुक्तश्च नरो न कदाचित्प्रजायते ।

उपोष्येति नक्तं भुञ्जतित्युक्तं ग्रंथान्तरे ॥

शेते जगत्पतिः कृष्णः श्रिया सार्धं यदा नृप ।

अशून्यशयना नाम तदा ग्राह्या तु सा तिथिः ॥

कृष्णपक्षे द्वितीयायां श्रावणे मासि भारत ।

इदमुच्चारयेत्प्रातः प्रणम्य च जगत्पतिम् ॥

मत्स्यपुराणे—श्रावणस्य द्वितीयायां कृष्णायां मधूसूदनः ।

क्षीरार्णवे सलक्ष्मीकः सदा वसति केशवः ॥

तस्यां द्वितीयायामशून्यशयनं नाम व्रतं कार्यं कृष्णपक्षादिमासाभिप्रायेणारम्भः ॥ नागरखण्डे ॥

२३२ सूतउवाच—अषाढ्यां समतीतायां द्वितीयादिवसे स्थिते ।

प्रातरुत्थाय विप्रेन्द्र नक्षत्रे विष्णुदैवते ॥

पापिष्ठैः पतितैर्म्लेच्छैर्भाषणं नैव कारयेत् ।

ततो मध्यान्हसमये स्नात्वा धौताम्बरः शुचिः ॥

जलशायिनमासाद्य मंत्रेणानेन पूजयेत् ।

श्रीवत्स धारिन् श्रीकान्त श्रीधामन् श्रीपतेऽव्यय ॥

गार्हस्थ्यं मा प्रणाशं मे यातु धर्मार्थकामदम् ।

लक्ष्म्या वियुज्यते देव न कदाचिद्यथा भवान् ॥

तथा कलत्रसंबंधो देव मा मे वियुज्यताम् ।

विष्णुरहस्ये पुनरिमे मंत्राः ॥

पत्नी भर्तृवियोगं च भर्ता भार्यासमुद्भवम् ।
नाप्नुवन्ति यथा दुःखं दाम्पत्यानि तथा कुरु ॥
यथा श्रियावियुक्तस्त्वं लक्ष्मीर्देव त्वया यथा ।
प्रसादात्तव देवेश स्थितिरस्तु तथावयोः ॥
मास्मत्पुत्राः प्रणश्यन्तु मा धनं मा कुलक्रमः ।
अग्नयो मा प्रणश्यन्तु गृहभङ्गोऽस्तु मावयोः ॥
एवं प्रसाद्य पूजां च कृत्वा लक्ष्म्यास्तथा हरेः ।
फलानि दद्याच्छय्यायामभीष्टानि जगत्पतेः ॥
नक्तं प्रणम्यायतने हरिं भुञ्जीत वाग्यतः ।

नक्तं भुञ्जीतेत्यर्थः । हरिं प्रणम्य संपूज्येत्यर्थः ॥ अशून्यशयनं हि चन्द्रोदये क्रियत इत्युक्तं प्राक् ॥

ब्राह्मणाय द्वितीयायां शय्या देया सदक्षिणा ।
यानि तत्र महाबाहो काले सन्ति फलानि च ॥
मुक्ता फलानि शय्यायां स्त्रीलिङ्गानि च वर्जयेत् ।
द्वितीयेऽन्हि प्रदेयानि भक्त्या शक्त्या च भारत ॥
वासोदानं तथा धान्यं फलं धान्यसमन्वितम् ।
एवं करोति यः सम्यक् नरो मासचतुष्टयम् ॥
तस्य जन्मशतं वीर गृहभङ्गो न जायते ।

मासचतुष्टयं कृष्णाद्वितीया तिथिरिति शेषः ॥

२३३ पद्मपुराणे—एतन्मंत्रादिकमुपक्रम्य शङ्कर आह ॥

घंटा भवेदशक्तस्य सर्ववाद्यमयी यतः ।
एवं संपूज्य गोविन्दमश्नीयात्तैलवर्जितम् ॥

नक्तभक्षारलवणं यावत्तस्याश्चतुष्टयम् ।
ततः प्रभाते संजाते लक्ष्मीपतिसमन्वितम् ॥
दीपान्नभोजनैर्युक्तां शय्यां दद्याद्विचक्षणः ।
पादुकोपानहौ छत्रचामरासनसंयुताम् ॥
अव्यंगाङ्गाय विप्राय वैष्णवाय कुटुम्बिने ।
दातव्या वेदविदुषे न बकव्रतिने क्वचित् ॥
तत्रोपवेश्य दम्पत्यं अलङ्कृत्य यथाविधि ।
पक्वान्नभाजनं दद्यात् भक्ष्यभोज्यसमान्वितम् ।
ब्राह्मणश्चापि सौवर्णीमुपस्करसमन्विताम् ।
प्रतिमां देवदेवस्य सोदकुंभां निवेदयेत् ॥
एवं यस्तु पुमान्कुर्यादशून्यशयनं हरेः ।
न तस्य वित्तविरहः कदाचिदपि जायते ॥
नारी वा विधवा राजन् यावच्चन्द्रार्क तारकम् ।
न विरूपं न शोकार्त्तं दम्पत्यं जायते क्वचित् ॥
नपुत्रविरहादिकामिति ॥

सप्तकल्पसहस्राणि सप्तकल्पशतानि च ।
कुर्वन्नशून्यशयनं विष्णुलोके महीयते ॥

इत्य शून्यशयनव्रत विधिः ॥

---

## ॥ अथ प्रकृति पुरुष व्रत विधिः ॥

निर्णयोऽपि ॥

२३४ अथ चैत्रशुक्लद्वितीयायामग्नौ प्रकृतिं पुरुषं च संपूज-

येन्मुक्तिकाम इति ॥ मार्कण्डेयः ॥

प्रकृतिः पुरुषश्चोभौ जगत्सर्वं प्रकीर्तितम् ।
अग्नीषोमात्मकं सर्वमिति ॥
वासुदेवश्च लक्ष्मीश्च तावेव परिकीर्तितौ ।
चैत्रशुक्लाद्वितीयायां सोपवासो जितेन्द्रियः ॥
पौरुषेण च सूक्तेन वन्हिं संपूजयेत्ततः ।

सोपवासइति प्रकृतत्वात् प्रतिपदि कृतोपवासो द्वितीयायां वन्हिं संपूजयेत् ॥ द्वितीया दिनद्वये चेत् पूर्वाण्हिकी ग्राह्या उपरिष्टात् क्षीरघृतभोजनस्य विहितत्वात् ॥

सर्वेषां चोपवासानां पूर्वाण्हे पारणं स्मृतमिति ।
गंधमाल्य धूपदीपान्नसंपदा ॥
लक्ष्मीं च वरदां देवं पूजयेदुदके हरिम् ।
श्रीसूक्तेन च धर्मज्ञो यथावन्मनुजोत्तमः ॥
काञ्चनं राजतं चोभौ दद्याद्विप्रेषु दक्षिणाम् ।
ततः क्षीरघृतं भोज्यं ॥
संवत्सरमिदं कृत्वा व्रतं सम्यगुपोषितः ।
मुच्यते पातकैः सर्वैर्मोक्षोपायं च विन्दति ॥

इति विष्णु धर्मोक्त प्रकृति पुरुष व्रत विधिः

अन्ये द्वितीयाव्रतविशेषाः व्रतसमुच्चयादवगन्तव्या इति ॥ नक्तव्रतादि विशेषे तत्कालव्यापिन्यामिति निर्णयः ॥ तथा धनार्थिना द्वितीयादिवसे महालक्ष्मीः पूजनीयेति ॥ तदुक्तं स्कान्देनागरखण्डे ॥ लक्ष्मीं प्रति ब्रह्मोवाच ॥

महालक्ष्मीति ते नाम तस्मादत्र भविष्यति ।

अत्रेति हाटकेश्वरक्षेत्रे ॥

गजवक्त्रां नरो यस्त्वां पूजयिष्यति भक्तितः ।
सगजाधिपतिर्भूपो भविष्यति च भूतले ॥
द्वितीयादिवसे यस्त्वां महालक्ष्मीरिति ब्रुवन् ।
श्रीसूक्तेन सुभक्त्याथ यस्त्वां संपूजयेदिति ॥
सप्तजन्मान्तरेणैव न भविष्यति सोऽधनः ।

॥ इति द्वितीया निर्णयः ॥

कृतेऽचलद्विवेदेन ग्रन्थे निर्णयदीपके ।
द्वितीयानिर्णयो जातो विशेषेण व्रतान्वितः ॥

## २३६ अथ तृतिया निर्णय प्रस्तुयते

तत्र रम्भां वर्जयित्वान्या सर्वापि तृतीया चतुर्थीयुक्तैवोपवासे ग्राह्या ॥

तदुक्तं—षष्ठ्यरम्भातृतीयैकादशी कृष्णत्रयोदशी ।
चतुर्थीत्ववरा युग्मेत्येताः पूज्याः परान्विताः ॥

विष्णुधर्मोत्तरे—एकादश्यष्टमी षष्ठी पौर्णमासी चतुर्दशी ।
अमावास्या तृतीया च ता उपोष्याः परान्विताः ॥

यत्तु युग्माग्नीत्यादिवाक्ये तृतीयाया द्वितीयोपहताया उपादेयत्वमुक्तं तद्रम्भाव्रते चोपतिष्ठते ।

यथा—अनङ्गत्रयोदशी रम्भा चोपोष्याः पूर्वसंयुताः ।

तथा च कालादर्शे—

सावित्र्यमा पौर्णमासी चतुर्थी गणसंज्ञिताः ॥

रम्भा तृतीया चेत्येता उपोष्याः पूर्वसंयुताः ।

गणसंज्ञिता गणेशचतुर्थी ॥

[२३७]ब्रह्मवैवर्ते—रम्भाख्यां वर्जयित्वा तु तृतीयां द्विजसत्तम ।

अन्येषु सर्वकार्येषु गणयुक्ता प्रशस्यत इति ।

स्कन्दपुराणे—कृष्णाष्टमी चतुर्थी च सावित्री वटपैतृकी ।

अनङ्गत्रयोदशी रम्भा उपोष्याः पूर्वसंयुताः ॥

एवं रम्भायाः पूर्वविद्धावचनप्रदर्शनेन रम्भाव्यातिरिक्तान्येषु व्रतेषु सर्वेषूपवासव्रतेषु तृतीयायाः गणयुक्तायाः प्राशस्त्यदर्शनेन च द्वितीयातृतीययोर्युक्तत्वं रम्भाव्रते स्थाप्यते ॥ रम्भाव्रतादन्यत्र पूर्वविद्धा निषिद्धा ॥

तदाहुः—द्वितीया पञ्चमी वेधाद्दशमी च त्रयोदशी ।

चतुर्दशी चोपवासे हन्युः पूर्वोत्तरां तिथिम् ॥ इति ॥

द्वितीया पूर्वां प्रतिपदं उत्तरां च तृतीयां हन्तीति द्वितीयोपहतानिषिद्धा ॥ [२३८]ननु एतद्रम्भाव्रते निषेधकं कस्मान्न स्यादिति चेत् शृणु रम्भाव्रते पूर्वविद्धाविधानस्य वाचनिकत्वादितिब्रूमः ॥ आग्नेये पुरोडाशे चतुर्धाकरणवदिति अत एव द्वितीयायुक्तायां प्रत्यवायोऽपिश्रूयते ॥

पुराणसमुच्चये—द्वितीयाशेषसंयुक्तां तृतीयां कुरुते तु यः ।

स याति नरकं घोरं कालसूत्रं भयंकरम् ॥

ब्रह्मवैवर्त्तेऽपि—तृतीया तु न कर्त्तव्या द्वितीयोपहता विभो ।

द्वितीयोपहतां तात यः करोति नराधमः ॥

संवत्सरकृतेनेह नरो धर्मेण मुच्यत इति ।

तथा तत्रैव—द्वितीयाशेषसंयुक्तां याकरोति विमोहिता ।

सा वैधव्यमवाप्नोति प्रवदन्ति मनीषिणः ॥

एवं द्वितीयायुक्ता तृतीया प्रतिषिद्धा तत्रैव चतुर्थीयुक्ता प्रशस्यते ॥

चतुर्थीसहिता या च सा तृतीया फलप्रदा ।
अवैधव्यकरी स्त्रीणां पुत्रपौत्रप्रदायिनी ॥

परदिने तिथ्यभावे निषिद्धापि पूर्वविद्धा ग्राह्या ॥ २३९

तथा च निगमवाक्यं—

एकादशी तृतीया च षष्ठी चैव त्रयोदशी ।
पूर्वविद्धा तु कर्तव्या यदि न स्यात्परेऽहनि ॥

एतदुपलक्षणं ॥ एतद्विषये सर्वा अपि परविद्धा पूर्वा ग्राह्या इत्यर्थः ॥ एवं रम्भा पूर्वविद्धा अन्या परविद्धा इति सिद्धान्तः ॥ उपवासप्रत्याम्नाये विहितान्येकभक्तादीनि उपवासतिथौ कर्त्तव्यानीति ॥ अन्यान्येकभक्तादीनि तत्काल-व्यापिन्यामेवेति तृतीयासामान्यनिर्णयः ॥

अथ तृतीयाविशेषनिर्णयः ॥

वैशाखशुक्लतृतीया अक्षय्यतृतीया ॥

तदुक्तं व्रतसमुच्चये

वैशाखस्य सितामेकां तृतीयामक्षयां शृणु ।
यस्यां स्नानं जपो होमः स्वाध्यायः पितृतर्पणम् ॥
दानं च क्रियते किञ्चित् सर्वंस्यादिति चाक्षयम् ।
आदिः कृतयुगस्येयं युगादिस्तेन कथ्यते ॥

२४० पुराणान्तरेऽपि—

वैशाखे मासि शुक्लायां तृतीयायां जनार्दनः ।

यवानुत्पादयामास युगं चारब्धवान्कृतमिति ॥

अत इयं कृतयुगादिः ॥ यत्तु भविष्योत्तरे—

त्रेता सिततृतीयायां वैशाखे समपद्यत इति ॥

त्रेतायुगादिरित्युक्तं—तत्कल्पभेदेन व्यवस्थापनीयं ॥

भविष्योत्तरे—श्रद्धापूर्वं तृतीयायां यद्दत्तं विभवं विना ।

सर्वं तदक्षयं याति श्रूयतामत्र यो विधिः ॥

तृतीयां तामथासाद्य स्नात्वा संतर्प्य देवताः ।

एकभक्तं तदा कुर्यात् वासुदेवं प्रपूजयेत् ॥

उदकुंभान्सकरकान्सान्नान्सर्वरसैः सह ।

ग्रैष्मिकं सर्वमेवात्र सस्यं दाने प्रशस्यते ॥

तथा तत्रैवोक्तं—गोधूमचणकादीनि सक्त्युदध्योदनं तथा ।

इक्षुक्षीरविकारांश्च सहिरण्यान्स्वशक्तितः ॥

छत्रं वस्त्रमुपानं च यदिष्टं तत्प्रदापयेत् ।

अस्यां लक्ष्म्या सह विष्णुः पूज्य इति ॥

२४१ पुराणान्तरेऽपि—वैशाखस्य तृतीयायां श्रीसमेतं जगद्गुरुम् ।

नारायणं पूजयेथाः पुष्पधूपविलेपनैः ॥

इत्यादिविधानं ॥ युगादीनाह पाराशरः ।

वैशाखमासस्य तु या तृतीया नवम्यसौ कार्तिकशुक्लपक्षे ।

नभस्यमासस्य च कृष्णपक्षे त्रयोदशी पञ्चदशी च माघे ॥

मत्स्यपुराणे—वैशाखस्य तृतीया या नवमी कार्तिकस्य च ।

अमावास्या च माघस्य नभस्यस्य त्रयोदशी ॥

एता युगादयः प्रोक्ताः पितॄणां मुक्तिहेतवः ॥ इति ॥

आसु कृत्यमस्मिन्पुराणे

[२४२] पानीयमप्यत्र तिलैर्विमिश्रं दद्यात्पितृभ्यः प्रयतो मनुष्यः ।
श्राद्धं कृतं तेन समासहस्रं रहस्यमेतन्मुनयो वदन्ति ॥

तथा—कृतं श्राद्धं विधानेन मन्वादिषु युगादिषु ।
हायनानि द्विसाहस्रं पितृणां तृप्तिदं भवेत् ॥

महाभारते—मन्वाद्याश्च युगाद्याश्च तिथयस्तासु मानवः ।
स्नात्वा दत्वा च जप्त्वा च अनन्तफलभाग्भावेत् ॥

तथा नक्षत्रवारयोगेन विशेषो नारदीयपुराणे

वैशाखे शुक्लपक्षे तु तृतीया रोहिणीयुता ।
दुर्लभा बुधवारेण सोमेनापि युता तथा ॥

अथ युगादिषु विहितविष्णुपूजादौ श्राद्धे कर्मणि च भविष्यत्पुराणे कालविशेषोऽप्युक्तः ॥ इति ॥

यथा—द्वे शुक्ले द्वे तथा कृष्णे युगादी कवयो विदुः ।
शुक्ले पूर्वाण्हिके ग्राह्ये कृष्णे चैवापराण्हिके ॥ इति ॥

इदं शुक्लयोः पूर्वाण्हिकयोर्ग्रहणं तत्तद्विहितदानपूजनाद्यभिप्रायेण ॥

[२४३] तथा वसिष्ठः—गौरी विनायकोपेता रोहिणी बुधसंयुता ।
विनापि रोहिणीयोगात्पूण्यकोटिफलप्रदा ॥

गौरी तृतीया विनायकश्चतुर्थी

तथा—रोहिणी बुधयुक्तापि पूर्वविद्धा विवर्जिता ।
भक्त्या कृतापि मान्धातः पुण्यं हन्ति पुराकृतं ॥इति॥

अतो विष्णुपूजनादौ परयुता ग्राह्येति सिद्धं ॥ श्राद्धविषये तु ॥

एवं मन्वन्तरादीनां युगादीनां विनिर्णयः ।

महालयस्य पक्षस्य अष्टकानामपि स्मृतः ॥ इति ॥

दर्शश्राद्धनिर्णयप्रकरणे कालादर्शोदाहृतवचनने सर्वेषां युगादीनां आपराण्हिकत्वेन प्राशस्त्याभिधानात् ॥ युगादिप्रयुक्तश्राद्धविषये अमावास्यावदापराण्हिकी तृतीया ग्राह्येति सिद्धान्तः ॥ [२४४] अत्र विशेषः

मासद्वयेऽपि श्राद्धं स्यात्कालवृद्धौ युगादिषु ।

यत्तु वचनं—दशाहरासु नोत्कर्षो न तूत्कर्षो युगादिषु ॥

इदं तु नक्षत्रवारादिभिरुत्पन्नविशेषव्रतदानपरमित्युपाकर्मनिर्णये विशेषतो निर्णेष्यते ॥ तथाक्षयतृतीयायां गङ्गास्नानं कुर्यात् ॥

तदुक्तं—वैशाखे शुक्लपक्षे तु तृतीयायां तथैव च ।

गङ्गातोये नरः स्नात्वा मुच्यते सर्वकिल्बिषैः ॥

तथा देवीपुराणे गौरीपूजनमुपक्रम्य

तृतीयायां तु वैशाखे रोहिण्यर्क्षे प्रपूज्यताम् ।

उदकुम्भप्रदानेन शिवलोके महीयते ॥

इत्यक्षय्यतृतीया निर्णयः ॥

---

## [२४५] अथ रम्भा तृतीया व्रत विधिः ॥

मार्गशीर्षशुक्लतृतीयातः समारभ्य रात्रौ गौरीं संपूज्योक्तद्रव्यं च प्राश्य जागरणानन्तरं प्रभाते विप्रान् भोजयेत् तेभ्यो दक्षिणां दत्वा पारणं कुर्यात् ॥ एवं वर्षं यावद्व्रतं तत उद्यापनमिति ॥ तदुक्तं श्रीकृष्णेन युधिष्ठिरं प्रति

रम्भातृतीयां वक्ष्यामि सर्वपापप्रणाशिनीम् ।

सुखसौभाग्यफलदां पुत्रपौत्रप्रदां तथा ॥
सपत्नीदर्पदलनां पार्वत्याः प्रियकाम्यया ।
शङ्करेण पुरा प्रोक्ता तामिमां शृणु भारत ॥
मार्गशीर्षे शुभे मासि तृतीयायां नराधिप ।
शुक्लायां प्रातरुत्थाय दन्तधावनपूर्वकम् ॥
उपवासस्य नियमं गृण्हीयाद्भक्तिभाविता ।
देवि संवत्सरं यावत् तृतीयायामुपोषिता ।
प्रतिमासं करिष्यामि पारणं चापरेऽहनि ॥
तदविघ्नेन मे यातु समाप्तिं व्रतमुत्तमम् ।
शरणं त्वां प्रपन्नास्मि दौर्भाग्यादुद्धरस्व माम् ॥
एवं संकल्प्य विधिवत् कौन्तेय कृतनिश्चया ।
भक्त्या नारी ध्यानपरा स्नानं कृत्वा जितेन्द्रिया ॥
पूजयेत्पार्वतीं नाम्नीं रात्रौ प्राश्य कुशोदकम् ।
२४६ प्रभाते भोजयेद्विप्रान् शिवभक्तान्विशेषतः ॥
सहिरण्यं च लवणं दद्यात्तेषां च दक्षिणाम् ।
अनेन विधिना राजन् या कुर्यात्पार्वतीव्रतम् ॥
सा कुलानां शतं साग्रं तारयेन्नात्र संशयः ।
गोमूत्रं प्राशयेत्पौषे माघे मासे तु गोमयम् ॥
फाल्गुने प्राश्य गोमुत्रं चैत्रे दधि घृतं परे ।
लवणं प्राशयेज्ज्येष्ठे आषाढे च तिलोदकम् ॥
श्रावणे तु श्रियं पूज्य पिबेद्गोभृङ्गजं जलम् ।
बिल्वपत्रं तथा भाद्रे आश्विने तण्डुलोदकम् ॥
कार्तिके पञ्चगव्यं हि प्राश्य कुर्याच्च जागरम् ।

सुखसौभाग्यफलदां पुत्रपौत्रप्रदां तथा ॥
सपत्नीदर्पदलनां पार्वत्याः प्रियकाम्यया ।
शङ्करेण पुरा प्रोक्ता तामिमां शृणु भारत ॥
मार्गशीर्षे शुभे मासि तृतीयायां नराधिप ।
शुक्लायां प्रातरुत्थाय दन्तधावनपूर्वकम् ॥
उपवासस्य नियमं गृह्णीयाद्भक्तिभाविता ।
देवि संवत्सरं यावत् तृतीयायामुपोषिता ।
प्रतिमासं करिष्यामि पारणं चापरेऽहनि ॥
तदविघ्नेन मे यातु समाप्तिं व्रतमुत्तमम् ।
शरणं त्वां प्रपन्नास्मि दौर्भाग्यादुद्धरस्व माम् ॥
एवं संकल्प्य विधिवत् कौन्तेय कृतनिश्चया ।
भक्त्या नारी ध्यानपरा स्नानं कृत्वा जितेन्द्रिया ॥
पूजयेत्पार्वती नाम्नीं रात्रौ प्राश्य कुशोदकम् ।
२४१ प्रभाते भोजयेद्विप्रान् शिवभक्तान्विशेषतः ॥
सहिरण्यं च लवणं दद्यात्तेषां च दक्षिणाम् ।
अनेन विधिना राजन् या कुर्यात्पार्वतीव्रतम् ॥
सा कुलानां शतं साग्रं तारयेन्नात्र संशयः ।
गोमूत्रं प्राशयेत्पौषे माघे मासे तु गोमयम् ॥
फाल्गुने प्राश्य गोमुत्रं चैत्रे दधि घृतं परे ।
लवणं प्राशयेज्ज्येष्ठे आषाढे च तिलोदकम् ॥
श्रावणे तु श्रियं पूज्य पिबेद्गोशृङ्गजं जलम् ।
बिल्वपत्रं तथा भाद्रे आश्विने तण्डुलोदकम् ॥
कार्तिके पञ्चगव्यं हि प्राश्य कुर्याच्च जागरम् ।

प्रभाते भोजयेद्विप्रान् सपत्नीकान्मनोरमान् ॥
माल्यवस्त्रैर्भूषयेच्च गौरिणीर्भोजयेत्तथा ।
२४७ वर्षं यावत्तृतीयासु व्रतं कृत्वा विधानतः ॥
उमामहेश्वरं हैमं समाप्तौ कारयेच्छुभम् ।

उमामहेश्वररूपं तु विष्णुधर्मोत्तरे

वामार्धं पार्वती कार्या शिवः कार्यश्चतुर्भुजः ।
अक्षमालां त्रिशुलं च दर्पणेन्दीवरे दधत् ॥
एकवक्त्रस्त्रिनेत्रश्च वामा च दयिता तनुः ।
शय्या चात्र विनिर्दिष्टा सर्वोपस्करसंयुता ॥
सवत्सां शीलसंपन्नां गां च दद्यात्पयस्विनीम् ।
पादुकोपानहौ वस्त्रं पदं यज्ञोपवीतकम् ॥
उमामहेश्वरं स्थाप्य आसने ताम्रजे नृप ।
पूजयेद्देवदेवेशं नाना पुष्पैः फलैस्तथा ॥
नैवेद्यैर्विविधैस्तद्वद्गीतवाद्यैरनेकधा ।
ततो द्विजं समाहूय वेदवेदाङ्गपारगम् ॥
सपत्नीकं सुरश्रेष्ठ दिव्यचन्दनचर्चितम् ।
परिधापयित्वालङ्कृत्य सर्वं तस्मै निवेदयेत् ॥
२४८ एवं कृते फलं यत्स्यात्तन्न शक्यं मयेरितुम् ।
पुरुषो वाथ वा नारी अन्ते शिवपुरं व्रजेत् ॥
शोभार्थपरया चीर्णं रम्भया राजसत्तम ।
तेन रम्भातृतीयेयं परसौभाग्यदायिनी ॥
यो हंस एव भूतेशो गौरी सैव न संशयः ।

इति मत्वा महाभाग शरणं व्रज पार्वतीम् ॥

सा एव लक्ष्मीरिति ॥

## इति रम्भातृतीया व्रतं ॥

अथ ज्येष्ठशुक्लतृतीयायां पञ्चाग्निसाधकं नाम रम्भातृतीयाव्रतमास्ति ॥

गार्हपत्यं दक्षिणाग्निं सभ्यं चाहवनीयकम् ।
पञ्चमं भास्करं तेज इत्येते पञ्च वन्हयः ॥

तन्मध्ये दिवा विष्णुध्यानपरा तिष्ठेदिति ॥ एतद्व्रतविधिस्तु ग्रन्थान्तरे प्रसिद्धत्वान्न लिखितइति ॥ अथ चैत्रशुक्लतृतीया तथा भाद्रपदे च तृतीया मन्वादिः ॥

तदुक्तं गार्ग्येण—अश्वयुक् शुक्लनवमी द्वादशी कार्तिके सिता ।
तृतीया चैत्रमासस्य तथा भाद्रपदस्य चेति ॥

अत्र सिताशब्दस्तृतीयया चान्वेति ॥

तथा—मन्वाद्यासु युगाद्यासु प्रदत्तः सलिलाञ्जलिः ।
सहस्रवार्षिकीं तृप्तिं पितृणां जनयेत्पराम् ॥
द्विसाहस्राब्दिकीं तृप्तिं कृतं श्राद्धं यथाविधि ।
स्नानं दानं जपो होमस्तदानन्त्याय कल्पत इति ॥

सर्वास्वपि तृतीयासु तिथिपतित्वेन गिरिजा पूजनीया ॥

तदुक्तं—प्रातिपत्प्रभृति देवताक्रमः ॥

वन्हिर्विरञ्चो गिरिजा गणेशः फणी विशाखो दिनकृन्महेश इति ॥ तथा तृतीयायां भविष्यत्पुराणे ॥ लाभादिकामो धनदं प्रपूजयेदित्युक्तं ॥ तृतीयायां तु वित्तेशं संपूज्य धनमाप्नुयात् ।

क्रयादिव्यवहारे च लाभादि च गुणो भवेत् ॥

२५० सौवर्णः पद्मपत्रस्थः कर्तव्यश्च तिथीश्वरः ॥ इति ॥

इति तृतीया सामान्या ॥

---

## ॥ अथ माघशुक्ल तृतीया ॥

तत्रोमामहेश्वरप्रीतये गुडलवणदानमुक्तं ॥

भविष्योत्तरे—माघशुक्लतृतीयायां गुडस्य लवणस्य च ।
दानं श्रेयस्करं राजन् स्त्रीणां च पुरुषस्य च ।
गुडेन तुष्यते देवी लवणेन तु शङ्करः ॥ इति ॥

तथा—तीर्थविशेषे तृतीयाभीष्टदोक्ता स्कान्दे नागरखण्डे पार्वतीतिलोत्तमासंवादे ॥

माघशुक्लतृतीयायां स्नानार्थं विमलोदकम् ।
हाटकेश्वरक्षेत्रे च रूपतीर्थमिति स्मृतम् ॥
या नारी प्रातरुत्थाय तत्र स्नानं समाचरेत् ।
सा स्याद्रूपवती नूनमदृष्टे रविमण्डले ॥
सदा माघतृतीयायां तत्र स्नानं करोम्यहम् ।
अद्यसात्तत्र यास्यामि स्नानाय कृतनिश्चयइति ॥

पार्वतीवचनात्तत्र स्नानं महाफलदमिति ॥ तथा तत्र पञ्चपिण्डिकापूजनं वांछितप्रदं ॥ तदुक्तं ॥

हाटकेश्वरजे क्षेत्रे पञ्चपिण्डा व्यवस्थिता ।
गौरी गौर्या स्वयं तत्र स्थापिता परमेश्वरी ॥
तामेषां वत्सरं यावत् श्रद्धया परया युता ।

सदा पूजयतु प्रीत्या तृतीयायां विशेषत इति ॥

नारदस्य शांण्डिलीं प्रत्युपदेशे शिववचनमिति माघतृतीया ॥ अन्यानि तृतीयाव्रतानि व्रतखण्डादवगन्तव्यानि ॥

कृतेऽचलद्विवेदन ग्रन्थे निर्णयदपिके ।
तृतीयानिर्णयो जातो रम्भादिव्रतसंयुतः ॥

## इति तृतीया निर्णयः ॥

---

## अथ चतुर्थी निर्णयः ॥

२५१ अथ चतुर्थीतिथिरुपवासादिव्रते निर्णीयते ॥ चतुर्थी पञ्चमीविद्धा ग्राह्या ॥ तदुक्तं विष्णुधर्मोत्तरे

एकादशी तथा षष्ठी अमावास्या चतुर्थिका ।
उपोष्याः परसंयुक्ताः पराः पूर्वेण संयुताः ॥

युग्मवाक्येनापि पञ्चमीविद्धत्वं विधीयते ॥ युग्माग्नियुग्मभूतानामिति ॥

वृद्धवसिष्ठवचनाद्विरुद्धवचनं दृश्यते ॥

द्वितीया पञ्चमी वेधाद्दशमी च त्रयोदशी ।
चतुर्दशी चोपवासे हन्युः पूर्वोत्तरां तिथिम् ॥

अत्र वचने पञ्चम्युपवासविषये स्ववेधात्पूर्वोत्तरां तिथिं पूर्वां चतुर्थीं उत्तरां षष्ठीं हन्तीत्यत्र चतुर्थी षष्ठी पञ्चमी विद्धा नोपोष्येति ॥ तदेवं विरोधे सति यद्यपि कैश्चिद्व्यवस्था क्रियते चतुर्थ्याः ॥ पञ्चमीवेधोपवासनिषेधः कृष्णपक्षविषयः ॥ पञ्चमी विद्धोपवासविधानं च शुक्लपक्षविषय इति ॥ तथापि व्रतविशे-

षविषयो निर्णयो नोपलभ्यत इत्यभिप्रत्य [२५२] शुक्ला वा कृष्णा वा या गणपतिव्रतोपयोगिनी सा पूर्वविद्धा या अन्य-देवताव्रतोपयोगिनी सोत्तरेति स्पष्टमुक्तं दीपिकाकारेण

अथ विघ्नपयर्जि हित्वा चतुर्थी पराम् ॥

तथा च बृहस्पतिः—चतुर्थी गणनाथस्य मातृविद्धा प्रशस्यते ।

मातृविद्धा तृतीयाविद्धा ।

कालादर्शेऽपि—सावित्र्यमापौर्णमासी चतुर्थी गणसंज्ञिता ।

रम्भा तृतीया चेत्येता उपोष्याः पूर्वसंयुता इति ॥

गणसंज्ञिता गणेशचतुर्थी ।

ब्रह्मवैवर्तेऽपि—चतुर्थीसंयुता या च सा तृतीया फलप्रदा ।

चतुर्थी तु तृतीयायां महापुण्यफलप्रदा ॥

कर्तव्या व्रतिभिर्वत्स गणनाथसुतोषिणी ।

गणनाथं सुतरां तोषयतीति गणेश्वरसंबंधत्वेन तृतीया युक्तायाश्चतुर्थ्या विधानात् ॥ अन्यदेवताव्रते हि गणनाथसुतोषिणीत्यसङ्गतं स्यात् ॥ तस्माद्विनायकचतुर्थी तृतीयायुक्तैवोपोष्येति सिद्धं ॥ [२५३] गणपतिव्रतव्यतिरिक्ते तु ॥

भरण्यां तु चतुर्थी चेच्छनैश्वरदिने यमम् ।

पूजयेत्सप्तजन्मोत्थैर्मुच्यते पातकैर्नरः ॥

इति कूर्मपुराणोक्तं ॥

तथा—आहिताग्निर्द्विजो यस्य विद्यतेऽग्निचतुष्टयम् ।

सोपवासश्चतुर्थ्यां तु शुक्लपक्षस्य फाल्गुने ॥

अभ्यर्च्य चतुरात्मानं वासुदेवमतन्द्रितः ।

सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुत इति ॥

अतो व्रतस्य सिध्यर्थमाहिताग्निं प्रपूजयेत् ॥

तदुक्तं विष्णुधर्मोत्तरे—

येत्वग्नयो वै चतुरः प्रदिष्टा स वासुदेवः कथितश्चतुर्धा ।
यः पूजयेद्ब्राह्मणमाहिताग्निं देवः स तेनाप्यथ पूजितःस्यात्॥

पारणादिन इतिशेषः ॥ यच्चाग्निहोत्रेऽग्निचतुष्टयं वा इति मार्कण्डेयोक्तं चतुर्मूर्तिव्रतं ॥ [२५४] एवमङ्गारकचतुर्थ्यां भौमव्रतं चोक्तमित्यन्यदेवताव्रतविषये परविद्धेत्याविरोधः ॥ गणपतिव्यतिरिक्तदेवतासंबंधिन्यपि बहुला चतुर्थी वचनेन पूर्वविद्धा ग्राह्या ॥ अन्यदेवतासंबंधस्तूक्तः ॥

स्कान्दे नागरखण्डे—

श्रावणे मासि या कृष्णा चतुर्थी बहुला स्मृता ।
गोगौरीपूजनं तत्र सौख्यसन्ततिवर्धनमिति ॥

इयं पूर्वविद्धोक्ता पुराणसमुच्चये—

गौर्याश्चतुर्थी वटधेनुपूजा दुर्गार्चनं दुर्मरहोलिके च ।
वत्सस्य पूजा शिवरात्रिरेताः परा विनिघ्नन्ति नृपं सराज्यम्॥

दुर्मरेति दुर्वेत्यर्थः। अस्यां धेनुः पूज्यत इति वत्सस्य पूजने भविष्योत्तरोक्तसायङ्कालीनगोवत्सद्वादशी विषयं ॥ सापि पूर्वविद्धेत्युक्तं प्राक् ॥ [२५५] निर्णयामृते तु माघशुक्लचतुर्थी कुण्डचतुर्थीइति या सा बहुला चतुर्थीति यत्प्रतिपादितं तद्व्रतखण्डे बहुलेत्यनुक्तत्वात् ॥ स्कन्दपुराणवचनाविरोधाच्चोपेक्षणीयम् ॥ शिष्टसमाचारस्तु नभोमासगतायां दृश्यत इति च ॥ पूर्वविद्धाविधानवचनाविशेषाभावे गणेशव्रतादन्यत्र च-

तुर्थी परान्वितेत्युक्तं कालादर्शे

षष्ठ्यरम्भातृतीयैकादशी कृष्णत्रयोदशी ।
चतुर्थी त्ववरा युग्मेत्येताः पूज्याः परान्विताः ॥

अवरा वरचतुर्थीव्यतिरिक्ता ॥ वरचतुर्थ्यां तु गणेशव्रतमभिहितं ॥ तद्व्रते पूर्वयुतेत्युक्तं प्राक् ॥ अतो गणेशव्रते पूर्वयुता अन्यदेवताव्रते परयुतेति सिद्धान्तः ॥ नक्तैकभक्तादिव्रते तत्कालव्यापिनी ग्राह्येति

## इति चतुर्थी सामान्य निर्णयः ॥

---

## २५६ अथ चतुर्थी विशेष निर्णयः ॥

कार्तिकशुक्लचतुर्थी युगचतुर्थी तस्यां मध्यान्हव्यापिन्यां उपोष्योत्तरदिने पञ्चम्यां फणिनः प्रपूजयेत् ॥ तत्र फणीश्वराः शेषवासुकीकर्कोटकादयः प्रसीदन्ति ॥

तदुक्तं स्कंदपुराणे—युगं मध्यं दिनं यत्र तत्रोपोष्य फणीश्वरान् ।
क्षीरेणाप्यथ पञ्चम्यां पारयेत् प्रयतो नरः ॥

कूर्मपुराणे—तिथौ युगाव्हयायां च समुपोष्य यथाविधि ।
शङ्खपालादिनागानां शेषस्य च महात्मनः ॥
पूजा कार्या पुष्पगन्धक्षीराप्यायनपूर्वकम् ।
विषाणि तस्य नश्यन्ति न च हिंसन्ति पन्नगाः ॥

इति कार्तिकशुक्लचतुर्थी ॥ अथ भाद्रपदशुक्लचतुर्थी तत्र चन्द्रं न पश्येत् तत्र चन्द्रदर्शने मिथ्या दोषो जायते ॥ तदुक्तं कालादर्शे

भाद्रशुक्लचतुर्थ्यां तु नेक्षेत शशिनं यदि ।
पश्येत्तद्दोषशान्त्यर्थं श्लोकं पौराणिकं पठेत् ॥

२५७ तथा पाराशरः ।

कन्यादित्य चतुर्थ्यां तु शुक्ले चन्द्रस्य दर्शनम् ।
मिथ्याभिदूषणं कुर्यात्तस्मात्पश्येन्न तं तदा ॥
तद्दोषशान्तये सिंहः प्रसेनमिति वै पठेत् ।
कन्यादित्ये भाद्रपदे श्लोकश्चोक्तो विष्णुपुराणे ॥
सिंहः प्रसेनमवधीत् सिंहो जाम्बवता हतः ।
सुकुमारक मारोदिस्तव ह्येष स्यमन्तकः ॥

इति चन्द्रदर्शने प्रायश्चित्तं ॥ तथा तस्याः प्राशस्त्यमुक्तं
२५८ वाराहपुराणे—भाद्रे शुक्लचतुर्थी या भौमेनार्केण वा युता ।
महती साऽत्र विघ्नेशमर्चित्वेष्टं लभेन्नर इति ॥

तथा शिवाचतुर्थी तत्र स्नानादिकं गणेशपूजनं चानन्तफलाय भवति ॥ तदुक्तं भविष्योत्तरे

शिवा शान्ता सुखा राजन् चतुर्थी त्रिविधा स्मृता ॥
मासि भाद्रपदे शुक्ला शिवा लोके प्रतिष्ठिता ॥
तस्यां स्नानं तथा दानं उपवासो जपस्तथा ।
क्रियमाणं शतगुणं प्रसादाद्दन्तिनो नृप ॥

तथा तत्रैव देव्या उत्सवः कर्तव्यो वक्ष्यमाणविधिना ॥
तदुक्तं—देवीपुराणे कन्यायां कृष्णपक्षे तु पूजयित्वाऽर्द्रभेऽपिवा ।
नवम्यां बोधयेद्देवीं गीतवादित्रनिः स्वनैः ॥
कन्यादित्ये भाद्रपदे मासे ॥
शुक्लपक्षे चतुर्थ्यां तु देवीकेशावशोधनम् ।

शुक्लपक्ष इति आश्विनशुक्लपक्षे ॥

तुलाशुक्लचतुर्थ्यां तु देवीकेशान्विशोधयेत् ।

इतिकालादर्शोदाहृतत्वात् ॥

प्रातरेव तु पञ्चम्यां स्नापयेत्सलिलैः शुभैः ।
सप्तम्यां पत्रिकापूजा अष्टम्यामप्युपोषणम् ॥
पूजनं जागरं चैव नवम्यां विधिवद्बलिः ।
दशम्यां भ्रामयेद्देवीं रथमारोप्य पट्टने ॥

इति भाद्रपद चतुर्थी ॥

---

[२५८] अथ माघ चतुर्थी ॥

तत्र गणेशं संपूज्य वर्षपर्यन्तं विघ्नं न स्यादिष्टप्राप्तिश्च स्यात्तदुक्तं हाटकेश्वरमाहात्म्ये विश्वामित्रं प्रति ईश्वरेण

विनायकसमुद्भूतां तत्त्वं पूजां समाचार ।
येन ते जायते सिद्धिः शम्यग्ब्राह्मणसत्तम ॥ इत्युपदिश्य ।
माघमासे चतुर्थ्यां तु शुक्लायां पूजयेत्तु यः ।
स च संवत्सरं यावत्सर्वैर्विघ्नैर्विमुच्यते ॥

पूजामंत्रास्तु ।

नमो लम्बोदरायेति नमो गणविभो तथा ।
कुठारधारिणे नित्यं तथा चासंङ्गताय च ॥
नमो मोदकभक्षाय नमो दन्तैकधारिणे ।
एभिर्मंत्रैः समभ्यर्च्य पश्चान्मोदकजं शुभम् ॥
नैवेद्यं च प्रदातव्यं ततश्चार्घं निवेदयेत् ।

अहं कर्म करिष्यामि यत्किंचिच्छुभसंभवम् ।
अविघ्नं तत्र कर्तव्यं सर्वदैव त्वया विभो ॥
ततस्तु ब्राह्मणानां च भोजनं मोदकोद्भवम् ।
यथाशक्त्या प्रदातव्यं वित्तशाठ्यं विवर्जयेत् ॥
अनेन विधिना सम्यक् चतुर्थ्यां पूजयिष्यति ।
तस्य सर्वाणि विघ्नानि नाशं यास्यन्त्यसंशयमिति ॥

१५० तथा तस्मिन्नेव व्रते पार्वतीं प्रति रुद्रः

पठ्यमानेन यश्चैनं जीसुवक्तेन सुन्दरि ।
पूजयिष्यति सद्भक्त्या चतुर्थीदिवसे शुभे ॥
विघ्नानि तस्य नश्यन्ति तमः सूर्योदये यथा ।
अपुत्रो लभते पुत्रं धनहीनो महद्धनम् ॥
शत्रून् जयति सङ्ग्रामे स्मृत्वा तं गणनायकम् ।
या नारी पतिना त्यक्ता दुर्भगा च विरूपिता ॥
सा सौभाग्यमवाप्नोति गणनाथस्य पूजनात् ।
विश्वामित्रेण माहात्म्यं श्रुत्वा तत्र प्रतिष्ठितः
गणनाथो द्विजश्रेष्ठ सर्वसिद्धिप्रदो नृणाम् ।
इति सूतवचनं ॥ जीवसूक्तं गणानांत्वा गणपतिं हवा-

मह इति गणपतिव्रतं ॥

अथ माघ चतुर्थी वरदाख्या

तत्र श्रीकामो निशि शिवं पूजयेत् तदुक्तं कूर्मपुराणे

कुम्भे शुक्लचतुर्थ्यां तु कुन्दपुष्पैः सदाशिवम् ।
संपूज्य यो हि नक्ताशी स प्राप्नोति श्रियं नर इति ॥

इयं कुन्दचतुर्थी—

माघमासे तु संप्राप्ते चतुर्थी कुन्दसंज्ञिता ।
सा उपोष्या सुरश्रेष्ठे ततो राज्यं भविष्यति ॥
इति देवीपुराणात् ॥ इतिमाघचतुर्थी ॥

[२५१] ब्रह्मपुराणे—ज्येष्ठशुक्लचतुर्थ्यां तु जाता पूर्वमुमा सती ।
तस्मात्तत्र च संपूज्या स्त्रीभिः सौभाग्यवृद्धये ॥

तथा मत्स्यपुराणे—
चतुर्थ्यां नक्तभुग्दद्यादब्दान्ते हेमवारणम् ।
व्रतं वैनायकं नाम शिवलोकाफलप्रदम् ॥

इदं तु पक्षद्वयचतुर्थीसाधारणं । तत्र विशेषानभिधानात् ॥
एवं वरचतुर्थीप्रभृतीनि वर्षचतुष्टयसाध्यानि नानाविधानिन-
क्तैकभक्तादिरूपाणि व्रतसमुच्चयादवगन्तव्यानीति ॥

तथा—चतुर्थी भोमवारेण रविवारेण सप्तमी ।
अमा वै सोमवारेण सूर्यपर्वशताधिकम् ॥
सर्वास्वपि चतुर्थीष्वधिपतित्वेन गणेशः पूजनीयः ॥

इति चतुर्थीनिर्णयः ॥

कृतेऽचलद्विवेदेन ग्रन्थे निर्णयदीपके ।
हेरम्बतुष्टये प्रोक्तश्चतुर्थ्यास्तु विनिर्णयः ॥

[२५२] अथ पंचमी निर्णीयते ॥

पञ्चमी तिथिः स्कन्दपूजानागोपवासव्यतिरिक्तोपवा-
सादिव्रते पूर्वतिथियुता ग्राह्या

तदुक्तं—प्रतिपत्पञ्चमी कृष्णाष्टमीभूते च सप्तमी ।
रम्भा तृतीया चेत्येता उपोष्याः पूर्वसंयुता इति ॥

पञ्चमी कृष्णा शुक्ला तु युग्मवाक्येन पूर्वविद्धा प्राप्तत्वात् । भूतं च अष्टमी चेति विग्रहे अष्टम्याः पूर्वभावितिथित्वेनाभ्यर्हितत्वादष्टमीशब्दस्य पूर्वनिपातः । अष्टमीभूते इति तेऽपि कृष्णे ॥ ननु

पञ्चमी तु प्रकर्त्तव्या षष्ठया युक्ता तु नारद ।
न हि षष्ठी नागविद्धा कर्तव्या तु कदाचन ॥

इत्यनेन ब्रह्मवैवर्तवचनेन पञ्चम्याः षष्ठयायुक्तत्ववि-धानात् पूर्वयुतेति विरुद्धं ॥ सत्यं पञ्चम्याः षष्ठ्यायुतत्वविधा-नमिदं नागपूजा विषयं तदुद्देशेन एकभक्तब्राह्मणभोजनादि-विषयं च ॥

तदुक्तं—उभयोः पक्षयोर्नागान्पञ्चमीषु प्रपूजयेत् ।

इतिवचनादविरोधः ॥ किं च । अत्रोपवासशब्दश्रव-णात् उपवासव्रतव्यतिरिक्तव्रतविषये शुक्लकृष्णपक्षसामान्ये-नास्य प्रवृत्तिरिति ज्ञेयं ॥ कारणं विना संकोचाभावात् ॥ न हि षष्ठी नागविद्धेत्येतदपि स्कन्दषष्ठीव्यतिरिक्तविषयं ॥ स्क-न्दषष्ठी तु पूर्वयुताऽभिहिता ॥

स्मृत्यन्तरे—कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रिश्चतुर्दशी ।
एताः पूर्वयुताः कार्यास्तिथ्यन्ते पारणं भवेत् ॥

पूर्वेद्युरुपवासं कृत्वा षष्ठयां स्कन्दः पूज्य इत्यपि चोक्तं तदभिप्रायेणोपवासे पञ्चमी परयुता ग्राह्येत्युक्तं ॥

[२६३] ब्रह्मवैवर्त्ते—स्कन्दोपवासे स्वीकार्या पञ्चमी परसंयुता ।
त्रिमुहूर्ता तु षष्ठयां स्यात्परा पूर्वयुतान्यथा ॥

पूर्वोपवासवचनं तु वाराहपुराणे ।

अषाढशुक्लषष्ठी तु तिथिः कौमारिका स्मृता ।

पूर्वेऽहन्युपोष्य विधिवत्तस्यामभ्यर्चयेद्गुहम् ॥

इति वचनात् ॥ पञ्चम्याः परविद्धोपवासस्तदङ्गत्वेन विहितः॥ तथा ॥ शुक्लायामथ कृष्णायां षष्ठ्यां संपूजयेद्गुहम् ॥

इति स्कन्दपूराणवचनात् ॥ षष्ठ्यां विहितस्य कार्तिकेयपूजनस्य तदङ्गोपवासे शुक्ला वा कृष्णा पञ्चमी परविद्धोपोष्येति सिद्धं ॥ अथ पञ्चमी स्वविषयोपवासे चतुर्थीयुता ॥ तदुक्तं पैठीनसिना—

पञ्चमी सप्तमी चैव दशमी च त्रयोदशी ।

प्रतिपन्नवमी चैव कर्तव्या संमुखा तिथिः ॥

समुखा सायान्हव्यापिनी पूर्वयुतत्यर्थः

[२५४] जाबालिरपि—प्रतिपत्पञ्चमी चैव नवमी दशमी तथा ।

त्रयोदशी सप्तमी च उपोष्याः पूर्वसंयुताः ॥

एकादशी तथा षष्ठी अमावास्या चतुर्थिका ।

उपोष्याः परसंयुक्ताः पराः पूर्वेण संयुताः ॥

आभ्यः पराः द्वादशी सप्तमी प्रतिपत्पञ्चम्येताः पूर्वयुता इत्यतः पञ्चमी चतुर्थीयुतोपोष्येत्यर्थः ॥

स्कन्दपुराणे—पञ्चमी तु यथा कार्या चतुर्थीसहिता विभो । एतानि विधिमुखेन पूर्वविद्धापूज्यतापराणि ॥

प्रतिपत्पञ्चमी भूतं सावित्री वटपूर्णिमा ।

नवमी दशमी चैव नोपोष्याः परसंयुताः ॥ इति ॥

इदंब्रह्मवैवर्तवचनं तु परविद्धानिषेधमुखेन पूर्वविद्धाप्रतिपादनपरमिति अतः स्कन्दपूजाङ्गोपवासव्यतिरिक्तोपवासा-

दिव्रते पञ्चमी पूर्वयुतेति सिद्धान्तः ॥ स्कन्दस्य षष्ठ्यधिपतित्वात् इति नक्तैकभक्तादिव्रते कालव्यापिनी सर्वैरङ्गीक्रियते॥

## इति पंचमीसामान्यनिर्णयः ॥

---

## [२५५] अथ पंचमीविशेषः ॥

श्रावणशुक्लपंचम्यां द्वारस्योभयतो नागान्विलिख्यपूजयेत् ॥ तेन सर्पतो भयं न जायत इत्युक्तं ।

भविष्यत्पुराणे–श्रावणे मासि पंचमी शुक्लपक्षे नराधिप ।

द्वारस्योभयतो लेखा गोमयेन विषोल्वणाः ॥

तथा भाद्रपदे मासि पंचम्यां श्रद्धया न्वितः ।

यस्त्वालेख्य नरो राजन् कृष्णवर्णादिवर्णकै रिति ॥

तेषां स्वरूपं मत्स्यपुराणे

नागाश्चैव तु कर्तव्याः खड्गखेटकधारिणः ।

अधः सर्पाकृतिस्तेषां नाभेरूर्ध्वं तु पौरुषी ॥

फणाश्च मूर्ध्नि कर्तव्या द्विजिव्हा बाहवोऽसमाः ।

असमा विषमा इति ॥

[२५६] पूजयेद्विधिवद्वीर दधिदूर्वाक्षतैः शुभैः ।

गन्धपुष्पोपहारैश्च ब्राह्मणानां च तर्पणैः ॥

नागानां पूजने तस्यां न भयं सर्पतो भवेत् ।

क्षीरं सर्पिस्तु नैवेद्यं देयं सर्व सुखावहम् ॥ इति ॥

तथा तस्मिन्नेवमादितीर्थविशेषणाभीप्सितफलमभिहितं ॥

[२५७] स्कन्दपुराणवचनेन ॥ कर्कोटकं प्रतिच्यवनेन

अत्रास्ति सुशुभं तोयं हाटकेश्वरसंज्ञिते ।
क्षेत्रे तत्र समावासः पूत्र कार्यस्त्वया सदा ॥
श्रावणे कृष्णपक्षे तु संप्राप्ते पञ्चमी दिने ।
संप्राप्याति परां पुजां पृथिव्यां नवमं कुलम् ॥
अद्यप्रभृति तत्तोयं नागतीर्थमितिस्मृतम् ।
ख्यातिं यास्यति भूपृष्टे सर्वपातकनाशनम् ॥
येऽत्र स्नानं करिष्यन्ति संप्राप्ते पञ्चमीदिने ।
न तेषां वत्सरं यावद्भविष्यत्यहिजं भयम् ॥
विषार्दितस्तु योमर्त्यस्तत्र स्नानं करिष्याति ।
तत्क्षणान्निर्विषो भूत्वा संप्राप्स्याति परं सुखम् ॥
पुत्रकामा तु या नारी पञ्चम्यां भास्करोदये ।
करिष्यति तथा स्नानं फलहस्ता प्रभक्तितः ।
भाविष्यति च सा शीघ्रं वन्ध्यापि च सुपुत्रिणी ॥
नराणामपि स्नानमात्रेण वांछितप्रदमित्युक्तं तत्रैव ॥

इति श्रावण पंचमी विधिः ॥

---

## २६८ अथ पुत्रकामा पंचमी ॥

ब्रह्मोवाच- अथातः संप्रवक्ष्यामि संक्षेपान्न च विस्तरात् ।
येनानुष्ठानमात्रेण पुत्रोत्पत्तिः प्रदृश्यते ।
अष्टौ दोषास्तु नारीणां पुरुषस्य चतुर्दश ॥
तस्य दोषविशुध्ध्यर्थं पंचमीश्राद्धमाचरेत् ॥ इति ॥ गरुडपुराणे ॥
पुन्नामनरकं घोरं पुत्रं दृष्ट्वा न पश्यति ।

पौत्रेण स्वर्गमित्याहुरित्येवं वैदिकी स्मृतिः ॥

अपुत्रस्य गतिर्नास्ति नास्ति नास्ति जगत्त्रय ।

स्कन्दपुराणे—मार्गशीर्षे तथा माघे वैशाखे कार्तिके तथा ॥

पुत्रकामनरैः कार्या प्रकृष्टा कृष्णपंचमी ।

पुत्रकाममनुष्याणामन्योपायो न विद्यते ॥

इति उक्त्वा कृष्णपंचमी श्राद्धमिति ब्रूते ॥

प्रायश्चित्तार्थमादौ तु रुद्रैकादशकं जपेत् ।

गायत्र्यष्टसहस्राणि दशांशेन तु होमयेत् ॥

कृष्णपक्षे चतुर्थ्यां तु होमं कुर्यात्स्वशक्तितः ।

ग्रहान्देवान्समभ्यर्च्य गणनाथं प्रपूजयेत् ॥

कृष्णे तु पंचमी श्रेष्ठा श्राद्धे वै पुत्रदा नृणां ।

वैश्वदेवादिकं श्राद्धं षड्भिः पिंडैः प्रकल्पयेत् ॥

इत्थं पार्वणवत्कुर्यात्काम्यश्राद्धं विधानतः ।

मध्यमं तु ततः पिंडं नमस्कुर्यात्पितामहं ॥

गृहीत्वाघ्राय दातव्यो धर्मपत्न्यै सुतार्थिना ।

२६५ पत्नी तं पिंडमादाय प्राश्नीयाद्विधिवत्तदा ॥

आधत्त पितरो गर्भमायन्तु न जपेत्पत्तिः ।

दक्षिणां दिशमाश्रित्य ततो भुञ्जीत वाग्यतः ॥

एवं द्वादशमासेषु स्वशक्त्या श्राद्धमाचरेत् ॥ इति ॥

पुत्रकामपंचमीश्राद्धे प्रारब्धेन्तरामघाभरणीयोगे सति

मघायुगादौ भरण्यां श्राद्धं कुर्यात्प्रयत्नतः ।

पिंडदानं न कुर्वीत यदीच्छेज्जीवतः सुतान् ॥

इत्यनेन पिंडनिषेधो नाशङ्कनीयः स्मृत्यन्तरवाक्यात् ॥

यथा—क्षयाहे पुत्रपंचम्यां चतुर्दश्यां महालये ।
पिंडदानं प्रकुर्वीत पैत्र्यं याम्यं न दुष्यति ॥ इति ॥

२७० प्रारम्भे कृष्णवासांसि कृष्णा गौर्दक्षिणां तथा ।
ततः संवत्सरस्यान्ते तिलदानं प्रदापयेत् ॥

यत्तु सूर्यपुराणवचनं
पैतृकं ब्राह्मणं पिंडं पितामहं तु वैष्णवम् ।
रुद्राय प्रपितामह्यं देवानुद्दिश्य दीयत इति ॥

पिंडत्रयाभिधानं तदेतद्विष्णुरूपमध्यपिंडप्राशनाभिप्रायेण तदेवप्रधानं पुरोडाशे द्व्यवदानवर्दइति नैकपार्वणपरं ॥ तथा सति
वैश्वदेवादिकं श्राद्धं षड्भिः पिंडैः प्रकल्पयेदिति
स्कन्दपुराणवचनविरोधः ॥ किं च
पितरो यत्र पूज्यन्ते तत्र मातामहा अपि ।
अविशेषेण कर्तव्यं विशेषान्नरकं व्रजेत् ॥

इति सर्वस्मृतिपुराणसंमतेन नरकपातः अधिकं फलं-स्यात् ॥ तस्मात्पार्वणद्वयविधिना श्राद्धमिति ॥ सूयारुणे तु पुत्रप्राप्तिपंचमी श्राद्धमुपक्रम्योक्तं ॥
कृष्णपक्षस्य पंचम्यां पंचभूतानि चार्चयेत् ।
गव्येन पयसा सिद्धैर्मुन्यन्नैः श्राद्धमाचरेत् ॥
पितृमातामहानां च सपत्नीको जितेन्द्रियः ॥

इत्यादिभिः पार्वणद्वयेन श्राद्धमुक्तं ॥ २७१ अथ तत्रेतिकर्तव्यता पुराणान्तरात् ॥

वसिष्ठः—प्रारम्भेऽसितपंचम्यां कुर्याच्छान्तिं विनायकीम् ।

शान्तिकं विधिवत्कुर्यात्पूर्वं मातुः प्रपूजनम् ।
शय्यायां रतिसंयुक्तं कामं संपूजयेत्सुधीः ॥
ततोऽवस्थापयेत्कुंभं सजलं वरुणालयम् ।
तस्योपरि न्यसेत्पात्रं नागपूजां च तत्त्वतः ॥
मण्डलस्थान्सुरांस्तत्र पूजयेद्विधिवद्विजः ।
नमस्ते कामदेवाय नमस्ते विश्वमोहन ॥
रतीशाय नमस्तुभ्यं पुत्रं देहि ममार्चितः ।

कामपूजामंत्रः

नमस्तेऽसितभोगाय नमस्ते विश्वरूपिणे ॥
शेषस्त्वं विष्णुरूपेण मम पुत्रं प्रयच्छ हि ।

नागपूजामंत्रः—

अपित्वा पायसं वत्स श्राद्धं कुर्वीत पार्वणम् ॥
अग्निरोचननामानौ काम्यश्राद्धे प्रपूजयेत् ॥
पैतृकं ब्राह्मणं पिंडं पितामहं तु वैष्णवम् ॥
रुद्राय प्रपितामह्यं देवानुद्दिश्य दीयते ।
शतपत्रैश्चम्पकैश्च पूजातेभ्यो यथाक्रमम् ॥
नमस्ते पितृरूपाय सोमरूप नमोस्तुते ।
आज्यपाय नमस्तुभ्यं सोमस्त्वं सन्ततिं कुरु ॥
पितामह नमस्तेऽस्तु बर्हिषद्वपुषे नमः ।
कव्यवाहाय नीलाय पुत्रदाय नमोऽस्तु ते ॥
पितामहाय सोमाय पूज्यस्त्वं मम पूर्वज ।
पिंडं गृहाण पूजां च प्रसन्नः सुतदो भव ॥
इति संपूज्य विधिवद्ब्राह्मणान्भोजयेत्ततः ।

मंत्रेण मध्यमं पिंडं पत्नी प्राश्नीत वाग्यता ॥
कव्यवालोऽनलश्चैव नमः सोमार्यमा वसो ।
अग्निष्वत्था बर्हिषद आज्यपाः सोमपा हर ॥
आदित्या द्वादश चैव यूयं पुत्रं प्रयछथ ।
[२७२] इति संमंत्रितं पिंडं प्राश्नीयात्कापिलं पयः ॥
अनेनैव विधानेन कुर्यात्संवत्सरं सूधीः ।
वर्षान्ते तद्वटं शय्यां नागं दद्याद्धिरण्मयम् ॥
प्रसादात्कामराजस्य पूर्वजानां न संशयः ।
भविष्यत्येव पुत्राप्तिस्तस्मिन्संवत्सरे कृते ॥
पुण्यं यशस्यमारोग्यं पुत्रदं पापनाशनम् ।
गयातुल्यं नृपश्रेष्ठ पञ्चम्यां बहुले दिने ॥
श्राध्धं सर्वार्थसिध्ध्यर्थं महापातकनाशनम् ।
समाप्ते कपिलां दद्याद्वस्त्रयुग्मं गुरोरपि ॥
पितृश्राध्धं कृत्वा कुतपादि कालव्यापिन्यामिति ॥

इति कृष्णपंचमीनिर्णयः ॥

---

## [२७३] अथ ऋषिपंचमी ॥

भाद्रपदशुक्लपञ्चमी ऋषिपञ्चमी । तत्र कश्यपादीन् ऋषीन् संपूज्य उत्पन्नशाकादिना एकभक्तं व्रतं कुर्यात् ॥ तेन सर्वपापक्षयो भवेदित्युक्तं । मान्धातृवसिष्ठसंवादे कौशिकसंहितायाम्

नभस्यस्य तु मासस्य पक्षे या पञ्चमी सिता ।
स्वातीनक्षत्रसंयुक्ता सा महापापनाशिनी ॥

तामनुप्राप्य कर्त्तव्यं मुनिधान्यैर्व्रतोत्तमम् ।
ऋषिपञ्चमीति विख्यातं कथायाः श्रवणेन चेति ॥
सप्तर्षयश्च संपूज्या अरुन्धत्या समन्विताः ।
ऋतुकाले तु संप्राप्ते ज्ञानतोऽज्ञानतो पि वा ॥
*संस्मृत्य कुरुते पापं नारी संमूढमानसा ।
तत्सर्वं विलयं याति सप्तर्षीणां प्रसादतः ॥
नरो वा यदि वा नारी मुच्यते सर्वकिल्विषैः ।
तस्मात्त्वमपि मान्धातः पञ्चमीव्रतमाचर ॥
संवत्सरकृतं पापं व्रतेनानेन नश्यति । इति ॥

२७४ व्रतसमुच्चये–मासि भाद्रपदे राजन् शुक्लपक्षे तु पञ्चमी ।
तदा यत्नेन सा ग्राह्या एकभक्तेन वैनृपेत्युपक्रम्य
शाकाहारस्तु कर्तव्यो नीवारैः श्यामकैस्तथा ।
फलाहारश्च कर्तव्यो ऋषीणां प्रीतिहेतवे ॥

अस्य व्रतस्यातिप्रसिद्धत्वात्पूजादिविधिर्नोक्तोऽत्रेति ॥ अस्य व्रतस्यैकभक्तरूपत्वादेकभक्ततिथिनिर्णयेन निर्णयः ॥ दिनद्वयतिथेरेकभक्तकालव्यापित्वे परयुता ग्राह्या ॥

पञ्चमी तुप्रकर्तव्या षष्ठ्यायुक्ता तु नारदेत्यनेन ब्रह्मवैवर्त्तवचनेन ॥

यत्तु–पंचमी तु तथा कार्या चतुर्थीसहिता विभो ।

तदस्य स्कन्दपुराणवचनस्योपवासप्रकरणे पाठात् कृष्णपक्षोपवासविषयत्वं स्थापितं ॥ कालनिर्णयेऽपि ॥ अत एव दीपिकाकारः ॥ कृष्णा पूर्वयुता सितापरयुता स्यात्पंच-

* संमृज्येति पाठान्तरं ॥

मीति स्थितिर्यद्वात्यैव विनोपवासमुभयीति ॥

एतेनोपवासव्यतिरिक्तव्रते परयुताभिधानेन स्कन्दोपवासनागपूजाव्यतिरिक्ते पूर्वयुतेति कुत्रचिदुक्तं तदपि निराकृतं ॥ विनोपवासमुभयीपरेति स्पष्टोक्तत्वादिति ॥

इतिऋषिपंचमीनिर्णयः

---

[२७५] अथ लक्ष्मीपंचमी ॥

यः पंचम्यां लक्ष्मीं संपूज्यावासं कुर्यात्सवैष्णवं पदं यातीत्युक्तं पद्मपुराणे ॥

लक्ष्मीमभ्यर्च्य पंचम्यामुपवासी भवेत्तु यः ।
समाप्ते हेमकमलं दद्याद्धेनुसमन्वितम् ॥
स वैष्णवं पदं याति लक्ष्मीः स्याज्जन्मजन्मनि ।
एतल्लक्ष्मीव्रतं नाम दुःखशोकविनाशनम्

इति लक्ष्मीपंचमी ॥

भविष्योत्तरे—पयोव्रतस्तु पंचम्यां दत्वा नागं द्विजातये ।
सौवर्णसर्पजनितं भयं तस्य न जायते ।
एतत्सर्पव्रतं प्रोक्तं सर्पमैत्रीकरं परम् ॥

इत्यादीनि नानाप्रकाराणि पंचमीव्रतानि व्रतखण्डादवगन्तव्यानीति ॥ पंचम्यां नागाः पूज्या अधिपतित्वादिति ॥
तीर्थविशेषे पंचम्यां स्नानेनापि पापक्षयो जायते ॥
तदुक्तं श्रीहाटकेश्वरमाहात्म्ये

कृष्णपक्षे तु पंचम्यां मासि भाद्रपदे नृप ।

राजवाप्यां नरः स्नात्वा सर्वपापैः प्रमुच्यते ॥

श्रद्धया परया युक्तः समाप्ते पंचमीदिने ।

स्नात्वा करिष्यति श्राद्धं यावत्संवत्सरं नृप ॥

अपुत्रः प्राप्स्यते पुत्रान् वंशवृद्धिकरान्स हीति ॥

कृतेऽचलद्विवेदेन ग्रन्थे निर्णयदीपके ।

व्रतोपवासविषये निर्णीता पंचमीतिथिरिति ॥

## इति पंचमीनिर्णयः ॥

---

## [२७१] अथ षष्ठीनिर्यणः प्रस्तूयते ॥

स्कन्दोपवासव्यतिरिक्ता षष्ठीतिथिरुपवासादिव्रते परयुता ग्राह्येति ॥ तदुक्तं षण्मुन्योरिति युग्मवाक्यात् ॥

नागविद्धा न कर्तव्या षष्ठी चैव कदाचन ।

सप्तमीसंयुता कार्या षष्ठी धर्मार्थकोविदैरिति

स्कन्दपुराणवचनाच्च ॥ तथा च निगमः

नागविद्धा तु या षष्ठी दशम्येकादशी तथा ।

भूतविद्धाप्यमावास्या निष्फलं स्याद्दिनत्रयम् ॥

वृद्धवसिष्ठोऽपि—द्वितीया पंचमी वेधाद्दशमी च त्रयोदशी ।

चतुर्दशी चोपवासे हन्युः पूर्वोत्तरे तिथी ॥

जाबालिः—नागविद्धा तु या षष्ठी भानुविद्धो महेश्वरः ।

चतुर्दशी कामविद्धास्तिस्रस्ता मलिनाः स्मृताः ॥

नागः पंचमी । भानुः सप्तमी । कामस्त्रयोदशी ॥

कामविद्धो भवेद्विष्णुर्न ग्राह्यास्ते तु वासराः ॥

२७७ स्कन्दपुराणे—नागविद्धा तु या षष्ठी सप्तम्या च तथाष्टमी।
भूतविद्धा अमावास्या न ग्राह्या मुनिसत्तमेत्यादिनि
यानि पूर्वविद्धानिषेधकानि तानि स्कन्दषष्ठीव्रतेतरष-
ष्ठीव्रतोपवासविषये योजनीयानि ॥ स्कन्दषष्ठी पूर्वयुक्तैवोपोष्या
तथा—कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रिश्चतुर्दशी ।
एताः पूर्वयुताः कार्यास्तिथ्यन्ते पारणं भवेदिति ॥
अतः स्कन्दषष्ठीव्रतेतरषष्ठीव्रते विधिमुखेन परविद्धावा-
क्यानि प्रदर्श्यन्ते ॥
विष्णुधर्मोत्तरे—एकादश्यष्टमी षष्ठी द्वितीया च चतुर्दशी ।
अमावास्या तृतीया च उपोष्याः स्युः परान्विताः ॥
द्वितीया शुक्ला ॥ चतुर्दश्यष्टम्यौ च शुक्ले तृतीयार-
म्भाव्यतिरिक्ता ॥
बृहस्पतिः—एकादश्यष्टमी षष्ठी पूर्णमासी चतुर्दशी ।
अमावास्या तृतीया च ता उपोष्याः परान्विताः ॥
निगमेऽपि—षष्ठ्यष्टमी अमावास्या कृष्णपक्षे त्रयोदशी ।
एताः परयुताः पूज्याः पराः पूर्वेण संयुताः ॥ इति ॥
अत एव ब्रह्मवैवर्त्ते—
नहि षष्ठी नागविद्धा कर्तव्या तु कदाचन ॥ इति ॥
एवं सति स्कन्दव्रतव्यतिरिक्ता षष्ठी परयुतेति सिद्धा-
न्तः ॥ परदिने षष्ठ्यभावे पूर्वविद्धा ग्राह्येति उक्तं तृतीयानिर्णये ॥
यत्तूक्तं ॥
नागो द्वादशनाडीभिर्दूषयत्युत्तरां तिथिमिति
तत्र स्कन्दोद्देशेन विप्रभोजनादिकं न कार्यमित्युक्तं प्राक् ॥

नक्तैकभक्तादीनि अन्यानि च कालविशेषे उक्तानि तत्कर्मकालव्यापिन्यामेव ॥

इति षष्ठी सामान्यनिर्णयः ॥

---

२७८ अथ षष्ठीविशेषः ॥

अथ चम्पाषष्ठी निर्णयः ॥

भाद्रपदशुक्लषष्ठी भौमवैधृतविशाखायोगेन चम्पाभिधाना ॥ सा व्रताचरणेन सर्वपापक्षयं कुर्यात् इत्युक्तं ॥
स्कन्दपुराणे–षष्ठी भाद्रपदे शुक्ला वैधृतेन समन्विता ।

विशाखाभौमयोगेन सा चम्पेतीह विश्रुता ॥
त्रेतायां चैव पंचाशत्तावत्यस्तु कृते युगे ।
भवन्ति च कलौ त्रिंशत् द्वापरे द्वादशाधिकाः ॥
अतो देवमनुष्याणां दुर्लभा नृपसत्तम ।
सर्वपापक्षयं कुर्याद्व्रतानामप्यखण्डताम् ॥

दुर्वाससाप्येवमुक्तं–द्विदैवत्यर्क्षभौमेन वैधृतेन समन्विता ।
नभस्ये या सिता षष्ठी सा चम्पेति निगद्यते ॥ इति ॥

अस्यां द्विदैवत्यर्क्षं तु विशाखा ॥ अथैवं चतुर्णां योगेन चम्पाभिधानमभिधत्ते अर्धोदयपर्ववत् ॥ अतश्चालभ्ययोगत्वात् पूर्वदिने परदिने वा यदा योग उपलभ्यते तदा व्रते ग्राह्या न पूर्वविद्धा परविद्धादरः । तथा सूर्यव्रतत्वाद्दिवायोगसंबंधिनी ग्राह्या ॥

ततः प्रभाते विमले गत्वा गुरुगृहं व्रती ।

सर्वोपकरणैः सूर्यमाचार्याय निवेदयेत् ॥

इत्यनेन रात्रिसंबन्ध उक्तः ॥ तथापि दिवानुस्यूतः प्रप्रशस्त इति व्रतविधिः ॥

पुराणसमुच्चये—पंचम्यां नियमं कुर्यादाचार्यवचनाद्व्रती ।
नियमं उपवासनियमं ।

षष्ठ्यां स्नानं प्रकुर्वीत संतर्प्य पितृदेवताः ।
अभ्येत्य स्वगृहं मौनी सूर्यं मनसि चिन्तयेत् ॥
स्थापयेदव्रणं कुंभं मृत्पात्रं च ततोपरि ।
तस्योपरि न्यसेत्सूर्यं पलैकेन विनिर्मितम् ॥
सौवर्णं वा यथाशक्त्या वित्तसारं तथारुणम् ।
अर्चयेत्तं जगन्नाथं गृहीत्वाज्ञां गुरोः स्वयम् ॥
षडक्षरेण मंत्रेण गन्धपुष्पादिभिश्च तम् ।
ॐ नमः सूर्यायेति मंत्रः ॥
धेनुं पयस्विनीं दद्यात्सूर्यो मे प्रीयतामिति ॥
धान्यं पुष्पं फलं रत्नं सवस्त्रं च गवादिकम् ।
यथाश्रद्धं च दातव्यं ब्राह्मणान्भोजयेत्ततः ॥
ततः प्रभाते विमले गत्वा गुरुगृहं व्रती ।
सर्वोपकरणैः सूर्यमाचार्याय निवेदयेत् ॥
गवां कोटिप्रदानेन कुरुक्षेत्रेऽर्कपर्वणि ।
चम्पाव्रतस्य राजेन्द्र कलां नार्हन्ति षोडशीम् ॥

इति चम्पाषष्ठीनिर्णयः ॥

## २८० अथ कपिलाषष्ठी ॥

भाद्रपदषष्ठी रोहिणी व्यतीपातभौमयोगेन कपिला प्रोक्ता। तदुक्तं वाराहपुराणे ॥

नभस्यशुक्लपक्षे च रोहिणीपातभूसुतैः ।
युक्ता षष्ठी पुराणज्ञैः कपिला परिकीर्तिता ॥
व्रतोपवासनियमैर्भास्करं तत्र पूजयेत् ।
कपिलां तु द्विजाग्र्याय दत्त्वा क्रतुफलं लभेदिति ॥

निर्णयामृते तु शुक्लायां रोहिण्यसंभावनया नभस्यकृष्णपक्षे इति लिखितं ॥ कालादर्शे शुक्लेत्यभाणि ॥

व्रतसमुच्चये—प्रौष्ठपदासिते पक्षे षष्ठी भौमेन संयुता ।
व्यतीपातेन रोहिण्या सा षष्ठी कपिला स्मृता ॥
यस्मिन्काले भवेदेतैर्गुणैः षष्ठी युता तदा ।

यस्मिन्काल इति श्रावणानन्तरं षष्ठी यद्यप्येतैर्योगैर्युक्ता तदापि कपिलास्यात् सदैवप्रौष्ठपद इति॥ निर्णयामृते तु भानौ चैव करे स्थित इति यल्लिखितं तच्चान्द्रशुक्लपक्षादिमासाभिप्रायेण। तत्रापि स्यात् इदं वचनं व्रतखण्डे नास्ति अतो विचार्यं ॥ अलभ्ययोगत्वेन यस्मिन्कालइति श्रवणाच्च ॥ चम्पा षष्ठी निर्णयेन अस्या निर्णय इति ॥ व्रतविधिस्तु व्रतखण्डात् ॥

## इति कपिला षष्ठी ॥

---

## २८१॥ अथ स्कन्दषष्ठी ॥

तथा—भविष्यत्पुराणे स्कन्ददर्शनषष्ठी ॥

येयं भाद्रपदे मासि षष्ठी स्याद्भरतर्षभ ।

इयं पापहरा पुण्या शिवा शान्ता शुभा नृप ॥
स्नानदानादिकं सर्वमस्यामक्षय्यमुच्यते ।
अस्यां पश्यन्ति गाङ्गेयं दक्षिणापथमाश्रितम् ॥
ब्रह्महत्यादिपापैस्ते मुच्यन्ते नात्र संशयः ।

॥ इति स्कंददर्शनषष्ठी ॥

---

## ॥ अथ दरिद्रहरषष्ठी ॥

षष्ठीव्रतेन धनप्राप्तिः स्यात् । तदुक्तं स्कन्दपुराणे—

षष्ठी नाम तिथिर्या स्यात्सा मान्या दैवतैरपि ।
एकभक्तेन नक्तेन तथैवायाचितेन च ॥
उपवासेन दानेन तैलक्षाराविवर्जितः
अस्मिन्सूर्यव्रते तात दारिद्र्यं न भवेत्कुले ॥
षष्ठीं तिथिं समुद्दिश्य ब्राह्मणस्य च भोजनम् ।
शाल्योदनं च पयासि कृत्वा शर्करयान्वितम् ॥
बाहुल्यं घृतसंयुक्तं वर्षमेकं प्रदापयेत् ।
व्रतान्ते विप्रमाहूय अभ्यङ्गितशरीरिणम् ॥
तस्मै देया सुशीला च गौः सवत्सा पयस्विनी ।
अनेनैव विधानेन यः षष्ठीव्रतमाचरेत् ॥
धनप्राप्तिरिदानीं स्याद्दारिद्र्यं न च तत्कुले ।

॥ इति दारिद्र्यहरषष्ठी ॥

---

## २८२ ॥ अथ कार्तिकषष्ठी ॥

कार्तिके शुक्लषष्ठी तु भौमवारेण संयुता ।

महाषष्ठीति सा प्रोक्ता सर्वपापहरा तिथिः ॥
तस्यां स्वापिति वै वन्हिः पूर्वत्रोपोष्य वै नरः ।
षष्ठ्यां वन्हिं समभ्यर्च्य कुर्याद्वन्हिमहोत्सवम् ॥

इति मत्स्यपुराणात् ॥

तथा—आशाढशुक्लषष्ठी तु तिथिः कौमारिला स्मृता ।
कुमारमर्चयेत्तत्र पूर्वत्रोपोष्य वै नर इति ॥

सर्वास्वपि षष्ठीतिथिषु तिथ्यधिपतित्वेन स्कन्दः पूजनीय इति । एवं नानाप्रकाराणि षष्ठीव्रतानि व्रतखण्डादवगन्तव्यान्युक्तनिर्णयेन निर्णेतव्यानि ॥

## इति कार्तिकषष्ठी ॥

---

## [२८३]अथ माघषष्ठी ॥

क्षेत्रविशेषे शंभुदर्शनात्सर्वपापक्षयो जायते ॥

तदुक्तं स्कन्दपुराणे ॥

हाटकेश्वरजे क्षेत्रे देवदेवं महेश्वरम् ।
दृष्ट्वा विमुच्यते पापात्स्थापितं नलभूभुजा ॥
यस्तं पश्येन्नरोभक्त्या माघषष्ठ्यां सिते द्विजाः ।
सर्वरोगविनिर्मुक्तः प्राप्नोति परमं पदम् ॥
कद्रूः पामाथ दद्रूणि मण्डलानि विचर्चिका ।
दर्शनात्तस्य नश्यन्ति जन्तूनां भावितात्मनाम् ॥
अस्ति तस्याग्रतः कुण्डं स्वच्छोदकसुपूरितम् ।
यस्तत्र कुरुते स्नानं प्रत्यूषे सूर्यवासरे ॥

अपि कुष्ठामयग्रस्तः स भूयः स्यात्पुनर्नवः ।
यदा संस्थापितः शम्भुर्नलेन पृथिवीभुजा ॥
तदा तुष्टेन रुद्रेण भाषितं तु नलाग्रतः ।

॥ इति माघषष्ठी ॥

---

२८४॥ अथाङ्गारकषष्ठी ॥

भौमेनयुक्ता षष्ठी तीर्थविशेषे स्नानादिना महापातकस्य विनाशकारिणीत्युक्तं स्कान्दे नागरखण्डे

स्त्रीहत्यया समायुक्तो भीष्म : कुरुपितामहः ।
तीर्थयात्राप्रसङ्गेन चमत्कारपुरं ययौ ॥
अथापश्यन्महात्मा स सुपुण्यं तद्गयाशिरः ।
स्नात्वा श्राद्धं च विधिवद्यावच्छ्रद्धासमन्वितः ॥
तावदाकाशजा वाणी वाक्यमेतदुवाच ह ।
भीष्म भीष्म महाबाहो नार्हस्त्वं श्राद्धजं विधिम् ॥
कर्तुं स्त्रीहत्यया युक्तस्तस्माच्छृणु वचो मम ।
शर्मिष्ठातीर्थमित्येवं ख्यातं पातकनाशनम् ॥
अस्मात्स्थानात्समीपस्थं वारुण्यां दिशि पुण्यकृत् ।
कृष्णाङ्गारकषष्ठ्यां यो नरः स्नानं समाचरेत् ॥
स स्त्रीहत्याकृतात्पापान्मुच्यते नात्र संशयः ।
अद्य भौमयुता षष्ठी तस्मात्तत्र द्रुतं व्रज ॥
अहं तव पिता पुत्र शान्तनुः पृथिवीपतिः ।
स्त्रीहत्ययान्वितं ज्ञात्वा ततस्तूर्णमिहागतः ॥

ततो भीष्मो द्रुतं गत्वा तत्र स्थाने समाहितः ।
स्नानं कृत्वा ततः श्राद्धं चक्रे श्रध्धासमन्वितः ॥
ततो भूयः समागत्य तं प्रोवाच स शान्तनुः ।
विपाप्मा त्वं कुरुश्रेष्ठ संजातोऽसि न संशयः ॥
तस्मान्निजगृहं गच्छ राज्यचिन्तां समाचरेति ।

॥ इत्यङ्गारकषष्ठी ॥

२८५ तथा तत्रैव—नरादित्यस्ततश्चान्यो यो नरेण प्रतिष्ठितः ।
षष्ठ्यान्तं सूर्यवारेण दृष्ट्वा पापात्प्रमुच्यते ॥
रोगी विमुच्यते रोगाद्दरिद्रो धनमाप्नुयादिति ।
कृतेऽचलद्द्विवेदेन ग्रन्थे निर्णयदीपके ॥
उत्तमव्रतसंयुक्तो जातः षष्ठीविनिर्णयः ॥

॥ इति षष्ठीनिर्णयः ॥

---

## २८६ ॥ अथ सप्तमी निर्णीयते ॥

सप्तमीतिथिरुपवासादिव्रते पूर्वतिथ्यन्वितोपोष्या ॥ परतिथ्यन्विता नोपोष्या ॥

तदुक्तं कूर्मपुराणे—नागविद्धा तु या षष्ठी रुद्रविद्धो दिवाकरः ।
कामविद्धो भवेद्विष्णुर्न ग्राह्यास्ते तु वासरा इति ॥
नागः पञ्चमी । रुद्रोऽष्टमी । दिवाकरः सप्तमी । कामस्त्रयोदशी । विष्णुर्द्वादशी ॥

षष्ठ्येकादश्यमावास्या पूर्वविद्धा तथाष्टमी ।
सप्तमी परविद्धा तु नोपोष्या हि कदाचन ॥

इति स्कन्दपुराणवचनेनापि सप्तमी परविद्धा निषिद्धा ॥

तथा—सप्तमी नाष्टमीयुक्ता न सप्तम्या तथाष्टमीति ॥

ब्रह्मवैवर्त्ते—सप्तम्यष्टमीमिश्रत्वप्रतिषेधदर्शनात् षण्मुन्योरिति युग्मवाक्याच्च षष्ठीयुक्ता सप्तमी उपोष्येति ॥ २८७
अत एव स्कन्दपुराणे तु ॥ परविद्धां निषिद्ध्य षष्ठया युक्तायाः प्राशस्त्यमुक्तं ॥

षष्ठ्या युता सप्तमी च कर्तव्या चैव सर्वदा ।
षष्ठी च सप्तमी यत्र तत्र सान्निहितो रविः ॥

तत्रेति षष्ठीयोगे सप्तम्युपवासे रविः सप्तम्यधिपतिः सन्निहितः सन्निधानेन व्रतानुग्राहक इत्येवममुमेवार्थमाह ॥
महापैठीनसिरपि—पञ्चमी सप्तमी चैव दशमी च त्रयोदशी ।
प्रतिपन्नवमी चैव कर्तव्या संमुखा तिथिः ॥
संमुखा सायान्हव्यापिनी ॥ एवं निगमेऽप्युक्तं ॥

षष्ठ्यष्टमी अमावास्या कृष्णपक्षे त्रयोदशी ।
एताः परयुताः पूज्याः पराः पूर्वेण संयुता इति ॥

षष्ठ्याः परा सप्तमी सा पूर्वयुतोपोष्येत्यर्थः ॥ कृष्णसप्तमी विषये तु विशेषवचनाभिधानाभावात् एतैरेव स्कन्दपुराणनिगमवाक्यैः कृष्णापि पूर्वतिथ्यन्वितोपोष्येति २८८ दीपिकाकारः ॥ पूर्वा स्यादिह सप्तमीति । इहेति तिथिनिर्णये सप्तमी पूर्वा पूर्वातिथियुतेत्यर्थः ॥

कालादर्शेऽपि—प्रतिपत्पञ्चमी कृष्णाष्टमीभूते च सप्तमी ।
रम्भातृतीया चेत्येता उपोष्याः पूर्वसंयुताः ॥

अत्र सप्तमी कृष्णाष्टमी चतुर्दश्योः कृष्णयोः साहचर्यात्॥शुक्ला तु युग्मे पूर्वा प्राप्तैव अतः उभे पूर्वयुते उपोष्य इति सिद्धान्तः ॥ पूर्वविद्धा ग्राह्येत्युक्तेऽपि पूर्वदिने सायं तिथ्यभावे निषिद्धापि पराविद्धा ग्राह्या ॥ एतत्सर्वं पूर्वविद्धासाधारणं ॥ नक्तैकभक्तादिकं तु कर्म कालव्यापिन्यामेवेति ॥

इति सप्तमी सामान्य निर्णयः ।

---

## ॥ [२८५] अथ सप्तमीविशेषः ॥

यदा शुक्लपक्षसप्तम्यां सूर्यसंक्रान्तिस्तदा स्नानदानादिकमनन्तफलदं स्यात् ॥ तदुक्तं भविष्योत्तरे

ब्रह्मोवाच- शुक्लपक्षे तु सप्तम्यां यदा संक्रमते रविः ।

महाजया तदा स्याद्वै सप्तमी भास्करप्रिया ॥

स्नानं दानं जपो होमः पितृदेवाभिपूजनम् ।

सर्वं कोटिगुणं प्रोक्तं तपनेन महौजसा ॥

यस्तस्यां मानवो भक्त्या घृतेन स्नापयेद्रविम् ।

सोऽश्वमेधफलं प्राप्य ततः सूर्यपदं व्रजेत् ॥

पयसा स्नापयेद्यस्तु याति सूर्यसलोकतामिति ॥

तथा तस्मिन्नेव पुराणे

शुक्लपक्षस्य सप्तम्यां नक्षत्रं पञ्चतारकम् ।

यदा भवेत्तदा ज्ञेया जया नामेति सप्तमी ॥

पञ्चतारकमिति रोहिण्याश्लेषामघाहस्तश्च

तस्यां दत्तं हुतं जप्तं तर्पणं देवपूजनम् ।

सर्वं शतगुणं प्रोक्तं पूजार्चादि दिवाकरे ॥

[२८०] तथा–शुक्लपक्षस्य सप्तम्यां सूर्यवारो भवेद्यदि ।
सप्तमी विजया नाम तत्र दत्तं महाफलम् ॥
स्नानं दानं जपो होम उपवासस्तथैव च ।
सर्वं विजयसप्तम्यां महापातकनाशनमिति ॥

तथा षष्ठीयुतायां सप्तम्यां रविवारे पद्मकयोगोऽभिधीयते ॥
षष्ठी च सप्तमी योगे वारश्चेदंशुमालिनः ।
योगोऽयं पद्मको नाम कोटिसूर्यग्रहैः समः ॥ इतिस्मृत्यन्तरे॥

कालिकापुराणे–कृत्वोपवासः षष्ठ्यां तु सप्तम्यां यस्तु मानवः ।
करोति विधिवच्छ्राद्धं भास्करः प्रीयतामिति ॥
सर्वरोगविनिर्मुक्तः सूर्यलोके महीयते ।

तथा–सप्तम्यां पूज्य ऋक्षेशं चित्रभानुं दिवाकरम्
रक्तैश्च गन्धकुसुमैर्महदारोग्यमाप्नुयात्॥इतिभविष्यत्पुराणात्॥

[२८१] अथ माघशुक्लसप्तमी मन्वादिः ॥

तदुक्तं गार्ग्येण–आषाढस्यापि दशमी माघमासस्य सप्तमी ।
आसु स्नानादिकं सर्वमनन्तफलदं भवेदिति ॥

॥ इति विशेषसप्तमी ॥

---

## ॥ अथ माघशुक्लसप्तमी अचला सप्तमी ॥

तस्यां प्रभातसमये मत्स्यादिभिरप्यनवगाहिते जले स्नानं सर्वपापहरं सौभाग्यदं च भवेत् ॥

तदुक्तं भविष्योत्तरे–मया न दत्तं न हुतं नोपवासव्रतं कृतम् ।

भक्त्या न पूजितः शम्भुः कथं पापं प्रणश्यति ॥

इति पृष्टे वसिष्ठः—

[२५२] माघस्य सितसप्तम्यां सर्वकामफलप्रदम् ।
रूपसौभाग्यजननं स्नानं कुरु वरानने ॥
कृत्वा षष्ठ्यामेकभक्तं सप्तम्यां निश्चलं जलम् ।
रात्र्यन्ते चालयेथास्त्वं कृत्वा शिरसि दीपकम् ॥
माघस्य सितसप्तम्यां अचलं चालितं च यत् ।
जलं मलानां सर्वेषां स्मृतं प्रक्षालनं ततः ॥
न केन चाल्यते यावत्तावत्स्नानं समाचरेत् ॥ इति ॥

न केन चालितं निश्चलं जलं अत एव रात्र्यन्ते किञ्चिद्रात्रिशेषे इत्यर्थः ॥ तथा स्मृतिचन्द्रिका—

सूर्यग्रहणतुल्या तु शुक्ला माघस्य सप्तमी ।
अरुणोदयवेलायां तत्र स्नानं महाफलम् ॥

अरुणोदयकाल आचारस्मृतौ—

चतस्रो घटिकाः प्रातररुणोदय उच्यते ।
मुनीनां स्नानकालोऽयं गङ्गाम्भः सदृशः स्मृत इति ॥

तथा च सप्तम्यां सत्यां स्नानं ॥

[२५३] तथा च मनुः—स्नाने चाभ्यञ्जने चैव दन्तधावनमैथुने ।
जनने मरणे चैव तत्कालव्यापिनी तिथिरिति ॥

तत्र दिनद्वये तत्कालव्यापित्वे पूर्वा ग्राह्या ॥ तत्तिथिविहितसूर्यपूजादावग्रे विद्यमानत्वात् ॥ यत्तूक्तं खर्वदर्पौ परौ पूज्याविति तत्तु निषेधव्यतिरिक्तविषये वेदितव्यं ॥ अत्र निषेधोऽस्ति सप्तमी नाष्टमी युक्तेति ॥ दिनद्वये कर्मका-

लव्यापित्वे पूर्वा ॥

तिथ्यादौ तु भवेद्यावान् ह्रासो वृद्धिः परेऽहनि ।
तावान् ग्राह्यः सपूर्वेद्युरदृष्टोऽपि स्वकर्मणीति ॥

अनेन परदिने चेत्परा एव तत्रागतिकत्वेन परविद्धा-निषेधाभावात् ॥ कर्मणो यस्य यःकाल इत्यनेनापि परा ग्राह्या उपवासविषये सामान्यसप्तमी निर्णयेन निर्णय इति ॥

॥ इत्यचलासप्तमीनिर्णयः ॥

[२६४] अथ तद्व्रतविधिस्तु श्रीकृष्णेन युधिष्ठिरं प्रति

एकभक्तेन संतिष्ठेत् षष्ठ्यां संपूज्य भास्करम् ।
सप्तम्यां तु व्रजेत्प्रातः सुगंभीरं जलाश्रयम् ॥
सरित्सरस्तडागं च देवखातमथापि वा ।
सुखावगाहं सलिलं दुष्टसत्त्वैरदूषितम् ॥
व्यालाम्बुपक्षिभिश्चैव जलजैर्मत्स्यकच्छपैः ।
न केन चाल्यते यावत्तावत्स्नानं समाचरेत् ॥
सौवर्णे राजते पात्रे भक्त्या तुम्बमयेऽथवा ।
तैलेन वर्तिर्दातव्या महारजनरञ्जिता ॥
इक्षुकाशरमादाय जलावगाहने नरः ।
सप्तजन्मकृतं पापमिक्षुके देवि नश्यतु ॥
यद्यज्जन्मकृतं पापं मया जन्मसु सप्तसु ।
यन्मे रोगं च शोकं च माकरी हन्तु सप्तमी ॥

[२६५] अर्घमंत्रः—समाहितमना भूत्वा दत्वा शिरसि दीपकम् ।
भास्करं हृदये ध्यात्वा इमं मंत्रमुदीरयेत् ॥
नमस्ते रुद्ररूपाय रसानां पतये नमः ।

वरुणाय नमस्तुभ्यं हरिवास नमोऽस्तुते ॥

जलोपरि धरेद्दीपं स्नात्वा संतर्प्य देवताः ।

चन्दनेन लिखेत्पद्ममष्टपत्रं सकर्णिकम् ॥

मध्ये शिवं सपत्नीकं दले पूर्वादितः क्रमात् ।

भानुः । विवस्वान् । भास्करः । सविता । सूर्यः । सहस्र । किरणः । सर्वात्मा । पूषा ॥

पूज्याः प्रणवयुक्तास्तु नमस्कारान्तयोजिताः ॥

पुष्पधूपादिभिः पूजां कृत्वा स्वगृहमाव्रजेत् ।

ताम्रपात्रे यथाशक्त्या मृन्मये वाथ भक्तिमान् ॥

स्थापयेत्तिलपिष्टं च सघृतं सगुडं तथा ।

काञ्चनं तालकं दत्वा अशक्तास्तिलपिष्टजम् ॥

रक्तवस्त्रेण *संवेष्ट्य पुष्पैर्धूपैरथार्चयेत् ।

ततस्तं वाचयेद्विप्रैर्दद्यान्मंत्रेण तालकम् ॥

दानेनानेन दत्तेन सूर्यः प्रीतोऽस्तु नः सदा ।

अचलासप्तमी स्नानं सर्वकामफलप्रदम् ॥

## ॥ इति अचलासप्तमी व्रतविधिः ॥

२५१ तथा इयमेव सप्तमी रविवारपुन्नामनक्षत्रयोगे महतीत्युच्यते ॥

तदुक्तं कालादर्शे—माघे च सप्तमी शुक्ला रविवारेण संयुता ।

पुन्नक्षत्रसमायुक्ता महती परिकीर्तिता ॥

सूर्यं संपूजयेत्तत्र विधिवन्नियतो नर इति ।

---

* संच्छादयेति पाठान्तरं ॥

विधिवद्रक्तपुष्पाक्षतगन्धादिभिः ॥ पुन्नक्षत्राणि हस्तानुराधापुष्यमृगशीर्षपुनर्वस्व इति ॥

## ॥ अथ पुत्रप्राप्ति सप्तमी ॥

यो वर्षपर्यन्तं सप्तमीषु सूर्यभक्तिं कुर्यात्तस्य पुत्रप्राप्तिः स्यात् ॥ तदुक्तं स्कान्दे नागरखण्डे ॥

आसीत्पूर्वं द्विजो नाम गालवस्तु सुतेच्छया ।
सूर्यमाराधयामास क्षेत्रे वै हाटकेश्वरे ॥
वटवृक्षं समाश्रित्य कृतवान् परमं तपः ।
स्थापयित्वा रवेरर्चां यथोक्तं पाञ्चरात्रिके ॥

अर्चा प्रतिमा ।

ततः प्रभृति लोकेऽत्र स वटादित्यसंज्ञितः ॥
पुत्रप्रदो ह्यपुत्राणां विख्यातो भुवनत्रये ।
सप्तम्यां सूर्यवारेण उपवासपरायणः ॥
यस्तु पूजयते भक्त्या सप्तम्यो द्वादशक्रमात्
स प्राप्नोति सुतं श्रेष्ठं स्ववंशस्य विवर्धनमिति ॥
अत्र गाथा पुरा गीता नारदेन सुरर्षिणा ।
दृष्ट्वा पुत्रप्रदं देवं वटादित्यं सुरेश्वरम् ॥
अपि वर्षशता नारी वन्ध्या वा दुर्भगापि वा ।
साम्बसूर्येणोपदेशात्सद्यो गर्भवती भवेदिति ॥

२५७ तथा वाराहपुराणे अगस्त्यः—

मासि भाद्रपदे प्राप्ते कृष्णपक्षे सुरेश्वर ।
सप्तम्यामुपवासेन पुत्रप्राप्तिव्रतं हि तत् ॥

तथा भविष्यत्पुराणे ब्रह्मा—

कृष्णपक्षे तु माघस्य सर्वाप्तिसप्तमीं शृणु ।

उपोष्य यामवाप्नोति सर्वान्कामान्धराधरेत्यादीनि नक्तैकभक्तोपवासादीनिसप्तमीव्रतानिव्रतखण्डादवगन्तव्यानि ॥

## इति सप्तमीनिर्णयः ॥

---

कृतेऽचलाद्विवेदेन ग्रन्थे निर्णयदीपके ।

सप्तम्या निर्णयो जातस्तत्रोक्तव्रतसिद्धये ॥

---

## २९८ अथाष्टमीनिर्णीयते ॥

अष्टमीतिथिरुपवासादिव्रते परातिथ्यन्विता ग्राह्येति ॥ तावत्स्कन्दपुराणे—

नागविद्धा तु या षष्ठी सप्तम्या च तथाष्टमी ।

भूतविद्धाप्यमावास्या न ग्राह्या मुनिपुङ्गवैरिति ॥

जाबालिरपि—नागविद्धा तु या षष्ठी भानुविद्धो महेश्वरः ।

चतुर्दशी कामविद्धास्तिस्रस्ता मलिनाः स्मृताः ॥

भानुः सप्तमी । महेश्वरः अष्टमी । बृहस्पतिनाप्युक्तं ॥

एकादश्यष्टमी षष्ठी पौर्णमासी चतुर्दशी ।

अमावास्या तृतीया च ता उपोष्याः परान्विताः ॥

निगमेऽपि—षष्ठ्यष्टमी अमावास्या कृष्णपक्षे त्रयोदशी ।

एताः परयुताः पूज्या उपवासव्रतादिषु ॥

विष्णुधर्मोत्तरेऽपि अष्टमी परविध्धेत्युक्तं एषु वचनेषु चतुर्दश्यष्टम्यौ शुक्ले इति कालादर्शे व्याख्यातं ॥

२९९ ब्रह्मवैवर्तेऽपि—नाष्टमी सप्तमीयुक्ता सप्तमी नाष्टमीयुता ।

नवम्या सह कार्या स्यादष्टमी सर्वदा बुधैः ॥

एतानि वचनानि पूर्वविद्धानिषेधमुखेन परविद्धा-पूज्यत्वपराणि ॥ एवं च अष्टमी सप्तमीविद्धा प्रतिषिद्धा ॥ वसुरन्ध्रयोरित्यनेनापि वचनेन नवमीविद्धा विहिता ॥ एतच्च शुक्लपक्षाभिप्रायविषयं ॥

शुक्लपक्षेऽष्टमी चैव शुक्लपक्षे चतुर्दशी ।
पूर्वविद्धा न कर्त्तव्या कर्त्तव्या परसंयुता ॥

उपवासेषु कार्येषु एष धर्मः सनातनः ।

इति निगमस्मरणात् ॥ अत्रोपवासस्य कण्ठोक्तत्वादष्टम्याः परतिथ्यन्विताभिधानमुपवासविषयं शुक्लपक्षे अत उपवासव्यतिरिक्ते होमपूजादौ कर्मणि दूर्वाष्टम्यादि विशेषाष्टमी शुक्लपक्षेऽपि पूर्वतिथिर्ग्राह्येति ॥

३०० तदुक्तं बृहद्यमेन—

श्रावणी दुर्गनवमी दूर्वा चैव हुताशनी ।
पूर्वविद्धा प्रकर्त्तव्या शिवरात्रिर्बलेर्दिनमिति ॥

तथा—मधोः शुचेश्च तपसः आश्विनस्य तथाष्टमी ।
पूर्वाण्हयोगिनी पूर्वा दुर्गाया होमपूजयोः ॥

मधुश्चैत्रः । तपोमाघः ॥ दुर्गा शक्तिः ॥ विश्वरूपानिबन्धेऽपि ।
चैत्राष्टमी माघसिताष्टमी च दूर्वाष्टमी चाश्विनजाष्टमी च ।
एताश्चतस्रः प्रथमेऽन्हि कुर्याद्वैशाखमासस्य तु या तृतीया ॥

प्रथमेऽन्हि इति पूर्वतिथ्यन्वितेति यावत् ॥ पूर्वतिथ्यन्वितकालविशेषानुक्तावपि अन्वितमात्रेऽतिप्रसङ्गादष्टम्यां क्रियमाणस्य होमपूजादेर्दैवकर्मत्वेन पूर्वाण्हो देवा अपराण्हः पितर इति ॥

तथा—पूर्वाण्हे दैविकं कर्म अपराण्हे तु पैतृकं।

इत्यादिश्रुतिस्मृत्यनुरोधेन पूर्वाण्हयोगयुक्ताचेत्पूर्वतिथ्यन्विता ग्राह्येत्यर्थः ॥ तद्गतोऽन्यो विशेषस्तु महाष्टमीनिर्णये निर्णेष्यते ॥

## इति शुक्लाष्टमी ॥

---

## [३०१]अथ कृष्णाष्टमी ॥

सातु पूर्वविद्धो पोष्या ॥

तदुक्तं गार्ग्येण—कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी।

पूर्वविद्धा तु कर्तव्या परविद्धा न कस्याचित्।

ब्रह्मवैवर्त्तेऽपि—कृष्णाष्टमी तथा रम्भातृतीया वटपैतृकी ॥

बृहत्तपा तथा ब्रह्मन्कर्त्तव्या संमुखा तिथि।

पूर्वविद्धेत्यर्थः ॥ स्कन्दपुराणे

कृष्णाष्टमी चतुर्दशी सावित्री वटपैतृकी।

पूर्वविद्धत्यादिवाक्यैः कृष्णाष्टम्याः पूर्वविद्धाविधानात्॥ यानि तु पूर्वविद्धानिषेधकानि भानुविद्धो महेश्वरः न सप्तम्या युताष्टमीत्यादीनि तानि शुक्लाष्टमीविषयाणीति कृष्णाष्टमी पूर्वतिथ्यन्वितोपोष्येति सिद्धं ॥ अथाष्टमीनवम्योर्योगे उमामहेश्वरः पूज्यत इत्युक्तं ॥

[३०२]भोजराजीये—अष्टम्यां पूज्यते रुद्रो नवम्यां शक्तिरर्च्यते।

द्वयोर्योगे तु संप्राप्ते पूजया तु महाफलमिति ॥

तत्राष्टमीनवम्योर्युग्म एव शिवशक्त्योरुत्सवे पक्षद्वयेऽप्यष्टम्याः परविद्धत्वं ॥

तदुक्तं पद्मपुराणे–अष्टम्यां नवमीविद्धा नवम्यां च तथाष्टमी।
अर्धनारीश्वरप्राया उमामाहेश्वरी तिथिः ॥
अष्टमीनवमीयुग्मे महोत्साहे महोत्सवः ।
शिवशक्तयोः शिवक्षेत्रे पक्षयोरुभयोरपि ॥
इति अत उमामहेश्वरपूजने पक्षद्वयेऽप्यष्टमी परविद्धा ग्राह्येति सिद्धं ॥ नक्तैकभक्तादिकं तु कर्मकालव्यापिन्यामेव ॥

## इति अष्टमी सामान्यनिर्णयः ॥

---

## [३०३] अथाष्टमीविशेषनिर्णयः ॥

अथ बुधाष्टमी ॥ यदा यदा शुक्लाष्टम्यां बुधवारो भवति तदा तदा व्रतकल्पोक्तविधिना एकभक्तव्रतं कार्यं ॥
तदुक्तं भविष्योत्तरे–यदा यदा सिताष्टम्यां बुधवारो भवेद्यदि।
तदा तदा हि सा ग्राह्या एकभक्ताशने नृप ॥
पृथक् पृथगन्नैरष्टावष्टमीः कुर्यादित्यर्थः ॥
उक्तं व्रतखण्डे–बुधाष्टमी तु सम्पूर्णा यथोक्तफलदायिनी ।
अलभ्ययोगत्वेन सर्वकालमाभूदित्याशयेनाह ॥ अथ या निषिद्धा तामाह ॥
संध्याकाले तथा रात्रौ प्रसुप्ते च जनार्दने ।
बुधाष्टमी न कर्तव्या हन्ति पुण्यं पुराकृतम् ॥

## इति बुधाष्टमी ॥

---

## ॥ अथ भीष्माष्टमीनिर्णयः ॥

[३०४] अथ माघशुक्लाष्टमी सा भीष्माष्टमीत्युक्ता ॥ तस्यां

भीष्मतर्पणं कार्यं श्राद्धं चेति ॥

तदुक्तं महाभारते—

माघेमासि सिताष्टम्यां सलिले भीष्मतर्पणम् ।
श्राद्धं च ये सकृत्कुर्युस्तेस्युः सन्ततिभागिनः ॥इति ॥

तर्पणमंत्रः ॥ वैयाघ्रपद्यगोत्राय सांकृत्यप्रवराय च ।
अपुत्राय ददाम्येतज्जलं भीष्माय वर्मणे ॥

## इति भीष्माष्टमी ॥

---

## अथ पौषाष्टमी ॥

ईश्वरः पार्वतीं प्रति ॥

पौषे मासि यदा देवि शुक्लाष्टम्यां बुधो भवेत् ।
तदा सा तु महापुण्या महाभद्रेति कीर्त्यते ॥
तस्यां स्नानं जपो होमस्तर्पणं विप्रभोजनम् ।
मत्प्रीतये महादेवि पूज्योऽहं विधिवन्नरैरिति ॥

इयं भरणीयोगे पुण्योक्ता जयन्ती नाम ॥

---

## [३०५] अथ कार्तिकाष्टमी ॥

कूर्मपुराणे—शुक्लाष्टमी कार्तिके तु स्मृता गोष्टाष्टमी बुधैः
तत्र कुर्याद्गवां पूजां नमस्कारं प्रदक्षिणाम् ॥
गवानुगमनं कार्यं सर्वान्कामानभीप्सतेति ।

---

## अथाश्विनशुक्लाष्टमी ॥

नवरात्राष्टमी सा महाष्टमीत्युच्यते ॥ तावत्तन्निर्णय-

शिरोमणौ—ततो नीराजनं कर्म प्रतिपद्याश्विने सिते।
प्रारभ्य नवरात्रं स्याद्धित्वा चित्रां च वैधृतिम् ॥
प्रतिपद्यां धृतं खड्गं द्वितीयायां धृतं धनुः ॥
तृतीयायां करे चक्रं चतुर्थ्यां चर्म निर्मलम् ।
पञ्चम्यामाददे शूलं षष्ठ्यां तु परशुं तथा ॥
गदामबिभ्रत्सप्तम्यामष्टम्यां शक्तिमुत्तमाम् ।
नवम्यां च सदा देव्या मूर्तिर्दैत्यविनाशिनी ॥

तथा विश्वरूपनिबन्धे—
कात्यायन्या पुरा यस्मान्नवम्यां महिषो हतः ।
प्रवेश्य तस्मादष्टम्यां नवम्यामर्चयेच्छिवामिति

नवम्यां पूज्यत इति देवीपुराणेऽप्युक्तं
सा तर्जयन्ती हुङ्कारैर्विघ्नोच्छेदनतत्परा ।
नवम्यां पूजिता देवी ददात्यनवमं फलम् ॥
सा पुण्या सा पवित्रा च सा धर्म्या सुखदायिनी ।
तस्यां संपूजनीया तु चामुण्डा मुण्डमालिनी ॥
इत्यादिवाक्यैर्नवम्यां देवीपूजनं प्रशस्तं ॥ तत्राष्टम्यां देवीपूजा प्रशस्तोक्ता ॥

३०१ भविष्योत्तरे—तत्राष्टम्यां भद्रकाली दक्षयज्ञविनाशिनी ।
प्रादुर्भूता महाघोरा योगिनीकोटिभिः सह ॥
अतोऽर्थं पूजनीया सा तस्मिन्नहनि मानवैरिति ।

तथा देवीमाहात्म्ये—
अष्टम्यां च चतुर्दश्यां नवम्यां चैकचेतसः ।
श्रोष्यन्ति चैव ये भक्त्या मम महात्म्यमुत्तमम् ॥

माहात्म्यं स्तोत्रपाठः । तस्य पूजापूर्वकत्वादष्टम्यां च पूजनमभिहितं ॥

विश्वरूपोऽपि—अष्टम्यां च नवम्यां च जगन्मातरमम्बिकाम् ।

पूजयित्वाश्विने मासि निःशोको जायते नरः ॥

इत्यतोष्टमी नवमी च ॥ तिथीनां ह्रासवृध्धीसंभावनया होमपूजादौ निर्णेतुमर्हत इति तावदष्टमी निर्णीयते ॥ अश्विनशुक्लाष्टमी महाष्टमी ॥

[३८७] तदुक्तं पुराणसमुच्चये धौम्येन

आश्विने मासि शुक्ला तु या स्यान्मूलेन चाष्टमी ।

सामहत्यष्टमी ज्ञेया तत्र देवी कृतालया ॥

अष्टम्येव मूलनक्षत्रयुक्ता महानवमीत्युच्यते सा पूर्वविद्धा ग्राह्या ॥

तदुक्तं विश्वरूपनिबन्धे—

अश्वयुक्शुक्लपक्षे तु अष्टमी मूलसंयुता ।

यदि स्याद्रविविद्धापि सा महानवमी स्मृता ॥

रविविद्धा सप्तमीविद्धा ॥ तथा तत्रैवोक्तं ॥

महाष्टम्याश्विने मासि शुक्ला कल्याणकारिणी ।

सप्तम्याहि युता कार्या मूलेन तु विशेषत इति ॥

मूलयुतेति संभवाभिप्रायं तदभावेऽपि होमपूजादौ पूर्वाषाढायुता ग्राह्या ॥ तदुक्तं तत्रैव

मूलेन पूजयेद्देवीं तथा च जलदैवते ।

वैश्वदेवे तु नक्षत्रे पूजिता दुःखदा भवेत् ॥

अतो महाष्टमी पूर्वाण्हयोगयुक्ता चेत्पूर्वतिथ्यन्विता

कार्या ॥ शुद्धायामविवाद इति ॥

[३०८] ननु—नाष्टमी सप्तमीयुक्ता न सप्तम्या तथाष्टमी ।

नवम्या सह कार्या स्यादष्टमी सर्वदा बुधैरिति ॥

तथा—नागविद्धा तु या षष्ठी भानुविद्धो महेश्वरः ।

चतुर्दशी कामविद्धास्तिस्रस्ता मलिनाः स्मृताः ॥

षण्मुन्योर्वसुरन्ध्रयोरिति युग्मवाक्यमिति ब्रह्मवैवर्त्तजा-बालियुग्मवाक्यादिभिः परविद्धाविधानदर्शनात् ॥ भोजराजीये पूर्वविद्धाष्टमी निन्दिता ॥

यथा—पुत्रान् हन्ति पशून्हन्ति हन्ति राष्ट्रं सराजकम् ।

हन्ति जातानजातांश्च सप्तमीसहिताष्टमी ॥

तस्मात्सर्वप्रयत्नेन सप्तमीवेधसंयुता ।

वर्जनीयाष्टमी पार्थैर्भुवो राज्यमभीप्सुभिरिति ॥

एवमादिभिः परविद्धायाः प्राशस्त्याभिधानात् पूर्वतिथ्यन्विताग्रहणे विरोध इति चेत् न अष्टम्याः परतिथ्यन्वित-प्राशस्त्याभिधायकानामेषां वाक्यानां सामान्य शुक्लाष्टम्युपवासविषयत्वं वेदितव्यं॥ प्रतिपादितं चाष्टमीसामान्यनिर्णये॥ महाष्टमी तु विश्वरूपाद्युक्तैर्वाक्यैः पूर्वतिथिविद्धा विधीयत इति अविरोधः ॥ [३०९] यथा—

चैत्राष्टमी माघसिताष्टमी च दूर्वाष्टमी चाश्विनजाष्टमी च ।

एताश्चतस्रः प्रथमेऽन्हि कुर्याद्वैशाखमासस्य तु या तृतीया ॥

तथा—सप्तम्यामुदिते सूर्ये अष्टम्यास्तमितो यदि ।

मूलऋक्षसमायुक्ता पूजनीया प्रयत्नतः ॥

मूलाभावेऽपि कर्तव्या यदि स्यात्तोयसंयुता ।

तोयं पूर्वाषाढा ॥

वासिष्ठः—धनुः स्थिते निशानाथे अंबिकां पूजयेद्बुधः ॥
नैर्ऋत्ये चांबुदैवत्ये न विश्वर्क्षे कदाचन ॥

पुनरपि पूर्वविद्धाभिधानं स्मृत्यन्तरादुक्तं ॥ विश्वरूपनिबन्धे ॥

यदाष्टमीं च संप्राप्य अस्तं याति दिवाकरः ।
तत्र दुर्गोत्सवं कुर्यान्न कुर्यादपरेऽहनि ॥
कुलं पुत्रं धनं राज्यं दीर्घमायुस्तथैव च ।
प्रथमा चाष्टमी पूज्या ये कांक्षन्ति सदा सुखम् ॥
[३१०] अश्वयुज्यष्टमी यत्र पूज्या नवमीमिश्रिता ।
दुर्भिक्षं तत्र जानीयाद्दशवर्षाणि पञ्च च ॥
देवीं निवेशयेद्यत्र नवम्यां च नराधिप ।
राज्यपीडा भवेत्तत्र कुलप्राणप्रहारिणीति ॥

एवमादिवाक्यैर्महाष्टम्याः पूर्वविद्धायाः ग्रहणेऽपि सप्तम्यान्वितामात्रेऽतिप्रसङ्गात् ॥ होमादेः कर्मणो दैवत्वेन पूर्वाण्हे क्रियमाणत्वाच्च तत्र पूर्वाण्हकाल *व्यापिनी चेत्पूर्वा ॥ अष्टम्याः सप्तमीविद्धाभिधानात्तत्र विष्ट्युपहितत्वावश्यंभावात्तन्मध्येऽपि होमपूजादिकं कार्यमित्युक्तमौर्वेण

महाष्टम्यां भगवती भद्रायामपि पूजिता ।
ददाति चायुरारोग्यं यतो भद्रास्वरूपिणी ॥
विष्टिं त्यक्त्वा महाष्टम्यां मम पूजां करोति यः ।
तस्य पूजां न गृण्हामि तेनाहमपमानिता ॥

[३११] भविष्योत्तरेऽपि—

* योगिनीति पाठान्तरम्

अहं भद्रा च भद्राहं नावयोरन्तरं क्वचित् ।
सर्वसिद्धं प्रदास्यामि भद्रायामर्चिता ह्यहम् ॥
भद्रायां भद्रकाल्याश्च मध्ये स्यादर्चनक्रिया ।
तस्माद्वै सप्तमीविद्धा कार्या दुर्गाष्टमी बुधैः ॥

एवमादिवाक्यैः सप्तम्यन्विताष्टमी प्रशस्ता ॥ सप्तम्यन्विताप्राशस्त्याभिधानेऽपि यदा सप्तमी मध्यान्हादूर्ध्वं प्रवर्त्तते तदाष्टमीतोऽधिकत्वात्सप्तमी बहुलेत्युच्यते ॥ तत्र दुर्गोत्सवं न कुर्यात् ॥ एतत्पुनरौर्वेणोक्तं

सप्तमी बहुला ज्ञेया परतश्चाष्टमी यदि ।
तेन शल्यमिदं प्रोक्तंपुत्रपौत्रधनक्षयम् ॥

बहुला अधिका ।

सप्तमीशल्यसंयुक्ता मोहविज्ञानतोऽपि वा ।
पूर्वविद्धा न कर्तव्या नरकं प्रतिपद्यत इति ॥

अतः—न दिवा न निशापि विष्टिहता
न च सप्तमी शल्यसमोपहता ।

[३१२] तथा—सप्तमी शल्यसंविद्धा वर्जनीया सदाष्टमी ।

इत्यादीनि भीमपराक्रमादीनां सप्तमीविद्धानिषेधकवाक्यानि सप्तम्या मध्यान्हादूर्ध्वं प्रवृत्तिविषयाभिप्रायपराणीति बोद्धव्यं ॥ यत्तु कैश्चिदष्टम्याः पूर्वविध्धाभिधानवाक्यानि कृष्णाष्टमीविषयाणीति व्याख्यातं

तत्तु—अष्टमीनवमी युग्मे महोत्साहे महोत्सवः ।
शिवशक्त्योः शिवक्षेत्रे पक्षयोरुभयोरपीति ॥

पद्मपुराणवचनेन कृष्णाष्टम्या अपि परविध्धाप्रतिपा-

दनैकान्तपराहतं ॥ [313] निर्णयामृते तु ॥ यदाहत्य च महाष्टमी नवमीयुता ग्राह्येत्युक्तं तत्रत्य लिखितपूर्वविध्धावाक्यविचारपर्यालोचनया स्वमनीषामात्रमिति ॥ अष्टम्यां च नवम्यां चेत्येवं विधेऽपि वाक्ये अष्टमी नवमीयुक्तेत्यसंबद्धप्रलापदर्शनात् केनचित् पूर्वविध्धाविधायकानां वाक्यानां क्षयविषयत्वमित्युक्त्वा दुर्गोत्सववाक्यमुदाहृतं ॥

उत्तरास्तिथयो यत्र क्षयं यान्ति नराधिप ।

तदा पूर्वाष्टमीं कुर्यान्न कुर्यादपरेऽहनि ॥

पूर्वा सप्तमीविद्धा ॥ एतदपि उत्तरातिथिविषयक्षयवृध्धयोरष्टमी निर्णयेऽनुपयोगित्वात् क्षयमात्रेऽतिप्रसङ्गाच्च ॥ क्षयेऽपि मध्यान्हापेक्षया पूर्वाण्हव्यापिन्यष्टमीचेत्पूर्वेति व्याख्येयं ॥ तस्मात्पूर्वविद्धाप्रतिपादकवचनानि मध्यान्हकालावध्यपेक्षया योजनीयानि मध्यान्हात्पूर्वाचेद्धोमादिकर्माणि पूर्वतिथ्यन्विता ग्राह्यान्यथा परा ॥

## इति महाष्टमी निर्णयः ॥

---

## [314] अथनवमी ॥

तथा च धौम्यः—

आवर्त्तनात्पूर्वकाले नवमी स्यात्परे यदि ।

तदा दुर्गार्चा पूर्वेद्युः पूर्वाण्हे त्वष्टमी यदि ॥

अर्चा होमादिका पूजा । अतो महाष्टमीवन्महानवम्यपि व्रतपारणादौ पूर्वविध्धा पूर्वाण्हव्यापिनी च ग्राह्या न परविध्धेति ॥ तदुक्तं विश्वरूपनिबन्धे—

नवमी सह कार्या स्यादष्टम्या सततं नृप ।
न कुर्यान्नवमीं तात दशम्यां तु कदाचन ॥
यो मोहाद्दशमीवेधे नवम्यां चण्डिकां यजेत् ।
पूजाभारो महाहोमो वृथा स्यात्तस्य नान्यथा ॥

तथा ब्रह्माण्डपुराणे—

आश्विने शुक्लपक्षे तु नवरात्रमुपोषितः ।
नवम्यां पारणं कुर्याद्दशम्या सहिता न चेत् ॥
दशमीमिश्रिता यत्र पारणे नवमी भवेत् ।
दुःखदारिद्र्यदा ज्ञेया तथा व्रतविनाशिनी ॥

[३१५] तथा स्मृत्यन्तरात् ॥

युक्तां दशम्या नवमीं कुबुध्दि र्यो ज्ञानहीनश्च पशून्निहन्ति ।
दुर्गा न गृण्हाति बलिप्रपूजां भवेध्धरित्र्यामशुभं नृपाणाम् ॥

पशुहिंसनं ब्राह्मणव्यातिरिक्तविषयं ॥ एतद्व्रतपारणादावष्टम्या सहाभिधानं पूर्वदिने पूर्वाण्हे नवमीसद्भावे सति वेदितव्यं ॥ अष्टम्यन्विते पूर्वाण्हे नवम्यभावे तु परतिथ्यन्विता ग्राह्या तदुक्तं

देवीपुराणे—अष्टम्यामुदिते सूर्ये दिनान्ते नवमी भवेत् ॥
दिनान्ते अपराण्हभागे ॥ तदा परविध्धा । अत एव

प्रभाते बलिदाने च कियन्मात्रापि लभ्यते ।
नवम्यां तत्र संपूज्या दुर्गा दुर्गार्तिनाशिनी ॥

तत्प्रशंसापि तत्रैवोक्ता—

सूर्योदये परं रिक्ता पूर्णा स्यादपरा यदि ।
बलिदानं प्रकर्तव्यं तत्र देशः शुभावहः ॥ इति ॥

अतः—न कुर्यान्नवमीं तात दशम्यां तु कदाचन ।

करोति धर्महरणं दशमीसंयुता कृतेति ॥

दशमीविद्धा निन्दितापि सूर्योदये परं रिक्तेत्यनेन प्रशस्ता ॥

नवमी सह कार्यास्यादष्टम्या सततं नृप ।

इत्यादिभिरष्टमीविध्धायां विधिदर्शनाच्च व्यवस्थयां पूर्वाण्हव्यापिनी चेत्पूर्वान्यथा परविध्धा ॥

इति नवमीनिर्णयः ॥

[३१६] पूर्वविध्धा विहितापि महाष्टमी तिथिवृध्धौ नवम्यनुरोधेन ग्राह्या होमपारणयोः संलग्नता यथा स्यादिति महाष्टमी निर्णयः ॥ आश्विनशुक्लप्रतिपदादिनवमीपर्यन्तं नवरात्रमिति तत्रेतिकर्तव्यता धौम्येनोक्ता

आश्विने मासि शुक्लस्य कर्तव्यं नवरात्रिषु ।

प्रतिपदादिक्रमेणैव यावच्च नवमी भवेत् ॥

एकभक्तेन नक्तेन स्वशक्त्यायाचितेन च ।

पूजनीया जनैर्देवी स्थाने स्थाने पुरे पुरे ॥

प्रत्यहं देव्याः पूजनाशक्तौ तु ॥

त्रिरात्रं पञ्चरात्रं वा नवरात्रं विशेषतः ।

कर्तव्यं भूतिकामैश्च आयुरारोग्यवृध्धये ॥

त्रिरात्रं वापि कर्तव्यं सप्तम्यादि यथाक्रमम् ।

भूतप्रेतपिशाचानां नाशार्थं चोत्सवाय च ॥

तथा व्रतखण्डे—यस्य यस्य हि या देवी कुलमार्गेण संस्थिता ।

तेन तेन च सा पूज्या बलिगन्धानुलेपनैः ॥

नैवेद्यैर्विविधैश्चैव पूजयेत्कुलमातरम् ।
नालिकेरैश्च कूष्माण्डैः श्रीफलैश्च विशेषतः ॥
ततो बलिं ददेच्छ्रेष्ठमजामहिषमेढ्रकैः ।
रक्तमांसैर्बलिंदद्याद्भैरवी प्रीयतामिति ॥
पशुवधमांसादि क्षत्रियविषयं ॥[३१७] श्रीकृष्णेनाप्युक्तं
महानवम्यां ये देव्या हन्यन्ते महिषादयः ।
स्वर्गे ते स्वर्गतिं यान्ति घ्नतां पापं न विद्यते ॥
भवानीप्राङ्गणे प्राणा येषां याता युधिष्ठिर ।
तेषां स्वर्गे चिरं वासो वीरास्तेऽप्सरसां प्रियाः ॥
पुनरपि धौम्यः—पुण्या महानवम्यासां तिथीनामुत्तमा तिथिः ।
भवानी तत्र संपूज्या संवत्सरसुखाय चेति ॥
विश्वरूपोऽपि—अष्टम्यां च नवम्यां च जगन्मातरमाम्बिकाम् ।
पूजयित्वाश्विने मासि विशोको जायते नरः ॥
अष्टमीरात्रिमासाद्य पूजां गृण्हाति पार्वती ।
निशायां पूजिता देवी वैष्णवी पापनाशिनी ॥
तस्मात्सर्वप्रयत्नेन अष्टम्यां निशि पूजयेत् ।
नवम्यां बलिदानं तु प्रकर्तव्यं सदा बुधैरिति ॥
नवमीं दशमीविध्धां ये कुर्वन्ति कुबुध्धयः ।
वृथा तेषां भवेत्सर्वं बलिपूजादिकं तथा ॥
एवं तु पूजनं कुर्याद्वर्षे वर्षे नराधिप ।
तथा ॥ नवरात्रिषु प्रत्यहं कुमारिकाः पूज्यन्त इति ॥
[३१८] तदुक्तं स्कन्दपुराणे—
एकैकां पूजयेत्कन्यामेकवृद्ध्या तथैव च ।

द्विगुणं द्विगुणं वापि प्रत्येकं नवकं तथा ॥

एकवर्षा तु या कन्या पूजार्थं तां विवर्जयेत् ।

गन्धपुष्पफलादीनां प्रीतिस्तस्या न विद्यते ॥

कन्यकास्वरूपं तु—

अरोगिणीं सुपुष्टाङ्गीं सुरूपां व्रणवर्जिताम् ॥

समानवंशसंभूतां कन्यां सम्यक् प्रपूजयेत् ।

ब्राह्मणीं सर्वकार्येषु जयार्थे नृपवंशजाम् ॥

लाभार्थे वैश्यवंशोत्थां सुतार्थे शूद्रवंशजाम् ॥

दारुणे अन्त्यजातीनां पूजयेद्विधिना नरः ॥

भोजनैश्चैव वस्त्रैश्च गन्धपुष्पाक्षतादिभिः ॥

श्रीदेव्याः कुमारीणां च पूजाविधिस्तन्मंत्राः कुमार्य-भिधानानि च विश्वरूपनिबन्धादिग्रन्थान्तरप्रसिद्धत्वान्न लिखितानि ॥

## इति महाष्टमीनवमीकर्तव्यताविधिः

---

## [३१९] अथ नवरात्रगतसूतकादिविचारविशेषःप्रस्तूयते ॥

व्रतादिकेषु प्रारब्धेष्वन्तरा सूतकादिपाते प्रारब्धमात्रकरणे सूतकं न स्यात् ॥

तदाह विष्णुः—व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्चने जपे ।

प्रारब्धे सूतकं न स्यादनारब्धे तु सूतकमिति ॥

मृतस्याप्युपलक्षणं ॥ विष्णुना प्रारंभोऽप्युक्तः

प्रारंभो वरणं यज्ञे संकल्पो व्रतसत्रयोः ।

इति एवमर्थमभिप्रेत्योक्तं
विश्वरूपनिबन्धे—आश्विनस्यामलेपक्षे प्रारब्धे नवरात्रके ।

शावसूते समुत्पन्ने क्रियाः कार्या कथं बुधैः ॥

इत्याशंक्योक्तं तत्रैव

प्रवृत्ते नवरात्रे तु सूतक च यदा भवेत् ।

देवीपूजा प्रकर्तव्या पशुयज्ञविधानतः ॥

तथा—सूतके पूजनं प्रोक्तं दानं चैव विशेषतः ।

देवीमुद्दिश्य कर्तव्यं तत्र दोशो न विद्यते ॥

सूतकेऽपि पूजादिकं विहितं ॥ कूर्मादिभिस्तु निषिद्धं ॥

कूर्मः—काम्योपवासोपक्रान्ते त्वन्तरा मृतसूतके ।

तत्र काम्यव्रतं कुर्याद्दानार्चनविवर्जितम् ॥

अन्तरा मृतसूतकेऽपि काम्यं नाम व्रतं कुर्यात् ॥ सूतकमध्ये परित्यक्तं दानार्चनादि तदन्ते सूतकान्ते व्रतं कुर्यात्॥

३२० तदाह मत्स्यः—सूतकान्ते नरः स्नात्वा पूजयित्वा जनार्दनम्।

दानं दद्याद्विधानेन व्रतसाफल्यमश्नुते ॥

जनार्दनमिति व्रतदेवतोपलक्षणं।सूतकविषये कालादर्शेऽप्युक्तं॥

पूर्वसंकल्पितं यच्च व्रतं सुनियतव्रतैः ।

तत्कर्तव्यं नरैः शुद्धं दानार्चनविवर्जितम् ॥

एवं पूर्ववाक्यैः सह विरोधदर्शनात् ॥ अयं दानार्चनादिनिषेधो व्रतसमाप्तिविषये सिद्धान्नदानादौ व्यवस्थाप्यते॥ सिद्धान्नादन्यत्र सूतकाभावदर्शनात् ॥

तदाह मरीचिः—लवणे मधुमांसे च पुष्पमूलफलेषु च ।

शाककाष्ठतृणेष्वप्सु दधिसर्पिःपयःसु च ॥

शुष्केषु चैव सर्वेषु नाशौचं मृतसूतक इति ॥
लवण इति गुडशर्करादेरुपलक्षणं ॥
यत्तु—विवाहोत्सवयज्ञेषु अन्तरा मृतसूतके ।
पूर्वसंकल्पितार्थेषु न दोषः परिकीर्तितः ॥
इति बृहस्पतिवचनमपि सिद्धान्नातिरिक्तेऽर्थे दोषाभावपरं ॥
सिद्धान्नविषयेऽङ्गिरसा निषेध उक्तः ॥
[३२१] अन्नसत्रप्रवृत्तानामाममन्नमगर्हितम् ।
भुक्त्वा पक्वान्नमेतेषां त्रिरात्रं तु पयः पिबेत् ।
इति सूतकान्नस्याभोज्यत्वं यमेनाप्युक्तं ॥
उभयत्र दशाहानि कुलस्यान्नं न भुज्यत इति ॥
उभयत्र सूतके मृतके च कुलस्य सूतकिकुलस्य सूतकिनोऽन्नं मनुष्याणां निषिद्धं किमुत देवानामिति ॥ तस्मात्सूतके शुष्कान्नफलघृतादिभिस्तत्रोक्तं कर्म कृत्वा पारणं कर्तव्यं ॥ सिद्धान्नसाध्यं कर्म व्रतसमाप्तिं च सूतकान्ते कुर्यात् ॥
रजस्वलापि रजोऽन्ते व्रतसमाप्तिं कुर्यात् ॥
तदुक्तं कालादर्शे—सूतके मृतके वापि दानार्चनाविवर्जितम् ।
अन्ते कुर्याद्रजोदुष्टा पातिं वान्यं नियोजयेत् ॥
पतिं नियोजयेत् पतिव्यतिरिक्तमन्यं पुत्राद्यभावे वेदितव्यं ॥
सत्यव्रतः—प्रारब्धदीर्घतपसां नारीणां यद्रजो भवेत् ।
न तत्रास्य व्रतस्य स्यादुपरोधः कदाचनेति ॥
पञ्चमेऽहनि संशुद्धा दैवे पित्र्ये च कर्मणि ॥
इति वचनात्तत्र व्रतसमाप्तिं कुर्यादिति ॥ स्वकर्तृकमपि पूजनादिकं सूतके सत्यन्येन कारयितव्यमग्निहोमवदिति

सूतकविचारविशेषनिर्णयः ॥ [३२२] अथ नवरात्रे नवमीं यावन्नृपैः प्रत्यहं शस्त्राणां गजाश्वानां च पूजा कार्या ॥

तदुक्तं देवीपुराणे—लोहो नामाभवत्पूर्वं दानवस्तु महाबलः ।

सदेवैः समरे क्रुद्धैर्बहुधा शकलीकृतः ।
तदङ्गसंभवं सर्वं लोहं यद्दृश्यते क्षितौ ॥
शस्त्रास्त्रमंत्रैर्होतव्यं पायसं घृतसंयुतम् ।
शस्त्राणां च प्रकर्त्तव्यं होमशेषाभिधारणम् ॥
विजयार्थं गजाश्वानां पिंडमेकैकमर्पयेत् ।
पूजयेद्राजचिन्हानि फलमाल्यानुलेपनैः ॥

राजचिन्हानि छत्रचामरादीनि ॥ पूजामंत्राः व्रतखण्डादवगन्तव्याः ॥

अभिषेकश्च कर्तव्यो गजाश्वानां दिने दिने ।

तथा तत्रैव—अश्वयुक्शुक्लप्रतिपत्स्वातियोगे शुभेदिने ।

पूर्वमुच्चैःश्रवा नाम पूजयेच्च ततः परम् ॥
पूजनीयाश्च तुरगा नवमीं यावदेवाहि ।
न च वाह्याः क्वचित्तत्र न च ताड्याः कथञ्चनेति ॥

[३२३] अथर्वणगोपथब्राह्मणे

नवम्यापराण्हे तु वाहनानि स्नापयित्वा विचित्रैर्वासोभिरलङ्कृत्य गन्धपुष्पदधिदुर्वाक्षतादिना नानाविधफलैर्नानाविधान्नादिभिः शान्तिसूक्तैर्माङ्गल्य भेरिपटहादिशब्दैश्च सह पूजयेत् ॥ अथ पूजामंत्रः ॥

गन्धर्वकुलजातिस्त्वं माभूयाः कुलदूषकः ।
ब्रह्मणः सत्यवाक्येन सोमस्य वरुणस्य च ॥

प्रसादाच्च हुताशस्य वर्धय त्वं तुरङ्गमान् ।
तेजसा चैव सूर्यस्य मुनीनां तपसा तथा ॥
रुद्रस्य ब्रह्मवीर्येण पवनस्य बलेन च
स्मर त्वं राजपुत्रस्त्वं कौस्तुभं च मणिं स्मर
यां गतिं ब्रह्महा गच्छेत्पितृहा मातृहा तथा ।
भूमिहानृतवादी च क्षत्रस्य च पराङ्मुखः ॥
सूर्याचन्द्रमसौ वायुर्यावत्पश्यन्ति दुष्कृतम् ।
व्रजस्व तां गतिं क्षिप्रं तच्च पापं भवेत्तव ॥
निष्कृत्तो यदि वा छिन्नो युद्धेऽध्वनि तुरंगम ।
रिपून्विजित्य समरे सह भर्त्रा सुखी भवेति मंत्रः ॥

अथ हस्तिपूजामंत्रः—

कुमुदैरावणः पद्मः पुष्पदन्तोऽथ वामनः ।
सुप्रतीकोऽञ्जनो नील इत्यष्टौ देवयोनयः ॥
तेषां पुत्राश्च पौत्राश्च वनान्यष्टौ समाश्रिताः ।
भद्रो मन्द्रो गजश्चैव राजसंकीर्ण एव च ॥
वने चैव प्रसूतास्ते शत्रूनायान्ति घ्नन्ति च ।
पान्तु त्वां वसवो रुद्रा आदित्याः समरुद्गणाः ॥
भर्तारं रक्ष नागेन्द्र स्वामी च प्रतिपाल्यताम् ।
अवाप्नुहि जयं युद्धे गमने स्वस्तिमान्भव ॥

इति महानवम्युत्सवः ॥

---

३२४ अथमहानवमीप्रसङ्गादपराजितापूजनंनिर्णीयते ॥

आश्विनशुक्लदशम्यां श्रवणर्क्षयुतायां पूर्वतिथ्यन्विता-

यामपराजितां पूजयेत् ॥ ततः प्रस्थानं कुर्यात् ॥

तदुक्तमीश्वरेण—आश्विने शुक्लपक्षस्य दशम्यां चापराजिता ।

पूजनीया नरैः सम्यङ्नैकादश्यां कदाचन ॥

ईशानीं दिशमाश्रित्यापराण्हे च प्रयत्नतः । इति ॥

विश्वरूपः—मूलेनावाहनं देव्याः पूर्वाषाढासु पूजयेत् ॥

उत्तरासु बलिं दद्यात् श्रवणेनापराजिताम् ।

तथा—या पूर्वा नवमीयुक्ता तस्यां पूज्यापराजिता ॥

क्षेमार्थं विजयार्थं च प्रसिद्धविधिना नरैः ।

नवमीशेषसंयुक्तदशम्यामपराजिता ॥

ददाति विजयं देवी पूजिता जयवर्धिनी ।

नवम्या सह कार्या स्याद्दशमी सर्वदा बुधैः ॥

न कुर्याद्दशमी तात एकादश्या कदाचन ।

तथा—दशम्यां रुद्रयुक्तायां पूजयेदपराजिताम् ॥

महापूजादि चेत्तत्र कृतम॒यकृतं भवेत् ।

रुद्र एकादशी ॥ प्रस्थानमपि दशम्यां भवेत् ॥

तदुक्तं विश्वरूप निबन्धे—

इन्द्रस्थानमिदं यस्माद्दशम्यां हि प्रकीर्तितम् ।

तस्माद्विजययात्रा तु नैकादश्यां कदाचन

३२५ जृंभः शक्रेण निहतो दशम्यां प्रस्थितेन तु ।

तस्माद्दशम्यां कुर्वीत सीमोल्लङ्घनमादरात् ॥

श्रवणर्क्षे तु पूर्णायां काकुत्स्थः प्रस्थितो यतः ।

उल्लङ्घयेयुः सीमानं तद्दिनर्क्षे ततो नराः ॥ इति ॥

श्रवणर्क्ष इति संभवाभिप्रायं ॥ तदभावेऽपि केवला

दशमी प्रशस्तोक्ता ॥

स्कन्दपुराणे—दशमीं यः समुल्लंघ्य प्रस्थानं कुरुते नरः ।
तस्य संवत्सरं राज्ये न क्वापि विजयो भवेत् ॥

अतोऽपराजितापूजने प्रस्थाने च दशम्येव ग्राह्या ॥

तदुक्तं लल्लेन—

तिथिः शरीरं तिथिरेव कारणं तिथिः प्रमाणं तिथिरेव साधनम्।

इति ॥ तथा च विश्वरूपः—

दशादिनमतिक्रम्य करोत्येकादशीदिने ।
सीमाया लङ्घनं तच्च नैहिकामुष्मिकं फलं ॥

तथा च गार्ग्यः—तिथिष्वविद्यमानेषु कर्म कुर्वन्ति ये नराः ।
वृथा भवेत्कृतं तस्य आत्मानं नरकं नयेदिति ॥

तस्माद्दशमीमध्ये प्रस्थानं अपराजितापूजनमिति च ॥

अपराजितापूजनमंत्रः—

जया च विजया देवी अजिता त्वपराजिता ।
अपराजिते जगन्मातः कुण्डलद्योतितानने ॥
अपराजिता रुद्ररणे करोतु विजयं मम ।
त्वं चापराजिते देवि शत्रूणां क्षयमावह ॥
शरीरमायुरारोग्यं प्रस्थाने संप्रयच्छ मे ।
दिक्षु मे विजयं देहि नमस्ते त्वपराजिते ॥

इति विश्वरूपनिबन्धात् ॥ [३२६] तथा च गार्ग्यः—

ईषत्सन्ध्यामतिक्रान्तः किञ्चिदुद्भिन्नतारकः ।
विजयो नाम यागोऽयं क्षमः सर्वार्थसाधने ॥

तत्रापराजितापूजनं प्रस्थानं च शमीतरुं पूजयेत् ॥

तदुक्तं आथर्वणगोपथब्राह्मणे ॥ अथ अपराजिता दशम्यां पूर्वोक्ते विजयमुहूर्त्ते उक्तंप्रास्थानिकं॥ यत इन्द्रभयामहे ॥ त्रातारमिन्द्र आनोभद्रातः परिपठन् राजा शमीतरुं गच्छेत् । तदप्येते श्लोकाः ॥

अलङ्कृतो भूषितभृत्यवर्गः परिष्कृतोत्तुङ्गतरङ्गनागः ।
वादित्रनादप्रतिनादिताशः सुमङ्गलाचारपरंपराशीः ॥
राजा निर्गत्य भवनात्पुरोहितपुरोगमः ।
प्रास्थानिकं विधिं कृत्वा प्रतिष्ठेत्पूर्वतोदिशम् ॥
गत्वा नगरसीमान्तं वास्तुपूजां समाचरेत् ।
संपूज्य चाथ दिक्पालान्पूजयेत्पथि देवताः ॥
मंत्रैर्वैदिकपौराणैः पूजयेच्च शमीतरुम् ।
अमङ्गलानां शमनीं शमनीं दुष्कृतस्य च ॥
दुःस्वप्नशमनीं धन्यां प्रपद्येऽहं शमीमुमाम् ।
तथा—शमी शमयते रोगान् शमी शमयते रिपून् ॥
शमी शमयते पापं शमी सर्वार्थसाधिनी ।
अर्जुनस्य धनुर्धारी रामस्य प्रियवादिनी ॥
लक्ष्मणप्राणदात्री च सीताशोकविनाशिनी ।

[३२७] इति शमीं संपूज्य ततः कृताशीः पूर्वस्यां दिशि विष्णुक्रमान् क्रमेत् ॥

रिपोः प्रतिकृतिं कृत्वा ध्यात्वा वामनसाम्यताम् ।
शरेण स्वर्णपुङ्खेन विध्येद्धृदयमर्मणि ॥
दिशां विजयमंत्राश्च पठितव्याः पुरोधसा ।
एवमेव विधिं कुर्याद्दक्षिणादि दिशास्वपि ॥

स्मृत्यन्तरे–वामदक्षिणपार्श्वेभ्यो गृह्णीयान्मृत्तिकां पुनः ।
अपराजिते नमस्तेऽस्तु वरदे कामपूजिते ॥
यात्रामहं करिष्यामि सिद्धिं सर्वत्र मे कुरु ।
पुरोहितं च संपूज्य पूजानीयाद्विजास्ततः ॥
जयमङ्गलशब्देन ततः स्वभवनं विशेत् ।
य एवं कुरुते राजा वर्षे वर्षे सुमङ्गलम् ॥
आयुरारोग्यमैश्वर्यं विजयं स च गच्छति ।

इति विजया दशमीनिर्णयः ॥

---

[३२८] अथ विजययात्राप्रसङ्गाच्छुक्राभिमुखी यात्रा निर्णीयते॥ शुक्राभिमुखं प्रयाणं न कुर्यात्॥ तदुक्तं विश्वरूपनिबन्धे॥
प्रतिशुक्रं प्रतिबुधं प्रत्यङ्गारकमेव च ।
ललाटगे दिगीशे वा न सीमां लङ्घयेद्बुधः ॥
शुक्रस्य त्रिविधा संमुखतेत्युक्तं ॥ रत्नमालायां–
उदयति दिशि यस्यां याति यत्र भ्रमाद्वा
विचरति च भचक्रे येषु दिग्वारभेषु ।
त्रिविधमिह सितस्य प्रोच्यते संमुखत्वं
मुनिभिरुदय एव त्यज्यते यत्र यत्नात् ॥

शुक्रो यस्यां दिशि उदेति । सूर्यवत्प्रहराष्टकेन दिगष्टकं भ्रमति ॥ एवं भ्रमाद्यस्यां याति च । कृत्तिकादयः सप्त पूर्वस्यां । मघाप्रभृति सप्त दक्षिणस्यां । अनुराधादि सप्त पश्चिमस्यां । धनिष्ठादि सप्तोत्तरस्यां । एतानि दिग्वारभाणि ॥ येषु दिङ्नक्षत्रेषु विचरति ॥ एवं त्रैविध्येऽपि संमुखत्वे मुनिभिरुदय

एव त्यज्यते ॥ प्रतिशुक्रगमने दोष उक्तो यथा ॥
स्वल्पोऽपि चार्थः प्रतिशुक्रयाने यियासतां सिद्धिमुपैति नूनम्।
कामं व्रजेद्वा प्रतिशुक्रमस्तं गतेषु यायान्न जिगीषुरत्र इति॥

एकग्रामादौ प्रतिशुक्रगमनेऽपि दोषाभावः ॥

३२९ तदुक्तं—एकग्रामे पुरे वा परिणयनविधौ धर्मतीर्थादियाने
दुर्भिक्षे चातिभीतौ न हि दनुजगुरुर्विद्यते संमुखोऽत्र।
वासिष्ठात्रेयवत्साङ्गिरसभृगुषु वा कश्यपाद्येषु वापि
भारद्वाजेषु वापि द्विजवरनिवहाः कीर्तयन्त्येवमाद्याः॥

आर्या ॥ स्वभवनपुरप्रवेशे देशानां विप्लवे तथोद्वाहे ।
न च वध्वा गृहगमने प्रतिशुक्रविचारणा नास्ति ॥

तथा—पौष्णादिवन्हिपादैकं यावत्तिष्ठति चन्द्रमाः ।
तावच्छुक्रो भवेदन्धः संमुखं गमनं शुभमिति ॥

बुधं प्रति कदापि न गच्छेत् ॥ तदाह श्रीपतिः—
एवं विधेऽप्यास्फुजिति प्रयायाद्बुधो यदि स्यादनुकूलवर्ती ।
प्रतीन्दुजं भूमिपतेर्गतस्य नान्ये ग्रहास्त्राणविधौ समर्थाः ॥

आस्फुजिच्छुक्रः। इन्दुजो बुधः । तथा बुधशुक्रौ प्रयाणे संमुखौ दक्षिणस्थौ च वर्ज्यौ ॥ ३३० तथा च लल्लः—

आर्या ॥ वारुण्यां दिश्युदिते शुक्रे पूर्वोत्तरे यायात् ।
प्राच्यां दिश्युदिते पुनरपरायाम्ये दिशौ यायात् ॥इति॥

तथा—पूर्वतोऽभ्युदिते शुक्रे प्रयायाद्दक्षिणोत्तरे ।
पश्चादभ्युदिते चैव यायात्पूर्वोत्तरे दिशीति वचनान्तरं॥

तथा तेनैव सर्वदा यात्रा प्रशस्तोक्ता कालविशेषे ॥
पूर्वाण्हे चोत्तरां गच्छेन्मध्यान्हे पूर्वतो व्रजेत् ।

अपराण्हे व्रजेद्याम्यां अर्धरात्रे तु पश्चिमाम् ॥
न तस्याङ्गारको विष्टिर्न शनैश्चरजं भयम् ।
व्यतीपातो न दुष्येच्च यस्यार्को दक्षिणस्थितः ॥

इति प्रतिशुक्रयात्रानिर्णयः

---

अथ गुर्वष्टमीव्रतमुक्तं॥

भविष्योत्तरे प्रेत उवाच–

मासि भाद्रपदे राजन् शुक्ले पक्षे यदाष्टमी ।
गुरुवारेण संपूर्णा सा तिथिर्धर्मवर्धिनी ॥
गुर्वष्टमीव्रतं कार्यं सर्वपापप्रणाशनम् ।
बुधाष्टमीसहस्रस्य व्रतेन फलमाप्नुयात् ॥
शाल्योदनं च भोक्तव्यं षष्टिकान्नमथापि वा ।
एकभक्तं प्रकर्तव्यं संपूज्य च बृहस्पतिम् ॥
कपिला गौः प्रदातव्या संपूर्णव्रतहेतवे ।
एतत्पवित्रं परमं प्रेतमोक्षप्रदायकमिति ॥

शेषो व्रतविधिर्व्रतखण्डादवगन्तव्यः ॥

इति गुर्वष्टमी ॥

---

[331] अथ भाद्रपदशुक्लाष्टम्यां ज्येष्ठानक्षत्रयुक्तायां ज्येष्ठां देवीं प्रपूजयेत् ॥ तदुक्तं

लिङ्गपुराणे–कन्यार्के याष्टमी शुक्ला ज्येष्ठर्क्षे महती स्मृता ।
अलक्ष्मीपरिहाराय ज्येष्ठां तत्र प्रपूजयेत् ॥

इति कन्यार्के भाद्रपदे ॥ कालादर्शेऽपि–

भाद्रे शुक्लाष्टमी ज्येष्ठानक्षत्रेण समन्विता ।
महती कीर्तिता तस्यां ज्येष्ठां देवीं प्रपूजयेत् ॥

तथा प्रतिवर्षं क्रियमाणं ज्येष्ठाव्रतं केवलनक्षत्र एवकार्यं॥ तदुक्तं मत्स्यपुराणे—प्रत्याब्दिकतिथावुक्तं यज्ज्येष्ठादैवतव्रतम्।
प्रतिज्येष्ठाव्रतं यच्च विहितं केवलोडुनि ॥

[332] अत्र विशेषः—
ज्येष्ठर्क्षेण तु संयुक्ता यदा भाद्रसिताष्टमी ।
ज्येष्ठां देवी प्रपूज्याथ दूर्वामभ्यर्चयेत्तदा ॥

पूजामंत्रः—ज्येष्ठाख्यायै नमो देव्यै ज्येष्ठता च यथा तव ।
तथा ममापि ज्येष्ठत्वं कुरु पूजां गृहाण मे ॥
अप्रशस्यं च यत्किंचिज्ज्येष्ठादेवि गृहे मम ।
प्रशस्यं कुरु तत्सर्वं लक्ष्मीं वर्धय मे गृहे ॥

इति ज्येष्ठा प्रशस्या ॥ कथं ॥ इष्ठप्रत्यये प्रशस्यस्य ज्य चेति प्रशस्य शब्दस्य ज्यादेशे सर्वा इमाः प्रशस्याः इयमासामतिशयेन प्रशस्येति ज्येष्ठा ॥ अथवा ज्य वृद्धस्य चेति वृद्धशब्दस्य ज्यादेशे इयमासामतिशयेन वृद्धा ज्येष्ठेति इष्ठप्रत्यये परे प्रकृत्यैकाजिति ज्याशब्दस्यैकाच्त्वात् टिलोपो न भवति यस्येति चेत्यकारलोपश्च न भवति ॥ [333] एवं ज्येष्ठा प्रशस्या देवी वृद्धा वा ॥ अतिशयेन प्रशस्याया वृद्धायाश्च ज्येष्ठायाः पूजनानुरोधेन ज्येष्ठर्क्षेऽपि क्रियमाणं दूर्वाव्रतं न दोषमावहतीत्याहुः ॥ अतो ज्येष्ठां च दूर्वां च संपूज्य व्रतमाचरेत् ॥ इति ॥ ज्येष्ठर्क्षे केवला दूर्वा न पूज्या ॥

इति ज्येष्ठाष्टमी ॥

## अथ दूर्वाष्टमी निर्णीयते ॥

सा शुक्लापि पूर्वविद्धा स्मृता ॥ तदुक्तं पुराणसमुच्चये—

शुक्लाष्टमी तिथिर्या तु मासि भाद्रपदे भवेत् ।
दूर्वाष्टमीति सा ज्ञेया पूर्वविद्धा बुधैः स्मृता ॥ इति ॥

विश्वरूपोऽपि—

चैत्राष्टमी माघसिताष्टमी च दूर्वाष्टमी चाश्विनजाष्टमीच ।
एताश्चतस्रः प्रथमेऽन्हि कुर्याद्वैशाखमासस्य तु या तृतीया ॥

इत्युक्तं प्राक् ॥ बृहद्यमोऽपि—

श्रावणी दुर्गनवमी दूर्वा चैव हुताशनी ।
पूर्वविद्धा प्रकर्तव्या शिवरात्रिर्बलेर्दिनमिति ॥

भाद्रपदाष्टम्यां दूर्वा पूज्येति स्कन्दपुराणे

[३३४] नभस्यव्यतिरेकेण अष्टमीं या तु पूजयेत् ।
ततोऽर्थो न भवेत्तस्याः काकवन्ध्या च जायते ॥

अतो भाद्रपदाष्टमी दूर्वेति ॥ तत्र दोषचतुष्टयसंभावना ॥

यथा—प्राप्ते भाद्रपदे मासि शुक्लाष्टम्यां च भारत ।
दूर्वामभ्यर्चयेद्भक्त्या ज्येष्ठां मूलं च वर्जयेत् ॥ इति ॥

ज्येष्ठायोगो मूलयोगश्चेति दोषद्वयं ॥

तथा ॥ सिंहस्थे चोत्तमा सूर्येऽनुदिते मुनिसत्तमे ।
दूर्वा तत्रैव कर्तव्या मम दोषो न दीयते ॥

इति देवकीवाक्यादगस्त्योदयस्तृतीयो दोषः ॥

[३३५] तथा ॥ शुक्ले भाद्रपदे मासि दूर्वासंज्ञा तथाष्टमी ।
सिंहस्थे सा च कर्तव्या न कन्यार्के कदाचनेति ॥

कन्यार्कश्चतुर्थो दोष इति दोषचतुष्टयं ॥ एतद्दोषवत्यां नि-न्दावाक्यानि ॥

स्मृत्यन्तरे—दूर्वाष्टमी सदा त्याज्या ज्येष्ठामूलर्क्षसंयुता ।
ज्येष्ठामूलयुता दूर्वा अपत्यानि निहन्ति सा ॥

स्कन्दपुराणे—अगस्त्य उदिते तात पूजयेदमृतोद्भवाम् ।
वैधव्यं पुत्रशोकं च दश जन्मानि पञ्च च ॥ इति ॥

तथा—कन्यागते सवितरि पूजयेदजरामराम् ।
विषकन्या भवेत्सा तु सप्तजन्मानि पञ्च च ॥

इति एवं भाद्रपदाष्टम्ये तद्दोषचतुष्टयमध्येऽन्यतमेन यु-क्ता तदा कथमिति ॥ तत्र पक्षद्वयेनोत्तरं ॥ [३३६] भाद्रपदे अ-गस्त्योदये श्रावणकृष्णाष्टम्यां कुर्यात् ॥

तदाह देवकी—श्रावणे कृष्णपक्षे तु पूजयेदमृतोद्भवाम् ।
अष्टवर्षकृतं पापं दहत्येकापि चाष्टमी ॥

अतएव दीपिकाकारः—
दूर्वाख्यं तनुयान्नभः स्थबहुलाष्टम्यामगस्त्योदये इति ॥

तथा—अधिमासे तु संप्राप्ते नभस्य उदये मुनेः ।
अर्वाक् दूर्वा प्रकर्त्तव्या तत्र दोषो न विद्यते ॥

नभस्ये भाद्रपदे मुनेरगस्त्योदये सति तस्मादर्वाक् श्राव-णे इत्यर्थः ॥ इत्येकः पक्षः । अथवा भाद्रेमास्येतद्दोषवत्याम-पि दूर्वामभ्यर्च्याग्निपक्वैनैकभक्तव्रतं कार्यं ॥

तदुक्तं पुराणान्तरे—
कर्तव्या चैकभक्तेन ज्येष्ठा मूलं यदा भवेत् ।
दूर्वामभ्यर्चयेद्भक्त्या न वन्ध्यं दिवसं नयेत् ॥ इति ॥

तथा–उद्यानिका शिवपवित्रकमेघपूजा

दूर्वाष्टमी फलविरूढकजागराणि ।

स्त्रीणां व्रतानि निखिलान्यपि वार्षिकाणि

कुर्यादगस्त्य उदये न शुभानि लिप्सुरिति ॥

लौगाक्षिणागस्त्य उदिते सति फलविरुढकादेर्निषेधदर्शना त् अग्निपक्कमभ्यनुज्ञातमितिगम्यते ॥ इति द्वितीयःपक्षः॥[३३७] एकभक्तस्यमध्यान्होत्तरकालीनत्वात्पूजामध्यान्हे कार्या दूर्वाया इति तदपूजने पुराणसमुच्चये दोष उक्तः ॥

न पूजयति या दूर्वां मोहादिह यथाविधि ।

त्रीणि जन्मानि वैधव्यं लभते नात्र संशयः ॥

तस्मात्संपूजनीया सा प्रतिवर्षं वधूजनैः ।

सुखसन्तानजननी भर्तुः सौख्यकरी तथेति ॥

प्रतिवर्षं दूर्वा अवश्यं पूज्येति ॥ एवं पूर्वोक्ते पक्षद्वये संभवत्यपि सदोषायां भाद्रगायामष्टम्यां निषेधवचनप्राबल्यात् श्रावणकृष्णाष्टमी श्रेयसीति ॥ तत्रव्रतपूजनासंभवे द्वितीयः पक्षो भाद्रगाष्टमीति युक्तं ॥ निर्दोषा चेद्भाद्रमासाष्टमीति सिद्धान्तः ॥ [३३८] अत्र विशेषः ॥

नागस्त्यदोषो न च कान्यदोषो ज्येष्ठा न दोषो न च मूलदोषः भाद्रे मृतार्थं खलु शुक्लपक्षे दूर्वाः प्रपूज्याः कथयन्ति सिद्धाः॥ तथा–मूले च शाक्रेऽप्युदिते मुनौ च कन्यागतेऽर्के करणे च विष्ट्यां दूर्वाष्टमी भाद्रपदे च शुक्ले न दोषमाहुर्मुनयो वदन्ति ॥

दूर्वा नभस्ये मुनिभिः प्रदिष्टा शुक्लाष्टमी सा नवमीयुता च ।

दूष्या न मूले न च शाक्रऋक्षे कन्योदयेऽर्के घटजोदयेऽपि ॥

इदं वचनद्वयं मृतदूर्वाविषयं ॥ यत्तु विकल्पेन परविद्धाविधानं ॥

मुहूर्ते रौहिणेऽष्टम्यां पूर्वा वा यदि वा परा ।
दूर्वाष्टमीति सा कार्या ज्येष्ठां मूलं च वर्जयेत् ॥ इति॥

एतदपि दिनद्वयव्यापित्वे परविद्धा वरा इत्येवं न ॥ किन्तु ज्येष्ठादिदोषयुक्ता पूर्वा त्याज्येत्येवंपरं ॥

३३८ यथा नीतिशास्त्रे—वरं हालाहलं पीतं सद्यः प्राणहरं विषम्
न तु दृष्टं धनाढ्यस्य भ्रूभङ्गकुटिलं मुखम् ॥

अत्र विषभक्षणं न विहितं। किन्तु धनाढ्यस्य कुपितस्य मुखावलोकनं प्रतिषिद्धम् ॥ तद्वत् पूर्वविद्धाविधानबलादेव परविद्धा निषिद्धेति। तथापि यदि वा परविद्धाभिधानं तद्दिनद्वये कर्मकालव्यापिनी चेत्तदा ज्येष्ठामूलयुक्तां पूर्वां परित्यज्य परविद्धापि कार्येति ज्ञापनार्थमिति रहस्यं ॥ ज्येष्ठान्वितायां तु ज्येष्ठापूर्वकं दूर्वाव्रतमुक्तं ज्येष्ठानिर्णये ॥

## इति दूर्वाष्टमी निर्णयः ॥

### अथ दूर्वाष्टमीव्रतविधिरादित्यपुराणात् ॥

शुक्लाष्टम्यां तु संप्राप्ते मासि भाद्रपदे तथा ।
दूर्वां व्रतानां सुश्वेतामुत्तराशाभिगामिनीम् ॥
पूजयेद्गृहमानीय गन्धमाल्यानुलेपनैः ।

पूजामंत्रः—त्वं दूर्वेऽमृतजन्मासि वन्दितासि सुरासुरैः ॥
सौभाग्यं सन्ततिं देहि सर्वकार्यकरी भव ।
यथा शाखाप्रशाखाभिर्विस्तृतासि महीतले ॥

तथा ममापि सन्तानं कुरु त्वमजरामरम् ।
फलमूलैः सनैवेद्यैर्धूपदीपैः समर्चयेत् ॥
अग्निपक्वं तथा सर्वं न निवेद्यं कथञ्चन ।
भोक्तव्यं च तथा ब्रह्मन्नग्निपक्वविवर्जितम् ॥

[३४१] तथा भविष्यत्पुराणे–

ततः संपूजयेद्विप्रान्फलैर्नानाविधैः शुभैः ।
अनग्निपक्वमश्नीयाद्घृतं दधि फलं तथा ॥
दद्यात्फलानि विप्रेषु फलाहारः स्वयं भवेत् ।
एवं पुण्या पापहरा अष्टमी दूर्वसंज्ञिता ॥
चतुर्णामपि वर्णानां स्त्रीजनानां विशेषतः ।

इति दूर्वाष्टमी निर्णयश्च ॥

---

तथा चैत्रासिताष्टम्यां क्षेत्रविशेषे धाराख्यदेवताविशेषपूजनादारोग्यतेष्टप्राप्तिश्च जायते ॥

तदुक्तं स्कान्दे नागरखण्डे–

हाटकेश्वरजे क्षेत्रे शङ्खतीर्थ समीपतः ।
धारानामेति विख्याता शक्तिर्लोकसुखप्रदा ॥

तां प्रति वसिष्ठः–

चैत्रे मासे सिते पक्षे अष्टमीदिवसे स्थिता ।
ये ये पूजां करिष्यन्ति श्रद्धया परया युताः ॥
ते सर्वे वत्सरं यावद्भविष्यन्ति निरामयाः ।
तस्मादत्रैव स्थातव्यं सदैव मम वाक्यत इति ॥

तथा--अरुन्धत्या स्वयं कृतेन स्तोत्रेण स्तुत्वा तां प्रत्युक्तं ॥

स्तोत्रेणानेन भवतीं स्तुत्वा च कुरुते नतिम् ।
वन्ध्यापि या भवेन्नारी संभूयात्पुत्रसंयुता ॥

भवत्विति प्रार्थना ॥ [३४२] ततोऽरुन्धतीं प्रत्युवाच धारेति

अत्र यो नागरो भक्त्या समागत्य तपस्विनि ।
प्रदक्षिणात्रयं कृत्वा दत्वा मम फलत्रयम् ॥
सोऽपि संवत्सरं यावद्भविता रोगवर्जितः ॥ इति ॥

तथा— या नारी दुर्भगा वन्ध्या सापि पुत्रवती भवेत् ।
चैत्रे मासि सिताष्टम्यां भक्तियोगसमन्वितेति ॥

स्तोत्रं तु स्कान्दे नागरखण्डे धारामाहात्म्ये ॥

नमस्ते परमे ब्राह्मि धारयोगे नमोनमः ।
अर्धमात्रे परे शून्ये तस्यार्धार्धे नमोऽस्तु ते ॥ १ ॥
नमस्ते जगदाधारे नमस्ते भूतधारिणि ।
नमस्ते पद्मपत्राक्षि नमस्ते काञ्चनद्युते ॥ २ ॥
नमस्ते सिंहयानाद्ये नमस्तेऽस्तु महाभुजे ।
नमस्ते देवताभीष्टे नमस्ते दैत्यसूदनि ॥ ३ ॥
नमस्ते महिषाक्रान्ते शरीराच्छिन्नमस्तके ।
नमस्ते विन्ध्यनिरते सुरामांसबलिप्रिये ॥ ४ ॥
त्वं लक्ष्मीस्त्वं शची गौरी त्वं सिद्धिस्त्वं विभावरी ।
त्वं स्वाहा त्वं स्वधा तुष्टिस्त्वं पुष्टिस्त्वं सुरेश्वरी ॥५॥
शक्तिरूपासि देवि त्वं सृष्टिसंहारकारिणी ।
त्वयि दृष्टमिदं सर्वं त्रैलोक्यं सचराचरम् ॥ ६ ॥
यथा तिले स्थितं तैलं दधिसंस्थं यथा घृतम् ।

हविर्भुक् चैव काष्ठस्थः सुगुप्तं लक्ष्यते न हि ॥ ७ ॥
तथा त्वमपि देवेशि सर्वगापि न लक्ष्यसे । इति स्तोत्रं ॥
स्नात्वा तत्र तु यो देवीं पश्येच्च विधिना नरः ।
धनधान्यांस्तथा पुत्रान्राज्योत्थं सकलं सुखम् ॥ ८ ॥
या नारी दुर्भगा वन्ध्या सापि पुत्रवती भवेत् ।
चैत्रे मासि सिताष्टम्यां भक्तियोगसमन्विता ॥ ९ ॥
महानिशायां तत्रैव नैवेद्यबलिपिण्डिकाम् ।
प्रसन्नया कुमार्या तु स्वयं वाथ करोति या ॥ १० ॥
गृण्हाति या च वै नारी पिण्डिकां बलिसंयुताम् ।
शतवर्षा तु या नारी पिण्डिकां भक्षयेद्द्विजाः ॥ ११ ॥
सापि पुत्रवती च स्याद्यदि वृद्धतमा भवेत् ।
किं पुनर्यौवनोपेता सौभाग्येन समन्विता ॥ १२ ॥
पुत्रसौख्यवती नारी देव्या वै दर्शनेन च ।
सर्वेषां नागराणां तु भावजा देवता स्मृता ॥ इति ॥
चैत्राष्टम्यां देवीविशेषपूजाविधिः ॥

---

## [१४३] अथ जन्माष्टमी निर्णीयते ॥

श्रावणकृष्णाष्टमी कृष्णजन्माष्टमी । तत्रोपवासेन पापक्षयो जायते इत्युक्तं भविष्योत्तरे श्रीकृष्णेन

मासि भाद्रपदेऽष्टम्यां निशीथे कृष्णपक्षजे ।
शशाङ्के वृषराशिस्थे ऋक्षे रोहिणि संज्ञिते ॥
योगेऽस्मिन्वसुदेवाद्धि देवकीमामजीजनत् ।
उपवासं तु यः कुर्यात्तस्मिन्जन्मदिने मम ॥

सप्तजन्मकृतात्पापान्मुच्यते नात्र संशयः ।
भाद्रपद इति कृष्णप्रतिपदादिमासाभिप्रायेण ॥
तथा चोक्तं विष्णुरहस्ये—
प्राजापत्यर्क्षसंयुक्ता कृष्णा नभसि चाष्टमी ।
मुहूर्तमपि लभ्येत सैवोपोष्या महाफला ॥
मुहूर्तं मध्यरात्रव्यापिनी ॥ इयांस्तु रोहिणीयुक्तायां विशेषः ॥ यत्फलातिशयजनकत्वं महाफला इति वचनात् ॥
जयन्तीशब्दवाच्यत्वं च विशेषः ॥
अर्धरात्रादधः सा हि कलया वा यदा भवेत् ।
जयन्ती नाम सा प्रोक्ता सर्वपापप्रणाशिनी ॥
अन्यच्च सनत्कुमारेणोक्तं—
शृणुष्वावहितो राजन्कथ्यमानं मया तव ।
श्रावणस्य तु मासस्य कृष्णाष्टम्यां नराधिप ॥
रोहिणी यदि लभ्येत जयन्ती नाम सा तिथिरिति ।
अत्र यदीत्युच्चारणाद्रोहिणीयोगः संभवाभिप्राय इति॥
योगे अयोगे वोभयत्रोपवासाकरणे प्रत्यवायश्रवणात् ॥
यथा ॥ न करोति यदा विष्णोर्जयन्तीसंभवव्रतम् ।
यमस्य वशमापन्नः सहते नारकीं व्यथाम् ॥
[३४४] तथा—गृध्रमांसं खरं काकं श्येनं वा मुनिसत्तम ।
मांसं च द्विपदां भुङ्क्ते कृष्णजन्माष्टमीदिने ॥
अतीतानागतं तेन कुलमेकोत्तरं शतम् ।
पातितं नरके घोरे यो भुङ्क्ते कृष्णवासरे ॥
श्रावणे बहुले पक्षे कृष्णजन्माष्टमीव्रतम् ।

न करोति नरो यस्तु भवति क्रूरराक्षसः ॥

इत्यादि भोजननिन्दावाक्यैर्जन्माष्टम्यामुपवासव्रतं स्तूयते ॥ यथा ॥ अपशवो वा अन्ये गोऽश्वेभ्यः प्रशवो गोऽश्वा इति ॥ उक्तं च भाष्यकारेण ॥ न हि निन्दा निन्द्यं निन्दितुं प्रवर्तते अपि च निन्द्यादन्यत्स्तोतुं ॥ अतस्तत्र उपवासः प्रशस्त इति ॥ पुराणे—

तुष्ट्यर्थं देवकीसूनोर्जयन्ती संभवव्रतम् ।
कर्तव्यं वित्तमानेन भक्त्या भक्तजनैरपि ॥
अकुर्वन्याति नरकं यावदिन्द्राश्चतुर्दशेति ॥

[३४५] तथा विष्णुरहस्ये—

प्राजापत्यर्क्ष संयुक्ता कृष्णा नभसि चाष्टमी ।
वर्षे वर्षे प्रकर्तव्या तुष्ट्यर्थं चक्रपाणिनः ॥

इत्यादिवाक्यजातं तुष्ट्यर्थं चक्रपाणिन इति तुष्टिलक्षणे फले एव व्रतं विधत्ते ॥ तेन काम्यत्वे सत्यपि वर्षे वर्षे इतिवीप्सायुक्तत्वाद्वसन्ते वसन्ते ज्योतिषा यजेत ॥ संवत्सरे संवत्सरे सोमयाजीतिवन्नित्यत्वमपि ॥ काम्यत्वेऽपि नित्यत्वमेकादशीवदविरुद्धं ॥ व्रताकरणे नरकपातादिदोषदर्शनात् ॥ शुद्धविद्धोभयपक्षेऽप्युपोष्येति तदर्थं निर्णेतव्येति ॥ अथ श्रावणकृष्णाष्टमी शुद्धविद्धान्यूनाधिकादिभेदभिन्नापि मध्यरात्रव्यापिनी व्रते ग्राह्येति

[३४६] तदुक्तं विष्णुधर्मोत्तरे—

रोहिणीसहिता कृष्णा श्रावणे मासि चाष्टमी ।
सप्तम्यामर्धरात्राधः कलयापि यदा भवेत् ॥

तत्र जातो जगन्नाथः कौस्तुभी हरिरव्ययः ।
तमेवोपवसेत्कालं कुर्यात्तत्र च जागरम् ॥
अर्धरात्रे तु योगोयं तारापत्युदये सति ।
नियतात्मा शुचिः स्नातः पूजां तत्र प्रवर्तयेदिति ॥

वन्हिपुराणे—सप्तमीसंयुताष्टम्यां निशीथे रोहिणी यदि ।
भविता सप्तमी पुण्या यावच्चन्द्रदिवाकराविति ॥

यदि रोहिणीत्यतीव प्रशस्ता ॥ अथाष्टम्याः निशीथव्यापिनीग्रहणेऽपि यदा पुनरर्धरात्रे रोहिणीयोगः ॥ पूर्वस्मिन्परस्मिन्वा दिने तदा व्रतं कार्यं ॥

तदुक्तमनन्तभट्टेन—
अर्धरात्रे तु रोहिण्यां यदा कृष्णाष्टमी भवेत् ।
तस्यामभ्यर्चनं शौरेर्हन्ति पापं त्रिजन्मजं ॥
सोपवासो हरेः पूजां तत्र कृत्वा न सीदति ।
एतेनार्धरात्रादधः पतितायामष्टम्यामुपवास इत्युक्तं ॥

[२४७] ननु—कार्या विद्धापि सप्तम्या रोहिणीसहिताष्टमी ।
तत्रोपवासं कुर्वीत तिथिभान्ते च पारणम् ॥ इति ॥

अनेन ब्रह्मवैवर्त्तवचनेन सप्तमीविद्धायां रोहिणीसहितायामष्टम्यामुपवासं विधाय द्वितीयदिने तिथिभान्ते पारणं विधीयते॥ पारणं हि पारयतेर्ल्युडन्तं ॥अभोजनसंकल्पात्मकस्य उपवासस्य समापनं भोजनं तेन द्वितीयेऽहन्युपवासो निरस्तः॥ रात्रौ भोजननिषिद्धे काले तिथिभान्तो यदा तदा रात्रौ पारणं स्यात्तच्च निषिद्धं गरुडपुराणे ॥
अन्यतिथ्यागमो रात्रौ तामसस्तैजसोऽपिवा ।

तामसे पारणं कुर्वन् तामसीं गतिमाप्नुयात् ॥ इति ॥
अत्रोत्तरं–जयन्त्यां पूर्वविद्धायामुपवासं समाचरेत् ।
तिथ्यन्ते वोत्सवान्ते वा व्रती कुर्वीत पारणम् ॥
तथा स्मृत्यन्तरे–तिथ्यर्क्षयोर्यदा त्वन्तो नक्षत्रान्तमथापिवा ।
अर्धरात्रेऽथवा कुर्यात् पारणं त्वपरेऽहनि ॥
तिथिनक्षत्रयोरन्ते पारणं ॥ अथवा नक्षत्रान्ते। द्वयो-रवसानं यदि अर्धरात्रे भोजननिषिद्धे काले तदा दिवस एव पारणं कुर्यादित्यर्थः ॥

[३४८] तदुक्तं ब्रह्मवैवर्त्ते–सर्वेष्वेवोपवासेषु दिवापारणमिष्यते ।
अन्यथा पुण्यहानिः स्यादन्ते धारण पारणम् ॥
तिथिनक्षत्रयोरेकविगमे पारणं कुर्यात् ॥
तदुक्तं व्रतखण्डे–रौहिणीसहिता चेयं विद्वद्भिः समुपोषिता ।
वियोगे पारणं चक्रुर्मुनयो ब्रह्मचारिणः ॥
तथा तत्रैव–संयोगिके व्रते प्राप्ते यत्रैकोऽपि वियुज्यते ।
तत्रैव पारणं कुर्यादेवं वेदविदो विदुः ॥
भान्ते कुर्यात्तिथेर्वापि शश्वत् भारत पारणमिति ।
तथा अनन्तभट्टोदाहृतं–
याः काश्चित्तिथयः प्रोक्ताः पुण्या नक्षत्रयोगतः ।
ऋक्षान्ते पारणं कुर्याद्विनाश्रवणरोहिणीमिति ॥
अत्र तिथिभान्ते च पारणं यदुच्यते तत्संभवाभिप्रायं॥ अतश्च यदा भोजननिषिद्धे काले तिथिभान्तो भवति तदा उत्सवान्ते पारणमिति ॥ [३४९] पूर्वदिने मध्यान्हरात्रव्यापनी अथ यदा तिथिनक्षत्रवृद्ध्या दिनद्वयेऽप्यर्धसंयोगः तदा पर-

दिने जयन्तीव्रतं ॥ तदुक्तं पुराणसमुच्चये—

अष्टम्यां रोहिणीयोगो मध्यरात्रे दिनद्वये ।

तद्युत्तरैव कर्तव्या न पूर्वेत्येष निर्णयः ॥

तथा—अर्धरात्रे तु योगोऽयं रोहिण्या भवति क्वचित् ।

तामेवोपवसेन्नान्यामर्धरात्रोपयोगतः ॥

परदिने मध्यरात्रयोगिनी यदा ॥

तदा—वर्जनीया प्रयत्नेन सप्तमी संयुताष्टमी ।

सऋक्षापि न कर्तव्या सप्तमीसंयुताष्टमी ॥

इत्यादिवचनेन पूर्वस्याः सप्तमीविद्धायाः निषेधात् ॥ एवं दिनद्वये मध्यरात्रव्यापिनी परा एव ॥ [३५०] अथ यदा त्वन्तातिथिनक्षत्रह्रासे दिनद्वयेऽपि मध्यरात्राव्यापिनी सा यद्यपि हिंसा स्यात्पूर्वकालिकीत्यनेन पूर्वदिने भवेत् ॥ तथापि मुहूर्तमात्रेणाप्यहोरात्रविद्यमानसंबन्धेनोपवासे प्रशस्तोक्ता ॥ विष्णु रहस्ये—मुहूर्तमप्यहोरात्रे यस्मिन्युक्तं तु लभ्यते ॥

अष्टम्यां रोहिणीऋक्षं तां सुपुण्यामुपावसेत् ।

इति द्वितीया युक्ता ॥ अथ सा यदि रोहिणीरहिता शुद्धाधिका तदा संपूर्णायामुपोष्य द्वितीयेऽन्हि तिथ्यन्ते पारणं कार्यमिति सर्वसंमतं ॥ अथ उदयानन्तरं कियन्मात्रापि अष्टमी तत्संयुक्ता निशीथपर्यन्तं रोहिणी उपरि सकला नवमी बुधवारे सोमवारे वा भवति तदाष्टमी स्वल्पाप्युपोष्या ॥ न पूर्वा ॥

[३५१] तदुक्तं स्कन्दपुराणे—

उदये चाष्टमी किञ्चिन्नवमी सकला यदि ।

बुधवारेण संयुक्ता प्राजापत्यर्क्षसंयुता ॥
आपि वर्षशतेनापि लभ्यते वा न वा विभो ।
मुहूर्तेनापि संयुक्ता संपूर्णा साष्टमी भवेत् ॥
किं पुनर्नवमीयुक्ता कुलकोट्यास्तु मुक्तिदा ।

तथा विष्णुधर्मे—तिथिनक्षत्रयोरत्र योगश्चैव नराधिप ॥
द्विकलो यदि लभ्येत स ज्ञेयो ह्यष्टयामिकः ।

पद्मपुराणे—प्रेतयोनिं गतानां तु प्रेतत्वं नाशितं नरैः ॥
यैः कृता श्रावणे मासि अष्टमी रोहिणीयुता ।
किं पुनर्बुधवारेण सोमेनापि विशेषतः ॥
किं पुनर्नवमीयुक्ता कुलकोट्यास्तु मुक्तिदेति ।

बुधवारादियोगः प्रायिकः ॥
जयन्ती बुधवारेण सोमवारेण वा पुनः ।
लभ्यते दैवयोगेन तामुपोष्य महाफलम् ॥

[३५२] अथ जन्माष्टमी सामान्येन हीनाधिका वापि पूर्वतिथ्यान्विता उपवासे ग्राह्या ॥

तदुक्तमनन्तभट्टेन—
जयन्ती शिवरात्रिश्च कार्ये भद्राजयान्विते ।
कृत्वोपवासं तिथ्यन्ते तदा कुर्यात्तु पारणम् ॥

भद्रा सप्तमी । जया त्रयोदशी ॥

तथा स्कन्दपुराणे—कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रिश्चतुर्दशी ।
एताःपूर्वयुताः कार्या तिथ्यन्ते पारणं भवेत् ॥

अथ सा रोहिणीसहिता चेत्तदा—
जन्माष्टमी रोहिणी च शिवरात्रिस्तथैव च ।

पूर्वविद्धैव कर्त्तव्या तिथिभान्ते च पारणम् ॥

यदि रात्रौ तिथिभान्तः स्यात्तदा उत्सवान्ते प्रातः पारणमित्युक्तं प्राक् ॥ यच्च

सप्तमीसंयुताष्टम्यां कृत्वा ऋक्षं द्विजोत्तम ।
प्राजापत्यं द्वितीयेऽन्हि मुहूर्तार्धं भवेद्यदि ॥
तदाष्टयामिकं ज्ञेयं प्रोक्तं व्यासादिभिः पुरा ।

तन्नोपवासार्थे उपवासशब्दाश्रवणात् ॥ किन्तु द्वितीयदिने अष्टमीरोहिण्यतिक्रम्यापि पारणाङ्गत्वेन क्रियमाणं ब्राह्मणभोजनादिकं सकलत्वाभिधानेनाष्टमीरोहिण्योरेव कृतं भवतीति महाफलत्वमुपवासवज्ज्ञापयति ॥

## इति जन्माष्टमीनिर्णयः ॥

---

३५३ अथ इयं मन्वादिः ॥ तदुक्तं ॥

श्रावणस्याष्टमी कृष्णा तथाऽषाढी च पूर्णिमा ॥

तथा ॥ मन्वादौ च युगादौ च दत्तमक्षयतामियात् ॥
तथा ॥ अष्टम्यांदिवा भोजनं न कुर्यात् ॥ तदुक्तं ॥

भूताष्टम्यां दिवा भूक्त्वा रात्रौ भुक्त्वार्कपर्वणि ।
एकादश्यां दिवारात्रौ भुक्त्वा चान्द्रायणं चरेत् ॥

अथ भाद्रपदकृष्णाष्टमी महालक्ष्म्यष्टमी तत्र लक्ष्मीव्रतं कुर्यात् ॥ तदुक्तं ॥

अष्टमी पुष्यसंयोगे कृष्णा भाद्रपदे तु या ।
तत्र लक्ष्मीव्रतं कार्यं यावद्वर्षाणि षोडशेति ॥

पुष्यसंयोगः संभवाभिप्रायः ॥ कन्यासंक्रान्तेरुत्तरभाग-

गते सूर्ये व्रतप्रारंभं उद्यापनं समाप्तिं च न कुर्यात् ॥ तदुक्तं ब्रह्माण्डपुराणे—

श्रियोऽर्चनं भाद्रपदेऽसिताष्टमीं प्रारभ्य कन्यार्धगते न सूर्ये ।
समापयेत्तत्र तिथौ च यावत्सूर्यस्तु पूर्वार्धगतो युवत्याः ॥

युवत्याः कन्यायाः । अस्मिन्व्रतेऽष्टमी चन्द्रोदयव्यापिनी ग्राह्या ॥ [३५४]तथा च ॥

अर्धरात्रमतिक्रम्य वर्तते योत्तरा तिथिः ।
तस्यां तदा तिथौ कार्यं महालक्ष्मीव्रतं शुभम् ॥

चन्द्रोदयादूर्ध्वं त्रिमुहूर्त्तव्यापिन्यष्टमी चेत्परा नवमी विद्धा न चेत्पूर्वा ॥ तदुक्तं ॥

पूर्वा वा परविद्धा वा ग्राह्या चन्द्रोदये शुभा ।
त्रिमुहूर्त्तव्यापिनी पूज्या परतश्चोर्ध्वगामिनी ॥ इति ॥

तथा—पूजनीया गृहस्थेन अष्टमी प्रावृषी श्रियः ।
दोषैश्चतुर्भिः संत्यक्ता सर्वसंपत्करी तिथिरिति ॥

दोषचतुष्टयं तु नवमीवेधः १ ॥ रवेःकन्यासंक्रांत्युत्तरार्धगतत्वं २ ॥ त्रिदिनं ३ ॥ अवमदिनं चेति ४ ॥ एतद्दोषवर्जनं व्रतप्रारंभोद्यापनयोर्वेदितव्यं । प्रतिवर्षं परित्यक्तुमशक्यत्वात् ॥ यच्च

पुत्रसौभाग्यराज्यायुर्नाशिनी सा प्रकीर्तिता ।
तस्मात्सर्वप्रयत्नेन त्याज्या कन्यागते रवौ ॥

तदपि प्रारंभविषयं ॥ कन्यागते रवाविति कन्योत्तरार्धगत इति ॥ यतः हस्तोत्तरगते सूर्ये तद्व्रतं न समाचरेत् इति वचनात् ॥

[३५५] पुत्रहा नवमीविद्धा स्वघ्नी हस्तार्धगे रवौ ।
धर्मघ्नी त्रिदिने प्रोक्ता त्याज्या चैवावमेऽपि सा ॥

एतदपि प्रारंभोद्यापनविषयं ॥ संभवाभिप्रायं वा ॥ स्वं द्रव्यं हन्तीति स्वघ्नी ॥

यत्रैकः स्पृशति तिथिद्वयावसानं
वारश्चेदवमदिनं तदुक्तमार्यैः ।
यत्स्पर्शाद्भवति तिथिद्वयस्य चान्हा
त्रिद्युस्पृक्कथितमिदं द्वयं च नेष्टम् ॥ इति ॥

त्रिदिनावमदिनयोर्लक्षणं ज्योतिःशास्त्रादिति ॥

इतिमहालक्ष्म्यष्टमीनिर्णयः ॥

---

कृतेऽचलद्विवेदेन ग्रन्थे निर्णयदीपके ।
विजयाख्यदशम्यास्तु जातोऽष्टम्या विनिर्णयः ॥

इत्यष्टमीनिर्णयः विजयादशमीनिर्णयश्च ॥

---

[३५६] अथ नवमी निर्णीयते ॥

नवमी तिथिरुपवासादिव्रते पूर्वविद्धा ग्राह्या॥ वसुकरन्ध्रयोरिति युग्मवाक्याभिधानात् ॥

यदाह ब्रह्मवैवर्ते—

अष्टम्या नवमी विद्धा कर्तव्या फलकांक्षिभिः ।
न कुर्यान्नवमीं तात दशम्या तु कदाचनेति ॥

पैठीनसिरपि—पञ्चमी सप्तमी चैव दशमी च त्रयोदशी ।

प्रतिपन्नवमी चैव कर्तव्या संमुखा तिथिः ॥
संमुखा सायान्हव्यापिनी पूर्वविद्धेति यावत् ॥
पद्मपुराणे—अष्टमी नवमीयुक्ता नवमी चाष्टमीयुता ।
अष्टमीनवमीयुग्मे महोत्साहे महोत्सवः ॥ इति ॥
तथा—नवमी दशमी चैव नोपोष्या परसंयुता ।
इत्यादि वचनेभ्यो नवम्यष्टमीविद्धा उपवासव्रते ग्राह्येति सिद्धं ॥ नक्तैकभक्तादिव्रते तत्तद्व्रतकालव्यापिनी गृह्यते ॥
कर्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः ।
इति वचनात् ॥

## इति नवमी सामान्य निर्णयः

---

## [३५७] अथ नवमी विशेषः ॥

अथ भगवतो विष्णोः सप्तमावतारस्य दशरथात्मजस्य श्रीरामस्य जन्मनवमी निर्णीयते ॥ चैत्रशुक्लनवम्यां श्रीरामजन्म ॥ तत्रोपवासव्रते महाफलमुक्तं ॥
अगस्त्यसंहितायाम्—

चैत्रमासे नवम्यां तु शुक्लपक्षे रघूत्तमः ।
प्रादुरासीत्पुरा ब्रह्मन् परब्रह्मैव केवलम् ॥
तस्मिन्दिने तु कर्तव्यमुपवासव्रतं सदा ।
नित्यमेव भवेत्तस्माच्छ्रीरामनवमीव्रतम् ॥
सूर्यग्रहे कुरुक्षेत्रे महादानैः कृतैर्बहु ।
यत्फलं समवाप्नोति श्रीरामनवमीव्रतात् ॥

तथा–प्राप्ते श्रीरामनवमीदिने मर्त्यो विमूढधीः ।

उपोषणं न कुरुते कुंभीपाकेषु पच्यते ॥

यस्तु रामनवम्यां तु भुङ्क्ते मर्त्यो विमूढधीः ।

कुंभीपाकेषु घोरेषु पच्यते नात्र संशयः ॥ इति ॥

अतोऽकरणे दोषदर्शनात् उपवासव्रताचरणे ब्रह्मप्राप्तिः स्यात् ॥

[३५८] तदुक्तं–तस्मात्सर्वात्मना सर्वे कृत्वैव नवमीव्रतम् ।

मुच्यन्ते सर्वपापेभ्यो यान्ति ब्रह्म सनातनम् ॥ इति ॥

तथा रामार्चनचन्द्रिका–

मेषे पूषणि संप्राप्ते लग्ने कर्कटकाऽह्वये ।

आविरासीत्स कलया कौशल्यायाः परः पुमान् ॥

चैत्रे शुक्ला तु नवमी पुनर्वसुयुता यदि ।

सा वै मध्यान्हयोगेन महापुण्यतमा भवेत् ॥

तथा–पुनर्वस्वृक्षसंयोगे स्वल्पापि यदि लभ्यते ।

सा महाफलदा प्रोक्ता पुनर्वस्वृक्षयोगतः ॥

पुनर्वसुनक्षत्राभावेऽपि नवम्येवोपोष्येत्युक्तं ॥

रामार्चने–केवलापि सदोपोष्या नवमी शब्दसंग्रहात् ।

तस्मात्सर्वात्मना सर्वैः कर्तव्यं नवमीव्रतमिति ॥

तथा–उपोषणं नवम्यां वै दशम्यामेव पारणम् ।

एतैर्वाक्यैर्नवम्यामुपवासव्रतस्यावश्यं कर्त्तव्यत्वात्तदर्थं निर्णीयते ॥ [३५९] सा द्विविधा शुद्धा विद्धेति ॥ शुद्धा समान्यून्याधिका चेति त्रिधा ॥ सा प्रत्येकं पुनर्वसुयोगायोगभेदेन षोढा ॥ विद्धा तु पूर्वविद्धा परविद्धाभेदेनैव द्वादशधा ॥

अथ यदा शुद्धाधिका तदा संपूर्णायामुपोष्य द्वितीयेऽहनि तिथिभान्ते पारणं कार्यमिति सर्वसंमतं॥ अथ विद्धाभेदेष्वपि॥

रामो लग्ने कर्कटे प्रादुरासीत् ।

तथा सैव मध्यान्हयोगेनेत्यादिभ्यो मध्यान्हयोगान्विता ग्राह्येति सिद्धं ॥ अतो मध्यान्हानुरोधेन रामजन्मनवमी निर्णयः॥ निशीथानुरोधेन कृष्णजन्माष्टमीवदिति ॥

[३५०] यदाह—प्रादुरासीत्स मध्यान्हे रामो दाशरथिस्तथा ।

निशीथे देवकीसूनुः कालेऽस्मिन्पूजनं तथेति ॥

तस्मात्पूर्वदिने परदिने वा या मध्यान्हयोगान्विता सा उपवासव्रते ग्राह्या ॥ तथा च रामोत्सवे—

चैत्रस्य शुक्लपक्षे तु मध्यान्हे नवमीदिने ।

पुनर्वस्वृक्षयोगेन जातो रामः स्वयं हरिः ॥

तत्र संपूजनं विष्णोः सर्वकिल्विषनाशनमिति ॥

यथा तिथिवृद्ध्या दिनद्वये मध्यान्हयोगः तदापरविद्धोपोष्या परदिने रामनवमीव्रतमिति ॥ [३५१] ननु परविद्धाग्रहणे विषम उपन्यासः ॥

अष्टम्या नवमी विद्धा कर्तव्या फलकांक्षिभिः ।

न कुर्यान्नवमीं तात दशम्या तु कदाचन ॥

तथा ॥ वसुरन्ध्रयोरित्यादिब्रह्मवैवर्तनिगमादिवाक्यैर्नवम्याः पूर्वविद्धाभिधानात् ॥ सत्यं ॥ विद्धानिषेधश्रवणात् नवमीचेतिवाक्यतः ॥

नवमी चाष्टमीविद्धा त्याज्या विष्णुपरायणैः ॥ इति॥ अगस्त्योक्तेन वैष्णवव्रतविषयविशेषवचनेनाष्टमीविद्धा

निषेधानुवादपुरःसरं परविद्धाप्रतिपादनादवैषम्यं ॥ सामान्य विशेषन्यायेन ॥ एतेनैतदप्यपास्तं

द्वितीया पञ्चमी वेधाद्दशमी च त्रयोदशी ।
चतुर्दशी चोपवासे हन्युः पूर्वोत्तरांतिथिमिति ॥

दशमी स्ववेधात्पूर्वां नवमीं उत्तरां एकादशीं हन्तीति व्याख्या ॥ अथात्यन्ततिथिक्षयवशात् दिनद्वयेऽपि मध्यान्हयोगाभावः ॥ तदा नवमी चाष्टमीविद्धा त्याज्येत्यस्य मध्यान्हव्याप्तिविषये सावकाशात् ॥

तिथ्यादौ तु भवेद्यावान्ह्रासो वृद्धिः परेऽहनि ।
तावान्ग्राह्यः स पूर्वेद्युरदृष्टोऽपि स्वकर्मणि ॥

इत्यनेन पूर्वविद्धोपोष्या ॥ अथ तिथिवृद्धौ परा ग्राह्या न पूर्वविद्धा ॥

तदुक्तं कुंभोद्भवेन—दशम्यादिषु वृद्धिश्चेद्विद्धात्याज्यैव वैष्णवैः
तदन्यथा तु सर्वेषां व्रतं तत्रैव निश्चितमिति ॥
पुनर्वस्वृक्षसंयोगे स्वल्पापि यदि लभ्यते ।
सा महाफलदा प्रोक्ता ॥

इति सर्वेषु पक्षेषु एतद्योगेन फलविशेषो ज्ञातव्य इति ॥ [३५३] अथ नवम्याः पुनर्वसुयोगयुक्तोपवासे जन्माष्टमीनिर्णयोक्तः पारणानिर्णयोऽत्रापि ज्ञातव्यः ॥ तत्र

याः काश्चित्तिथयः प्रोक्ताः पुण्या नक्षत्रयोगतः ।
ऋक्षान्ते पारणं कुर्याद्विना श्रवणरोहिणीमिति ॥
श्रवणरोहिण्योर्मध्ये पारणं विहितं ॥ अत्र नक्षत्रान्ते

पारणमिति विशेषः ॥ पारणे दशमीं नैव लङ्घयेदित्युक्तं अगस्त्येन—दशम्यामेवशब्देन दशमीं नैव लङ्घयेत् ।
निश्चित्यैवं विचारेण नवमीव्रतमाचरेत् ॥

इति रामनवमीनिर्णयः ॥

---

## अथाश्विनशुक्लनवमी मन्वादिः ॥

तदुक्तं ॥ अश्वयुक्शुक्लनवमी द्वादशी कार्तिके सितेत्यादि
मन्वन्तरादयश्चैते दत्तस्याक्षय्यकारकाः ॥ इति ॥
आश्विनशुक्लनवम्युत्सवस्तुनिरूपितो महाष्टमी निर्णये ॥

---

## [३६४]अथ कार्तिकशुक्लनवमी युगादि : ॥

तदुक्तं स्मृतौ—शुक्ला तृतीया वैशाखे पितृपक्षे त्रयोदशी ।
कार्तिके नवमी शुक्ला माघे दर्शो युगादयः ॥
एता युगादयः प्रोक्ता दत्तस्याक्षय्यकारकाः ॥ इति ॥
युगादिनिर्णयोऽक्षय्यतृतीयानिर्णयात्ज्ञेयः ॥ अथ तद्व्रतो विशेषो निरूप्यते ॥ अथ कार्तिकशुक्लनवमी अक्षयनवमी ॥ तत्राश्वत्थमूले तर्पणं कुर्यात् ॥ तत्र विधिः॥ त्रीन् कुंभान् जलपूर्णान् विष्णुमूर्तिं च स्थापयित्वा तर्पणप्रारंभे प्रयोगविधिना विष्णुं संपूज्य तर्पणं कार्यं ॥ तथा चोक्तं श्रीकृष्णेन युधिष्ठिरं प्रति ॥

विष्णुरुवाच—बोधिमूले स्थितो विष्णुः कुरुते वीक्षणं नृप ।
कला भगवतो भूत्वा कार्तिके नवमीदिने ॥

कृत्वा योगीश्वरीं मूर्तिं मामकीं हेमसंभवाम् ।
पूजयिष्यति पुण्यात्मा पितृणां मुक्तिहेतवे ॥
स्नानं विलेपनं कृत्वा दत्वा वस्त्रं सुशोभनम् ।
आचार्योक्तैः शुभैर्मंत्रैः पूजा कार्या विधानतः ॥

३५५ अथ पूजामंत्रः—

योगीश्वराय पादौ तु योगगम्याय जानुनी ।
महायोगाय ऊरुभ्यां गुह्यं ब्रह्मप्रदाय च ॥
कटिं वै योगयज्ञाय नाभिं नारायणाय च ।
योगात्मने च उदरं विश्वनाथाय वै उरः ॥
कण्ठं विश्वसृजे पूज्यौ बाहू विश्वेश्वराय च ।
आस्यं यज्ञपुरुषाय नासां नागेश्वराय च ॥
कर्णौ कृष्णाय देवाय जगन्नाथाय चाक्षिणी ।
भ्रुवौ भगवते पूज्यौ ललाटं पीतवाससे ॥
एवं संपूज्य देवेशं शिरो वै योगमूर्तये ।
ज्ञानात्मने तथा बाहू स्वनाम्ना चायुधानि च ॥
नमस्ते देवदेवेश योगेश्वर जगत्पते ।
नमस्ते सृष्टिनाथाय जगदादेर्नमोनमः ॥
योगेश्वराय सर्वाङ्ग एष देवार्चने विधिः ।

अर्घ मंत्रः—संप्राप्य वारुणं योगं नवम्यां कार्तिके सिते ॥
अर्घः प्रगृह्यतां देव सर्वकामप्रदो भव ।
ततस्तु सिञ्चयेद्राजन् अश्वत्थं विश्वरूपिणम् ॥
कलशं ताम्रमादाय जलपूर्णं तु सव्यतः ।

मंत्रः—योगीश्वराय देवाय योगगम्याय वेधसे ॥

परमात्मस्वरूपाय क्षेत्रज्ञाय हराय च ।
शिवाय शिवरूपाय ब्रह्मणे विश्वरूपिणे ।
जलशायी जगद्योनिः केशवः प्रीयतामिति ॥
तत आदाय कलशं तिलदर्भजलान्वितम् ।
द्वितीयमपसव्येन अश्वत्थं तेन सिञ्चयेत् ॥

मंत्रः ॥ पिता पितामहश्चैव तथैव प्रपितामहः ।
माता पितामही चैव तथैव प्रपितामही ॥ १ ॥
मातामहस्ततः पश्चात्प्रमातामह एव च ।
वृद्धप्रमातामहश्च तृप्तिं गच्छन्तु शाश्वतीम् ॥ २ ॥
अन्ये ये मम हस्तेन एकोद्दिष्टाश्च गोत्रिणः ।
तेभ्यो नीरं मया दत्तं तृप्ता यान्तु परां गतिम् ॥३॥
मम हस्तेन नीरेण बोधिमूले तु सिञ्चनात् ।
आप्नुवन्तु पितरो मे परां तृप्तिं जगत्पते ॥ ४ ॥

अथ—तृतीयं घटमादाय तिलमिश्रं जलप्लुतम् ।
अश्वत्थं सिञ्चयेत्तेन इदं वाक्यमुदीरयन् ॥ ५ ॥

मंत्रः—वृक्षयोनिं गता ये च वियोनिं चापि ये गताः ।
मुद्गलत्वं गता ये च ये च प्रेतत्वमागताः ॥ ६ ॥
भूतयोनिं गता ये च कृमियोनिं गताश्च ये ।
ते सर्वे तृप्तिमायान्तु गच्छन्तु गतिमुत्तमाम् ॥ ७ ॥
प्रसादाद्देवदेवस्य वासुदेवस्य चक्रिणः ॥ इति ॥
एवं कृते महीपाल अक्षयो वै भवेत्ततः ।
तर्पणं च ततः कार्यं विष्णुसूक्तेन सव्यत इति ॥
विष्णवे दक्षिणां दद्याच्छ्राद्धं यौगादिकं ततः ।

इति अक्षयनवमीतर्पणनिर्णयः ॥ अथ सर्वासु नवमीषु तिथ्यधिपतित्वेन दुर्गा पूजनीया ॥ नानाप्रकाराणि नवमीव्रतानि व्रतसमुच्चयादवगन्तव्यानीति ॥

कृतेऽचलद्विवेदेन ग्रन्थे निर्णयदीपके ।
नवमीनिर्णयो जातो रामचन्द्रव्रतान्वितः ॥

इति नवमीनिर्णयः ॥

---

## ४६६ अथ दशमीनिर्णीयते ॥

अनन्तभट्टात्॥ दशमी यदि आदित्योदयात्प्रवृत्तसंपूर्णा- प्रान्ते एकादशीविद्धा तदोपवासव्रते परविद्धा ग्राह्या ॥ यदा नवमीविद्धा भूत्वा द्वितीयदिने उदयं प्राप्ता स्वल्पा हीना त- दा पूर्वा ॥ एवं व्यवस्थयोपवासे ग्राह्या॥ यथोक्तं

संपूर्णा दशमी कार्या पूर्वया परयाथवा ।
युक्ता न दूषिता यस्मादिति सा सर्वतोमुखी ॥

अस्मिन्वचने व्यवस्थां विनेदमित्थं न स्यादिति ॥ य- दा द्वितीयदिने उदययोगिनी अपराण्हपर्यन्तं न लभ्यते तद- भिप्रायेणापस्तंबः पूर्वविद्धामाचष्टे ॥

दशमी तु प्रकर्त्तव्या सदुर्गा द्विजसत्तम ॥

पूर्वविद्धाया अलाभे उदयव्यापिनी ग्राह्या ॥ स्वल्पा- यामपि दशम्यामेकादशीव्रताङ्गमेकभक्तादिकं कार्यमिति द- शमीप्राधान्यविहितमेकभक्तादिकं कर्मकालव्यापिन्यामेवेति॥

इति दशमीसामान्यनिर्णयः ॥

## अथ दशमीविशेषः ॥

ज्येष्ठस्य शुक्लदशमी हस्तनक्षत्रेण अङ्गारकवारेण च युक्ता भागीरथ्यादिस्नानदानजपाद्याचरतां नृणां दशविधपापहरणात् दशहरेत्युच्यते ॥ तदुक्तं कालादर्शे—

ज्येष्ठस्य शुक्लदशमी हस्ताङ्गारेण संयुता ।
कायिकं त्रिविधं चैत्यं वाचिकं च चतुर्विधम् ॥
भागीरथ्यादितीर्थेषु स्नानाद्याचरतां नृणाम् ।
हरत्ययं दशविधं तस्माद्दशहरा स्मृता ॥

कायिकं कायव्यापारकृतं त्रिविधं ॥

तदाह मनुः—अदत्तानामुपादानं हिंसा चैवाविधानतः ।
परदाराभिगमनं कायिकं त्रिविधं स्मृतम् ॥

चित्तव्यापारकृतं चैत्यम् । तदपि त्रिविधं यथा ॥

परद्रव्येष्वभिधानं मनसानिष्टचिन्तनम् ।
वितथाभिनिवेशश्च चैत्यं त्रिविधमुच्यते ॥

वाग्व्यापारकृतं वाचिकं चतुर्विधं यथा ॥

पारुष्यमनृतं चैव पैशुन्यमपि सर्वशः ।
असंबद्धप्रलापश्च वाचिकं स्याच्चतुर्विधम् ॥

एवं दशविधं कूर्मपुराणे—

ज्येष्ठस्य शुक्लदशमी भवेद्भौमदिने यदि ।
प्रोक्ता हस्तर्क्षसंयुक्ता तिथिर्दशहरास्मृता ॥
तस्यां स्नानं च तीर्थेषु दशपापहरंस्मृतमिति ॥

ज्येष्ठशुक्लदशम्यां कुजहस्तर्क्षयोगे गङ्गा स्वर्गादवतीर्णेत्युक्तं वाराहपुराणे—

दशमी शुक्लपक्षे तु ज्येष्ठे मासि कुजेऽहनि ।
अवतीर्णा यतः स्वर्गाद्धस्तर्क्षे च सरिद्वरा ॥
हरते दश पापानि तस्माद्दशहरा स्मृता ।
अतस्तस्यां दशहरा स्तोत्रपाठं गङ्गापूजनं च कुर्यात् ॥

इत्युक्तं स्कन्दपुराणे—

तस्यां दशम्यामेतच्च स्तोत्रं गङ्गाजले स्थितः ।
यः पठेद्दशकृत्वस्तु किल्बिषं नाशयेद्ध्रुवम् ॥
असन्निधाने गङ्गाया गङ्गां संपूज्य वै पठेत् ।

तथा तत्रैवोक्तं—

स्नानकालेऽन्यतीर्थेषु जप्यते जान्हवी जनैः ।
विना विष्णुपदं क्वान्यत्समर्थमघनाशनम् ॥ इति ॥

ब्रह्मपुराणे तु केवलहस्तयोगे दशहरोक्ता ॥

ज्येष्ठे मासि सिते पक्षे दशमी हस्तसंयुता ।
संहरेद्दश पापानि तस्माद्दशहरा स्मृता ॥

यत्तु स्कन्दपुराणे योगबाहुल्यमुक्तं ॥

ज्येष्ठे मासि सिते पक्षे दशम्यां बुधहस्तयोः ।
व्यतीपाते गरानन्दे कन्याचन्द्रे वृषे रवौ ॥

तद्योगाधिक्यं फलाधिक्यदर्शनपरं ॥ अन्यथा कूर्मादिवाक्यानां असमीचीनता स्यात् ॥

ज्येष्ठस्य शुक्लदशमी संवत्सरमुखी स्मृता ।
तस्यां स्नानं प्रकुर्वीत दानं चैव विशेषतः ॥
यां काश्चित्सरितं प्राप्य दद्याद्दर्भतिलादिकम् ।
मुच्यते दशभिः पापैः स महापातकोपमैरिति ॥

स्कन्दपुराणे केवलापि प्रशस्तोक्ता ॥

इती दशहरानिर्णयः ॥

---

[३५८] अथाश्विन शुक्लदशमी--विजयादशमी ॥

सा तु महानवम्युत्सवप्रसङ्गात्तत्र निर्णीता ॥ दशावतारब्रह्मावाप्त्यादिदशमीव्रतानि व्रतसमुच्चयोक्तत्वान्न लिखितानि ॥ अथाषाढशुक्लदशमी मन्वादिः ॥

तदुक्तं—आषाढस्यापि दशमी माघमासस्य सप्तमी ।
श्रावणस्याष्टमी कृष्णेत्यादि ॥

इति दशमी निर्णयः ॥

---

कृतेऽचलद्विवेदेन ग्रन्थे निर्णयदीपके ।
सामान्यनिर्णयोपेता जाता दशहरा त्रिधा ॥

---

[३४३] अथ एकादशी निर्णयः ॥

[३७०] अथैकादशीमहात्म्यं नारदीयपुराणे—

एकादशीसमुत्थेन वन्हिना पातकेन्धनम् ॥
भस्मतां याति राजेन्द्र अपि जन्मशतोद्भवम् ॥

नारदः—प्रसङ्गाद्वापि दंभाद्वा लोभाद्वा त्रिदशाधिप ।
एकादश्यां मनः कृत्वा सर्वदुःखाद्विमुच्यते ॥

इत्यादि स्मृतिपुराणवैष्णवागमेष्वेकादशीव्रतविषयाणि नित्यकाम्यरूपाणि च वचनानि प्रदर्श्यन्ते ॥ नित्यत्वं नाम फ-

लानपेक्षत्वं काम्यत्वं च फलापेक्षत्वमिति ॥

तद्यथा देवलः—न शङ्खेन पिबेत्तोयं न खादेत्कूर्मसूकरौ ।
एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ॥ इति ॥

अत्रायं विशेषः

सूकरःशुक्लवर्णस्तु रोहितः कनकप्रभः ।
चक्राङ्कितस्तु यः कूर्मस्त्रयमेतन्न भक्षयेत् ॥

रोहितो मत्स्यः ।

स ब्रह्महा स गोघ्नश्च स्तेयी च गुरुतल्पगः ।
एकादश्यां तु यो भुङ्क्ते पक्षयोरुभयोरपि ॥

तथा—यानि कानि च पापानि ब्रह्महत्यासमानि च ।
अन्नमाश्रित्य तिष्ठन्ति संप्राप्ते हरिवासरे ॥
रटन्तीह पुराणानि भूयो भूयो वरानने ।
न भोक्तव्यं न भोक्तव्यं संप्राप्ते हरिवासरे ॥

इत्येवमादीन्यैकादश्यां रागतः प्राप्तभोजननिषेधपराणि ॥

[३७१] चन्द्रसूर्यग्रहे नाद्यादित्यादिवदुपरागेऽपि अयं निषेधो अधिकारिविशेषाश्रवणाद्विपर्यये दोषश्रवणाच्च ॥ सर्वेषां ब्रह्महननप्रतिषेधवन्नित्य एव ॥ एकादशीव्रतं नित्यं सदा यावदायुरित्युक्तं ॥ नित्योक्तिर्यथा गरुडपुराणे—

उपोष्यैकादशी नित्यं पक्षयोरुभयोरपि ।

सदेत्युक्तिः सनत्कुमारेण प्रोक्ता

एकादशी सदोपोष्या पक्षयोः शुक्लकृष्णयोः ॥

यावदायुरित्युक्तिः विष्णुरहस्ये—

द्वादशी न च भोक्तव्या यावदायुः प्रवृत्तिभिः ।

एकादशीव्रतं न कदाचिदतिक्रमेदित्युक्तं कृष्णेन

एकादशीमुपवसेन्न कदाचिदतिक्रमेत् ।

विष्णुस्मृतौ—

एकादश्यां न भुञ्जीत कदाचिदपि मानवः ॥ इति ॥

अतिक्रमो द्विविधः । अकरणं उपक्रम्याकरणं च । अकरणे सनत्कुमारः—

न करोति हि यो मूढ एकादश्यामुपोषणम् ।
स नरो नरकं याति रौरवं तमसा वृतम् ॥१॥

उपक्रम्याकरणे विष्णुरहस्ये—

समादायविधानेन द्वादशीव्रतमुत्तमम् ।
तस्यां भङ्गं नरः कृत्वा रौरवं नरकं व्रजेत् ॥१॥

३७२ तथा— यो गृहीत्वा व्रतं मोहादेकादश्यादिकं नरः ।
न समापयते तस्य गतिः पापीयसी भवेत् ॥१॥
एकादश्यां निराहारो यो भुङ्क्ते द्वादशीदिने ।
शुक्लेऽप्यथ च कृष्णे वा व्रतं वै वैष्णवं महत् ॥२॥

विष्णुः—एकादशीमुपोष्येत पक्षयोरुभयोरपि ।
यथा शुक्ला तथा कृष्णा न विशेषोऽस्ति कश्चन ॥

इत्येवमादीनि व्रतोपवासशब्दश्रवणादुपवासव्रतविषयविधिपराणि ॥

अथ एकादशीव्रताधिकारिणः प्रदर्श्यन्ते ॥

कात्यायनः—अष्टवर्षाधिको मर्त्योह्यपूर्णाशीतिहायनः ।
एकादशीमुपवसेत्पक्षयोरुभयोरपि ॥ इति ॥

कूर्मः—एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।

वनस्थयतिधर्मोऽयं शुक्लामेव सदा गृही ॥ इति ॥

तथा—एकादशीषु कृष्णासु रविसंक्रमणे तथा ।

चन्द्रसूर्योपरागे च न कुर्यात्पुत्रवान्गृहीति ॥

[३७३] कालादर्शे—विधवाया वनस्थस्य यतेश्चैकादशीद्वये ।

उपवासो गृहस्थस्य शुक्लायामेव पुत्रिणः ॥

भुजेर्निषेधः कृष्णायां सिद्धस्तस्यार्थतो व्रते ।

अत्रोपवासप्रकरणाद्व्रतशब्द उपवासपरः ॥ पुत्रिणो गृहस्थस्य शुक्लायामेकादश्यामुपवासः ॥ कृष्णैकादश्यां भुजेर्भोजनस्य निषेधः अशननिवृत्तिमात्रमिति ॥ ननु—

आदित्येऽहनि संक्रान्तावसितैकादशी ग्रहे ।

व्यतीपाते कृतेश्राद्धे पुत्री नोपवसेद्गृही ॥

इत्यादिवचनपर्यालोचनया शुक्लैकादश्यामपि रविवारसंक्रान्त्याद्युपवासनिषेधनिमित्तसन्निपाते गृहिणः पुत्रवतः उपवासो न प्राप्नोति ॥ मैवं ॥ अत्र संक्रान्त्यादिनिमित्तोपवासो निषिध्यते न तु तद्युक्तैकादश्युपवासः ॥

तदाह जैमिनिः—तन्निमित्तोपवासस्य निषेधः समुदाहृतः ।

प्रयुक्तान्तरयुक्तस्य न विधिर्न निषेधनमिति ॥

संक्रान्त्यादिनिमित्तोपवासप्रतिषेधात् ॥ एकादशीनिमित्तोपवासः पुत्रवतो गृहिणो भवत्येव ॥ [३७४] किंच ॥ काम्यसंक्रान्त्यादिउपवासनिषेधाः न नित्यैकादशीउपवासविषया भवन्ति ॥ अतश्च कृष्णैकादश्यां पुत्रवान् गृही नित्योपवासं कुर्यात् ॥

पक्षे पक्षे तु कर्तव्यमेकादश्यामुपोषणमिति ।

सनत्कुमारोक्तया वीप्सया वसन्ते वसन्ते ज्योतिषा यजेतेतिवन्नित्यत्वं॥

कूर्मः—सोमसूर्यग्रहौ पुण्यौ तथैव मुनिभिः स्मृतौ ।
तथा सितासिते पुण्ये द्वादश्यौ विष्णुतुष्टिदे इति ॥

नित्योपवासे दशमीद्वादश्योर्नैकभक्त*नियमः ॥

तदुक्तं कात्यायनेन—

नित्योपवासी यो मर्त्यः सायं प्रातर्भुजिक्रियाम् ।
संत्यजेन्मतिमान् विप्रः संप्राप्ते हरिवासरे ॥

विप्र इति सर्ववर्णोपलक्षणं ॥ काम्योपवासे दशम्यां द्वादश्यां चैकभक्तमिति वक्ष्यते ॥ [१७५]श्राद्धदिवसे विशेषः॥

उपवासो यदानित्यः श्राद्धं नैमित्तिकं भवेत् ।
उपवासं तदा कुर्यादाघ्राय पितृसेवितम् ॥

पितृसेवितमन्नमाघ्रायोपवासः कार्य इति ॥

तथा—मातापित्रोः क्षये प्राप्ते भवदेकादशी तदा ।
अभ्यर्च्य पितृदेवानामाजिघ्रेत्पितृसेवितमिति ॥२ तत्र चायं संकल्पविधिः ॥ वाराहपुराणे—

गृहीत्वौदुंबरं पात्रं वारिपूर्णमुदङ्मुखः ।
उपवासं तु गृण्हीयाद्यद्वा वार्येव धारयेत् ॥

उदुंबरं ताम्रं तेन घटितमौदुंबरं ॥ विष्णुस्मृतौ मंत्रः—

एकादश्यां निराहारः स्थित्वा चैवापरेऽहनि ।
भोक्ष्येऽहं पुण्डरीकाक्ष शरणं मे भवाच्युत ।

अयं च संकल्पः प्रातरेकादश्यां स्नात्वा कर्तव्यः ॥ उ-

---

* निर्णय इति पाठान्तरम्.

उपवासस्य निरुक्तिर्व्यासेनोक्ता—

उपावृत्तिस्तु पापेभ्यो यस्तु वासो गुणैः सह ।
उपवासः सविज्ञेयः सर्वभोगविवर्जितः ॥

[३७६] पापेभ्यो व्रताङ्गत्वेन परिवर्जनीयदिवास्वापादिमैथुनादिभ्यः उपावृत्तस्य गुणैः केशवादिनामसङ्कीर्तनादिभिः सहितस्य तांबूलादिसर्वभोगविवर्जितस्य अहोरात्रावस्थानमुपवासः ॥ वर्जनीयं प्रदर्श्यते ॥

ब्रह्मचर्यं तथा शौचं सत्यमामिषवर्जनम् ।
व्रतेष्वेतानि चत्वारि चरितव्यानि नित्यशः ॥

आमिषं मांसं तस्य वर्जनं पारणाहे ॥ उपवासे प्राप्त्यभावात् ॥ उपवासस्यापि व्रतत्वात्तत्रापि ब्रह्मचर्यं ॥ तत्र च॥

स्त्रीणां संप्रेक्षणात्स्पर्शात्ताभिः संकल्पनादपि ।
निःस्पन्दते ब्रह्मचर्यं न दारैः सह संविशेत् ॥

दुष्टचित्तेनावलोकनाद्ब्रह्मचर्यं भ्रश्यतीत्यभिप्रायः ॥ किं च ॥

असकृज्जलपानाच्च तांबूलस्य च भक्षणात् ।
उपवासः प्रदुष्येत दिवा स्वापाच्च मैथुनात् ॥
उपवासे तथा श्राद्धे न खादेद्दन्तधावनम् ।
दन्तानां काष्ठसंयोगो हन्ति सप्त कुलानि वै ॥

पुण्यंस्त्रीविषये व्यासेन विशेष उक्तः ॥

पुष्पालङ्कारवस्त्राणि गन्धपुष्पानुलेपनम् ।
उपवासे न दुष्येत दन्तधावनमञ्जनम् ।

[३७७] तथा हारीतः ॥ पतितपाखण्डसंभाषणानृतवाक्यस्तेयादिकं च वर्जयेत् ॥ आदिशब्दाद्विषयेन्द्रियचापल्या दी-

नां ग्रहणं ॥ इह स्तेयादीनां पुरुषानर्थकत्वेन प्रतिषिद्धानामपि पुनः प्रतिषेधकवचनं तांबूलभक्षणादिचर्वणादिवास्वापादीनामिव व्रतार्थं वेदितव्यं ॥१॥

तथा—यदि वाग्यमलोपः स्याच्छ्राद्धहोमजपादिषु ॥

व्याहरेद्वैष्णवान्मंत्रान् स्मरेद्वा विष्णुमव्ययम् ।

इदं विष्णुरित्यादि अष्टाक्षरादि च ॥ अथ वा ॥

शारीरमन्तःकरणोपघातं वाचश्च विष्णुर्भगवानशेषः ।
शमं नयत्वाशु ममेह सर्वं पापाद्यनन्तो हृदि सन्निविष्टः॥
अन्तः शुद्धिं बहिः शुध्धिं शुद्धधर्ममयोऽच्युतः ।
सकरोत्वमले त्वस्मिन्नशुचिरेवास्मि सर्वदा ॥

जपेन्मंत्रान्वैष्णवानित्यत्र निमित्तभूतदोषगुरुलघुमनुसारेण मंत्रजपस्यावृत्तिः कल्पनीयेति ॥ उपवासासमर्थंप्रति विष्णुरहस्ये—

असामर्थ्ये शरीरस्य व्रते च समुपस्थिते ।
कारयेद्धर्मपत्नीं वा पुत्रं वा विनयान्वितम् ॥
भगिनीं भ्रातरं वापि व्रतमस्य न लुप्यते ।
भार्या पत्युर्व्रतं कुर्याद्भार्यायाश्च पतिर्व्रतम् ॥
असामर्थ्ये परस्ताभ्यां व्रतभङ्गो न जायते ॥१॥

पतिपुत्राद्यसन्निधाने दक्षिणादानेनान्यं नियोजयेत् ॥

तथा—एकभक्तेन नक्तेन क्षीणवृद्धातुरः क्षिपेत् ।
नातिक्रमेत्द्वादशीं तु उपवासव्रतं न च ॥

३७८ व्यासः—एकभक्तेन नक्तेन तथैवायाचितेन च ।
उपवासेन दानेन न निर्द्वादशिको भवेत् ॥

उपवासे त्वशक्तानामशीतेरूर्ध्वजीविनाम् ।

एकभक्तादिकं कार्यमाह बौद्धायनो मुनिः ॥

सूतकादौ पुनः

परमापदमापन्नो हर्षे वा समुपस्थिते ।

सूतके मृतके वापि न त्याज्यं द्वादशीव्रतम् ।

तथा—सूतकेषु नरः स्नात्वा प्रणम्य मनसा हरिम् ।

द्वादश्यां तु नरो भुक्त्वा सूतकान्ते जनार्दनम् ॥

पूजयित्वा विधानेन भोजयित्वा द्विजोत्तमान् ।

सूतकान्ते समाप्तिं कुर्यात् ॥ इति कालादर्शे—

पूर्वसंकल्पितं यच्च व्रतं सुनियतव्रतैः ।

तत्कर्तव्यं नरैः शुद्धं दानार्चनविवर्जितम् ॥

इति विशेषः ॥ एकादशीव्रतं नित्यमपि संक्रान्त्याद्युपवासनिषिद्धे काले एकादशीनिमित्तत्वेन क्रियमाणत्वात् नैमित्तिकमपि भवति ॥१॥

[३७५] अथ काम्योपवासव्रतविषयाणि वाक्यानि ॥

देवलः—दशम्यामेकभक्तस्तु मांसमैथुनवर्जितः ।

एकादश्यामुपवसेत्पक्षयोरुभयोरपि ॥

देवतास्तस्य तुष्यन्ति कामितं चोपसिध्यति ।

अङ्गिरा अपि—सायमाद्यन्तयोरन्हः सायं प्रातश्च मध्यमे ।

उपवासफलप्रेप्सुर्जह्याद्भक्तचतुष्टयम् ॥

कूर्मपुराणे—कांस्यं मांसं मसूरं च पुनर्भोजनमैथुने ।

द्यूतमत्यंबुपानं च दशम्यां वैष्णवस्त्यजेत् ॥

बृहस्पतिः—दिवा निद्रा परान्नं च पुनर्भोजनमैथुने ।

क्षौरं कांस्यामिषं तैलं द्वादश्यामष्ट वर्जयेत् ॥

तथा ब्रह्माण्डपुराणे–पुनर्भोजनमध्यायो भार आयासमैथुने।
उपवासफलं हन्युर्दिवा निद्रा च पञ्चमी ॥

इत्यादि नियमा अन्यतोऽवगन्तव्या इति ॥ एषु वाक्येषु कामितं चैव सिध्यति क्वचिदुपवासफलप्रेप्सुरिति क्वचिदुपवासफलंहन्युरिति कामाधिकारस्यैवानुवादादवगम्यते कामाधिकारिविषयाणीमानीति ॥

कूर्मः–एकादश्यां सिते पक्षे यो विष्णोः पुरतो *वसेत् ।
स विष्णुलोकं व्रजति कृष्णपक्षे विमुच्यते

तथा–यदीच्छेद्विष्णुसायुज्यं पुत्राणामपि संपदम् ।
एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।

वसिष्ठः–एकादश्यां यदा राम वारश्च सवितुर्भवेत् ॥
उपोष्या सा महापुण्या पुत्रपौत्रप्रवर्धिनी ।

३८० इमे चानेककामनाविशिष्टा विधयस्तत्तत्कामनाविशिष्टाधिकारिणो ज्ञातव्याः ॥ नात्र शुक्लकृष्णविभागः ॥ अत्रापि संकल्पादीतिकर्त्तव्यताकलापः पूर्ववदेव द्रष्टव्यः ॥ अथैकादशीद्वैधे क्वोपवास इत्यवबोधाय पक्षानुज्ञाव्योज्ञाव्य निर्णेष्यते ॥ सा संपूर्णा दशमीविद्धेति संक्षेपतो द्वैधं ॥ तत्र संपूर्णत्वं स्कन्दपुराणोक्तं–

प्रतिपत्प्रभृतयः सर्वा उदयाद्योदयाद्रवेः ।
संपूर्णा इति व्याख्याता हरिवासरवर्जिताः ॥

आदित्योदयात्प्रवृत्ता अन्यमादित्योदयं प्राप्ताः सर्वाः संपू-

---

*पुरतः स्वपेदिति पाठान्तरं

र्णा इति ॥ हरिवासरस्यैकादश्याः संपूर्णत्वमन्यादृशं ॥ तच्च गरुडपुराणे—

उदयात्प्राक् च घटिका व्यापिन्येकादशी यदा ।
संयुक्तैकादशी नाम वर्जयेद्धर्मकांक्षिभिः ॥

काण्वोऽपि—अरुणोदयवेलायां दशमी यदि दृश्यते ।
संयुक्तैकादशीं तां तु मोहिन्या दत्तवान्प्रभुः ॥
उदयोपरि विद्धा तु दशम्यैकादशी यदा ।
दानवेभ्यः प्रीणनार्थं दत्तवान्पाकशासनः ॥
तस्मात्सर्वप्रयत्नेन संपूर्णैकादशीं त्यजेदिति ।

[३८१] अथ उदयात्पूर्वघटिकाभागादारभ्य पुनरुदयपर्यन्तावस्थायित्वं संपूर्णत्वं ॥ अथ सूर्योदयकालावस्थायिसंपूर्णत्वानुरोधेन वक्ष्यमाणभेदेषु एकादश्या द्वादश्या अपि न्यूनाधिकत्वं वेदितव्यं ॥ तथाष्टादशभेदभिन्ना एकादशीति शङ्कराचार्येणोक्तं—

शुद्धा त्रेधा तथा विद्धा भेदैर्न्यूनसमाधिकैः ।
प्रत्येकं च पुनस्त्रेधा द्वादश्यूनसमाधिकैः ॥

अस्यार्थः दशमीवेधरहिता एकादशी शुद्धा ॥ सा त्रिधा ॥ संपूर्णा न्यूनाधिका चेति ॥ एवं त्रिधापि प्रत्येकं द्वादश्या न्यूनता समताधिक्यवशेन शुद्धा नवधा ॥ अन्या दशमीविद्धा ॥ सापि शुद्धाभेदप्रकारेण नवधा ॥ एतेऽष्टादशभेदाः ॥

[३८२] अथ निर्णयः ॥ तत्र तावदेकादशी यदा संपूर्णा द्वादश्यां न विद्यते रात्रिशेषे न्यूना वा ॥ द्वादशी च संपूर्णा न्यूनाधिका वा ॥ तदा एकादश्यामुपवासो द्वादश्यां पारणमिति न किंचिद्वक्तव्यं॥दशम्याः षष्टिघटिकाभ्यो न्यूनत्वेन शुद्धत्वात् ॥

तदुक्तं स्कन्दपुराणे–

शुद्धा यदा समा हीना समक्षीणाधिकोत्तरा ।

एकादशीमुपवसेन्न शुद्धां वैष्णवीमिति ॥

शुद्धा एकादशी समा हीना वा । उत्तरा द्वादशी समा क्षीणा अधिका वा । तदा एकादशीमुपवसेन्न शुद्धां वैष्णवीं द्वादशीमित्यर्थः ॥ अनेन स्कन्दपुराणवचनेन द्वादशीवृद्धिभेदेऽपि शुद्धायां द्वादश्यां एकादशीनिमित्तोपवासनिषेधात् ॥

अविद्धापि तथा विद्धा परतो द्वादशी यदि ।

एतदप्यनादृतं ॥ विध्धायाः षष्ठे भेदे तद्विषयं वक्ष्यामः ॥ तथा–एकादशी तृतीया च षष्ठी चैव त्रयोदशी ।

पूर्वविध्धा तु कर्तव्या यदि न स्यात्परेऽहनि ॥

इत्यनेन निगमवाक्येन परदिने सूर्योदयोर्ध्वं कलाद्यभावे पूर्वविद्धा कर्तव्येत्युक्तं किमुताविद्धेति ॥ एते आद्याः षड्भेदाः । तेषां नामानि । शुद्धोनैकादशी ऊनद्वादशी ॥१॥ शुद्धोनैकादशी समद्वादशी ॥२॥ शुद्धोनैकादशी अधिकाद्वादशी ॥३॥ शुद्धसमा एकादशी ऊनद्वादशी ॥४॥ शुद्धसमैकादशी समद्वादशी ॥५॥ शुद्धसमैकादशी आधिकाद्वादशी ॥६॥ एषु षट्सु भेदेषु उदयानन्तरं एकादश्यभावात् ग्रहस्थैर्यतिभिश्च पूर्वा कार्या इति विश्वरूपः ॥ ३८४अथ सप्तमाष्टमौ ॥ यदा संपूर्णा एकादशी द्वादश्यां च कियन्मात्रा *वर्तते द्वादशी सूर्योदयान्न्यूना समा वा तदा तिथिद्वयमुपोष्यमधिकारिभेदेन ॥ तथा च

---

* विद्यते इति पाठान्तरं

स्मृतिः—संपूर्णैकादशी यत्र प्रभाते पुनरेव सा ।

लुप्यते द्वादशी तस्मिन्नुपवासः कथं भवेत् ॥

इति प्रश्ने मार्कण्डेयः—

संपूर्णैकादशी यत्र प्रभाते पुनरेव सा ॥

पूर्वामुपवसेत्कामी निष्कामस्तूत्तरां सदेति ॥

अत्र कामी गृही । गृहिणां प्रायेण साकामत्वात् ॥ निष्कामो यतिरिति ॥

स्मृतिरपि—संपूर्णैकादशी यत्र प्रभाते पुनरेवहि ।

उत्तरां तु यतिः कुर्यात्पूर्वामुपवसेद्गृहीति ॥१॥

गृहिणः काम्योपवासे पूर्वा ॥ नित्यैकादश्युपवासे विष्णुप्रीतये च ग्रहस्थैरपि परा कार्येति ॥ ३८५ तदुक्तं विज्ञानेश्वरेण

उपोष्ये द्वे तिथी यत्र विष्णुप्रीणनतत्परैरिति ॥

द्वे तिथी तत्र विष्णुप्रीणनतत्परैरिति अत्र द्वे तिथी उपोष्ये साकामनिष्कामव्यवस्थया ॥ द्वादशीवृद्धिपक्षे विशेषो नवमभेदे शुद्धाधिकोपक्रमे ॥

काम्याद्यां समुपावसेत्परादिने वाञ्छाविहीनस्तदा ।

विष्णुप्रीणनकृद्द्वयोरुपवसेदिति दीपिका

विष्णुरहस्ये—निष्कामस्तु गृही कुर्यादुत्तरैकादशीं सदा ।

सकामस्तु सदा पूर्वामितिबौद्धायनोऽब्रवीत् ॥

न चात्र त्रयोदशीपारणानिषेधशङ्का कार्या ॥ लुप्यते द्वादशी तस्मिन्नित्युपक्रम्य द्वादशीविरहविषय एवोपवासविधानात् ॥ प्रत्युतफलश्रुतिः ॥ नारदः—

द्वादश्येकादशी यत्र संगता त्रिदशाधिप ।

तामुपोष्य ततः कुर्यात्त्रयोदश्यां तु पारणम् ॥

बौद्धायनः—कलाप्येकादशी यत्र परतो द्वादशी न चेत् ।

परतः पारणा दिवसे ।

तत्र क्रतुशतं पुण्यं त्रयोदश्यां तु पारणम् ॥

तथा—द्वादशीमिश्रिता कार्या सर्वत्रैकादशी तिथिः ।

द्वादशी च त्रयोदश्यां विद्यते यदि वा न वेति ॥

[३८६] गरुडपुराणे—यत्रोपवासो विहितश्चतुर्थाश्रमवासिनाम् ।

विधवापि च तत्रैव परतो द्वादशी न चेत् ॥

इति सप्तमाष्टमौ ॥ अथ शुद्धायानवभेदाः पूर्वोक्तास्तेषां उदाहरण कोष्ठकानि लिखितानि द्रष्टव्यानि ॥

| शुद्धोनाएका. ऊनद्वा० | | | शुद्धोनाएका. समद्वादशी | | | शुद्धोनाएका० अधिकाद्वाद० | | | शुद्धसम ए० ऊनद्वादशी | | | शुद्धसमएका० समद्वादशी | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १० | र | ५८ | १० | र | ५८ | १० | र | ५७ | १० | र | ५८ | १० | र | ५९ |
| ११ | चं | ५७ | ११ | चं | ५९ | ११ | चं | ५८ | ११ | चं | ६० | ११ | चं | ६० |
| १२ | मं | ५७ | १२ | मं | ६० | १२ | मं | ६० | १२ | मं | ५९ | १२ | मं | ६० |
| ० | ० | ० | ० | ० | ० | १३ | बु | १ | ० | ० | ० | ० | ० | ० |
| | १ | | | २ | | | ३ | | | ४ | | | ५ | |

| शुद्धसमएका० अधिकद्वादशी | | | शुद्धाधिकए० ऊनद्वादशी | | | शुद्धाधिएका समद्वादशी. | | | शुद्धाधिए० अधिकाद्वाद. | | | ० | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १० | र | ५९ | १० | र | ५९ | १० | र | ५९ | १० | र | ५९ | | | |
| ११ | चं | ६० | ११ | चं | ६० | ११ | चं | ६० | ११ | चं | ६० | | | |
| १२ | मं | ३० | ११ | मं | १ | ११ | मं | १ | १२ | मं | १ | | | |
| १२ | बु | १ | १२ | मं | [illegible] | १२ | मं | [illegible] | १२ | बु | ३ | | | |
| | ६ | | | ७ | | | ८ | | | ९ | | | ० | |

इति शुद्धैकादश्याः नवभेदकोष्ठकानिः ॥ अथ नवमो-भेदः ॥ यदा तु ॥ संपूर्णैकादशी यत्र द्वादश्यां च कियन्मात्रा विद्यते द्वादशी च त्रयोदश्यां तदा नारदः—

संपूर्णैकादशी यत्र प्रभाते पुनरेव सा ।
तत्रोपोष्या द्वितीया तु द्वादशी यदि दृश्यते ॥

गरुडपुराणे—संपूर्णैकादशी यत्र परतः पुनरेव सा ।
तत्रोपोष्या परा पुण्या परतो द्वादशी यदि ॥ १ ॥

इत्यादिवाक्यपर्यालोचनया त्रयोदश्यां द्वादशीदर्शने द्वितीयैकादश्येव सर्वैरुपोष्येति विनिर्णयः ॥

३८७ननु—संपूर्णैकादशी यत्र प्रभाते पुनरेव सा ।
उत्तरां तु यतिः कुर्यात्पूर्वामुपवसेद्गृही ॥

इति वचनाद्यतिविषयो द्वितीयैकादश्युपवासविधिः किमिति नेष्यते ॥ मैवं ॥ द्वितीयोपोष्या न प्रथमेति नारदीयगरुडवचनात् ॥ अधिकारिविशेषे संबंधविरहेण द्वितीयैकादश्या एवोपवासविधिविषयत्वावगमात् ॥ इतरथाप्यधिकारि विशेषव्यवस्थयातिथिद्वयस्याप्युपवासविधिविषयत्वे द्वितीयाग्रहणमविवक्षितं स्यात् ॥ तस्माच्छुद्धाधिका चेत्सर्वैरेव परा कार्या ॥ तदाह भृगुः—

संपूर्णैकादशी यत्र प्रभाते पुनरेव सा ।
सर्वैरेवोत्तरा कार्या परतो द्वादशी यदि ॥

तथा स्मृत्यन्तरे—सपूर्णैकादशी यत्र प्रभाते पुनरेव सा ।
वैष्णवी च त्रयोदश्यां घटिकैकापि दृश्यते ॥
गृहस्थोऽपि परां कुर्यात्पूर्वां नोपवसेत्तदा ।

वैष्णवी द्वादशी ॥ यत्तु वचनं

एकादशी भवेत्पूर्णा परतो द्वादशी यदि ।
एकादशीं परित्यज्य द्वादशीं समुपोषयेत् ॥इति॥

तत्प्राचीनवचननिचयदृष्ट्या द्वादश्यां किंचिदेकादशी-सद्भावेद्रष्टव्यं॥ इति शुद्धाया नवभेदाः ॥ [३८८] एवं शुद्धाविषये निर्णयमुक्त्वा अधुना दशमीविद्धैकादशीविषये निर्णयोऽभिधीयते ॥ यदा च दशमीविद्धैकादशी द्वादश्यां च न विद्यते ॥ द्वादशी समा न्यूना वा ॥ तदा दशमीविद्धैकादश्यामुपवासः॥ शुद्धैकादश्या अभावेन गत्यन्तराभावात् विद्धैकादशी उपोष्या तदुक्तं—एकादशी न लभ्येत सकलाद्वादशी भवेत् ।

उपोष्या दशमीविद्धा ऋषिरुद्दालकोऽब्रवीत् ॥

स्मृतिरपि—त्रयोदश्यां न लभ्येत द्वादशी यदि किञ्चन ।

उपोष्यैकादशी तत्र दशमीमिश्रितापि वा ॥

ननु ॥ दशम्यानुगता यत्र तिथिरेकादशी भवेत् ।

तामुपोष्य नरो जह्यात् पुण्यं वर्षशतोद्भवम् ॥

तथा—कलार्धेनापि विद्धा स्याद्दशम्यैकादशी यदि ।

तदा ह्येकादशीं त्यक्त्वा द्वादशीं समुपोषयेत् ॥

इत्यादिस्मृत्यन्तरवचनैर्विहितप्रतिषिद्धत्वात् द्वादश्यामेवासौ विकल्पो वा कस्मान्नेष्यते ॥ अतिरात्रे षोडशिग्रहणवदिति॥

[३८९] अत्रोत्तरं पुराणसमुच्चयात्—

दशमीमिश्रिता पूर्वा द्वादश्यां तु विलुप्यते ।
एकादशी महा ब्रह्मन् उपवासः कथं भवेत् ॥

इत्युपक्रम्य—शुद्धैव द्वादशी राजन्नुपोष्या मोक्षकांक्षिभिः।

दशम्यैकादशी मिश्रा कर्तव्या न कदाचन ॥

इति वचनान्मोक्षकामिनां चतुर्थाश्रमिणां द्वादश्युपवास-विध्यधिकारसंबंधित्वावगमात् ॥ न गृहस्थादीनां द्वादश्युपवासो विकल्पो वा भवितुमर्हति ॥ कुत्रचिदनयोर्भेदयोर्गृहस्थैर्दशमीविद्धा ग्राह्या ॥ यतिभिर्द्वादशी ग्राह्येति व्यवस्था कृता ॥ सापि यदा तु शुद्धा द्वादशी त्रयोदश्यां नास्ति तदा दशमीविध्धैकादश्यामुपवासः ॥ [३५०] यथोक्तं—

एकादशी दशाविध्धा परतोऽपि न वर्धते ।

गृहिभिर्यतिभिश्चैव सैवोपोष्या सदा तिथिरिति ॥

अनन्तभट्टोदाहृता निराकृता—

विध्धाप्येकादशी ग्राह्या परतो द्वादशी भवेत् ।

द्वादश द्वादशी हन्ति त्रयोदश्यां तु पारणमिति ॥

औदयिक्याः कलाया अभावे न उपोष्येति रहस्यं ॥ अथ विध्धाभेदाः ॥ विध्धन्यूनैकादशी न्यूनद्वादशी ॥ १ ॥ विद्धन्यूनैकादशी समद्वादशी ॥२॥ विद्धन्यूनैकादशी आधिकद्वादशी ॥३॥ अथ पञ्चमचतुर्थौ व्युक्रमेण लिखितौ ॥ विद्धसमैकादशी समद्वादशी ॥ तथा विद्धसमैकादशी न्यूनद्वादशी ॥ एतेषां सर्वविध्धैकादशीभेदानां उदाहरणांकाः कोष्ठेषु लिखिता द्रष्टव्याः ॥ चतुर्थपञ्चमभेदयोः पूर्वविध्धोपोष्येति ॥ गृहिभिः पूर्वा यतिभिरुत्तरेति ॥ [३५१] अथ नवमो भेदः ॥ विश्वरूपः ॥ अथ यदा दशमीविध्धा एकादशी द्वादश्यां च किंचिन्मात्रा विद्यते द्वादशीलवश्च त्रयोदश्यामस्ति तदा द्वितीयैकादश्युपवासः ॥

तदुक्तं ब्रह्मवैवर्त्ते—दशमीशेषसंयुक्तां यः करोति विमूढधीः ।
एकादशीं फलं तस्य न स्याद्द्वादशवार्षिकम् ॥
तथा—एकादशी दशम्या तु सप्तम्या च तथाष्टमी ।
पञ्चम्या च तथा षष्ठी त्रयोदश्या चतुर्दशी ॥
आसु क्रियां न कुर्वीत पूर्वविध्धासु मानव । इति
वचनेभ्यो दशमीविध्धैकादश्युपवासे निषेधाधिगमात् ॥
विष्णुधर्मे—एकादशी तथा षष्टी अमावास्या चतुर्थिका ।
उपोष्याः परसंयुक्ताः पराः पूर्वेण संयुताः ॥
इति परविध्धाविधानात् ॥ यथा ॥
द्वादशीमिश्रिता कार्या सर्वत्रैकादशी तिथिः ।
द्वादशी च त्रयोदश्यां विद्यते यदि वा न वा ॥
इत्यादिवचनेभ्यो औदायिक्यैकादशीसद्भावे परोपोष्येति सिध्धान्त इति ॥ [३९२] नवमो भेदो ग्रन्थेऽस्मिंस्तृतीयः ॥ विध्धाधिकैकादशी अधिकद्वादशी अस्योदाहरणांकाः कोष्ठे नवमे ज्ञेयाः ॥ अस्मिन्भेदे द्वितीया सर्वैरेवेति विश्वरूपः ॥ अष्टमो भेदः विध्धाधिकैकादशी समद्वादशी ॥ अथ दशमीविध्धैकादशी द्वादश्यां च कियन्मात्रा विद्यते द्वादशी च त्रयोदश्यां नास्ति तदापि पारणाहे द्वादश्यभावेऽपि द्वितीयैकादश्यामुपवासः कार्यः ॥ उदयादूर्ध्वमप्येकादशीसद्भावात् ॥
ननु—कला काष्ठा मुहूर्तं वा यदि न स्यात्परेऽहनि ।
द्वादश द्वादशी हन्ति त्रयोदश्यां तु पारणमिति ॥
तथा—एकादशीमुपोष्यैव द्वादश्यां पारणं स्मृतम् ।
त्रयोदश्यां न तत्कुर्यात् द्वादश द्वादशी क्षयात् ॥

इत्यादिकूर्मपुराणादिवाक्यैस्त्रयोदश्यां पारणप्रतिषेधात् कथं तस्यामुपोषणं ॥

उच्यते—दशम्यानुगता यत्र तिथिरेकादशी भवेत् ।
तत्रापत्यविनाशं च परेत्य नरकं व्रजेत् ॥

[३६३] तथा—दशमीशेषसंयुक्ता गान्धार्या समुपोषिता ।
तस्याः पुत्रशतं नष्टं तस्मात्तां परिवर्जयेत् ॥

इत्यादि नारदविष्णुरहस्यादिवाक्यैर्दशमीविद्धाप्रतिषेधादवश्यंभाविन्यन्यतरप्रातिषेधे त्रयोदश्यां पारणप्रतिपादकवचनानां सद्भावादुपवासे दशमीविद्धैकादशी प्रतिषिध्यते। तथा चोक्तं ॥ एकादशीमुपोष्येत द्वादशीमथवा पुनः ।
विमिश्रां वापि कुर्वीत न दशम्या युतां क्वचित् ॥
विमिश्रां द्वादश्या मिश्रितां ॥ द्वादश्यभावे त्रयोदश्यां पारणं प्रशस्तं ॥

वायुपुराणे—कलाप्येकादशी यत्र परतो द्वादशी न चेत् ।
तत्र क्रतुशतं पुण्यं त्रयोदश्यां तु पारणम् ॥

स्मृतिरपि—सर्वत्रैकादशी कुर्यात् द्वादशी मिश्रिता नरैः ।
प्रातर्भवतु वा मामाभूद्यतो नित्यमुपोषणम् ॥

प्रातः पारणे द्वादशी भवतु वा मा भवतु विद्यमानां द्वादशीमतिक्रम्य पारणं न कर्तव्यमिति रहस्यं॥ इत्यष्टमः ॥

अथ सप्तमः॥ [३६४] यदा दशमीविद्धा एकादशी द्वादश्यां च कियन्मात्रा विद्यते रात्रिशेषे च त्रयोदशी॥ तदाप्युत्तरत्र दिने प्रवृत्तत्वाद्दशमीयुता नोपोष्या तदुक्तं—

द्वादशीसंगता यत्र भवत्येकादशी कला ।

दिनक्षयेऽपि सा पुण्या न दशम्यां कथञ्चन ॥

तथा—त्रिस्पृगेकादशी यत्र तत्र सन्निहितो हरिः ।

तत्र क्रतुशतं पुण्यं त्रयोदश्यां तु पारणे ॥

अतो द्वितीयादिने उपवासः ॥ ननु—

एकादशी द्वादशी च रात्रिशेषे त्रयोदशी ।

उपवासं न कुर्वीत पुत्रपौत्रासमन्वित इति ॥

पुत्रावत उपवासानिषेधात् कथं ॥ शृणु

दिनक्षयेऽर्कसंक्रान्तौ ग्रहणे चन्द्रसूर्ययोः ।

उपवासं न कुर्वीत पुत्रापौत्रासमन्वित इति ॥

मत्स्यपुराणदृष्ट्या संक्रान्त्यादेः साहचर्याद्दिनक्षयनिमित्तोपवासो गृहीणां निषिध्यते ॥ न नित्यैकादशीनिमित्त इति कूर्मपुराणादिषु त्रिस्पृशायां फलाधिक्यमिति ॥

यत्तु—एकादशी यदा विद्धा द्वादशी च क्षयं गता ।

क्षीणा सा द्वादशी ज्ञेया नक्तं तत्र विधीयते ॥

इति नक्तविधिवचनं तदुपवासा समर्थं प्रति वेदितव्यं ॥

तथा—एकभक्तेन नक्तेन तथैवायाचितेन च ।

उपवासेन दानेन न निर्द्वादशिको भवेत् ॥

विद्धाधिकैकादशी ऊनद्वादशी ॥ [३६५]अथ तस्याः प्रथमाद्वितीयतृतीयभेदाः॥ यदा दशमीविद्धा एकादशी रात्रिशेषे च द्वादशी ऊनेत्यर्थः ॥ इत्येकः पक्षः ॥ उदयपर्यन्तं द्वादशी समा इत्यर्थः द्वितीयः पक्षः ॥ त्रयोदश्यां द्वादशी कियन्मात्रा विद्यते अधिकेत्यर्थः तृतीयः ॥ द्वादश्यूना वा तदादिनक्षयत्वात् सर्वेषामेव दशमीविद्धैकादश्यामुपवासः ॥

तदुक्तं पुराणे—एकादशी दशायुक्ता परतोऽपि न वर्धते ।

यतिभिर्गृहिभिश्चैव सैवोपोष्या क्षये तिथिः ॥

दिनक्षयस्पृते देवि नोपोष्या दशमीयुता । इति ॥

द्विस्पृगेकादशी यत्र तत्र सन्निहितो हरिः ।

तामेवोपवसेत्कामी सकामो विष्णुतत्पर इति ॥

दशमीं द्वादशीं च या स्पृशति साद्विस्पृगिति अनन्तभट्टे ॥ किं च ॥ उदयानन्तरमुपवासयोग्यस्य कालस्य तत्रैकादश्यभावात् ॥ उदयात्प्रागपि द्वादश्येकादशीसङ्गतत्वेन गत्यन्तराभावात् दशमीविद्धा ग्राह्या ॥

तथा चोक्तं—एकादशी न लभ्येत सकला द्वादशी भवेत् ।

उपोष्या दशमीविध्धा ऋषिरुद्दालकोऽब्रवीत् ॥

तथा—यदि दैवात्तु संसिध्येदेकादश्यां तिथित्रयम् ।

तत्र क्रतुशतं पुण्यं द्वादशी पारणे भवेत् ॥ १ ॥

अत्र द्वादशीवृध्धिभेदेऽपि दशमीविध्धोपोष्या ॥

तदुक्तं निगमे—एकादशी तृतीया च षष्ठी चैव त्रयोदशी ।

पूर्वविध्धा तु कर्तव्या यदि न स्यात्परेऽहनि ॥

[३९६] ननु—अविध्धानामलाभे तु पयोदधिफलानि वा ।

सकृदेवाल्पमश्नीयादुपवासो भवेदिति ॥

इति वचने सति कथं विध्धायामुपवासः ॥ मैवं ॥ क्षीरादिप्राशनमेकादशीव्यतिरिक्तविषयं ॥ एकादश्यां विद्धायामप्युपवासविधानात् ॥ तदुक्तं—

अविद्धानि निषेधैश्चेन्न लभ्यन्ते दिनानि तु ।

मुहूर्तैःपञ्चभिर्विध्धा ग्राह्या चैकादशी तिथिः ॥

तदर्धविद्धान्यन्यानि दिनान्युपवसेद्बुधः ।
पूर्वविद्धा न कर्तव्या षष्ठ्येकादश्यथाष्टमी ॥
एकादश्यां तु कुर्वीत क्षीयते परतो यदीति ॥

भेदत्रयं यथा ॥ विद्धोनैकादशी ऊनद्वादशी ॥ १ ॥ विद्धोनैकादशी समद्वादशी ॥ २ ॥ विद्धोनैकादशी अधिकद्वादशी ॥ ३ ॥ [३८७] अथ षष्ठो भेदः ॥ विध्धसमैकादशी अधिकद्वादशी ॥ यदा दशमीविध्धैकादशी द्वादश्यां च न विद्यते । द्वादशी च त्रयोदश्यां कियन्मात्रा विद्यते इति ॥ तदा तु यतिविषये वक्ष्यमाणशुध्धद्वादश्यभिधानवचनदर्शनेन गृहिभिः पूर्वविध्धोपोष्या॥ परत्रोदयानन्तरं कलार्धस्याप्यभावात्॥

एकादशी न लभ्येत सकला द्वादशी भवेत् ।
उपोष्या दशमीविध्धा ऋषिरुद्दालकोऽब्रवीत् ॥

निगमे—एकादशी तृतीया च षष्ठी चैव त्रयोदशी ।
पूर्वविध्धा प्रकर्तव्या यदि न स्यात्परेऽहनि ॥

अत एव—दशम्या यस्तु विध्धायामेकादश्यामुपोषितः ।
तस्यायुः क्षीयते सत्यं नारदोऽयं ब्रवीम्यहम् ॥

इत्यादिदशमीविध्धानिषेधवाक्यानि द्वितीयदिने कलार्धरूपाया अप्येकादश्याः सद्भावे वेदितव्यानि ॥

यति विषये तु—दशमीगर्भिता पूर्वा लुप्येतैकादशी परा ।
उपोष्या द्वादशी तत्र न दशम्यां कथञ्चन ॥
कलार्धेनापि विध्धास्याद्दशम्यैकादशी यदि ।
तदा ह्येकादशीं त्यक्त्वा द्वादशीं समुपोषयेत् ॥

इत्यादि वाक्यानां शेषत्वेनाग्रे ॥

शुध्दैव द्वादशी राजन् उपोष्या मोक्षकांक्षिभिः ।

[३५८] इति श्रवणादक्ताधिकरणन्यायेन मोक्षकामिनां यतीनां शुद्धद्वादश्यामेवोपवासः ॥

अतः ॥ विद्धाप्यविद्धा विज्ञेया परतो द्वादशी न चेत् ।

अविध्दापि तथा विद्धा परतो द्वादशी यदि ॥

इत्येतदपि द्वादशीवृद्धौ यतिविधवादिविषये चरितार्थमिति ॥ तस्मादत्रोक्तव्यवस्थया गृहिभिर्यतिभिश्चायं षष्ठो भेद उपावस्तव्यः ॥

| विद्धोनाएका. ऊनद्वा० | | | इमे विद्धोनाएका. समद्वादशी | | | विद्धोकादशी विद्धोनाएका. अधिकाद्वाद० | | | भेदांककोष्ठाः विद्धसम ए० ऊनद्वादशी | | | विद्धसमएका. समद्वादशी | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| र | १० | १ | र | १० | १ | र | १० | १ | र | १० | १ | र | १० | १ |
| र | ११ | ५८ | र | ११ | ५८ | चं | ११ | ५८ | र | ११ | ५९ | र | ११ | ५९ |
| चं | १२ | ५७ | चं | १२ | ६० | मं | १२ | ६१ | चं | १२ | ५८ | चं | १२ | ६० |
| ए | का. | क्ष | ० | का. | क्षय | बु | १२ | १ | ए | का | क्ष | ए | का | क्ष |
| | | | | | | ए | का | क्ष.वृ | | | | | | |
| | १ | | | २ | | | ३ | | | ४ | | | ५ | |

| विद्धसमएका० अधिकद्वादशी | | | विद्धाधिकैका० ऊनद्वादशी | | | विद्धाधिकैका. समद्वादशी. | | | विद्धाधिकैका. अधिकाद्वाद. | | | पक्षान्तरे अरुणोदयवेध. विद्धाधिकैका. अधिकद्वादशी | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| र | १० | १ | र | १० | २ | र | १० | ५९ | र | १० | २ | र | १० | ५९-१ |
| र | ११ | ५९ | चं | ११ | २ | चं | ११ | ६० | चं | ११ | २ | चं | ११ | ६० |
| चं | १२ | ६० | चं | १२ | ५७ | मं | १२ | १ | मं | १२ | ३ | मं | ११ | २ |
| मं | १२ | १ | मं | १३ | ५६ | मं | १३ | ५९ | बु | १३ | ६ | बु | १२ | ४ |
| ए | का | क्षवृ | द्वा | दशी | क्षय | द्वा | दशी | क्षय | | | | | | |
| | ६ | | | ७ | | | ८ | | | ९ | | | ९ | |

विद्धैकादशीभेदनिर्णयवाक्येषु संपादितषट्सप्तग्रन्थस्थोदाहरणांङ्कानांपरस्परवैलक्षण्येन निर्णयविरुद्धत्वं दृष्ट्वा मया निर्णयानुकूलाङ्काननुभूय तदनुसारेण कोष्ठेष्वङ्काः स्थापितास्तेषां बुद्धिभ्रमेण विरुद्धत्वं चेद्विद्वद्भिः शोधयित्वा क्षमापनीयं ॥

इति विद्धाया नवभेदाः ॥ उन्मीलिनी वृंजुलीप्रभृतयस्ते द्वादश्युपवासा न नित्यैकादश्युपवासाः ।

इति एकादशीनिर्णयः ॥

---

## [३८८] अथ द्वादश्यां पारणानिर्णयः ॥

तावत्कालादर्शे—अज्ञानतिमिरेत्युक्त्वा समाप्योपोषणं हरेः ।
द्वादश्यां पारणं कुर्यान्नित्ये काम्येऽप्युपोषिते ॥

मंत्र—अज्ञानतिमिरान्धस्य व्रतेनानेन केशव ।
प्रसादसुमुखो भूत्वा ज्ञानदृष्टिप्रदो भव ॥ इति ॥

कात्यायनः—मंत्रं जपित्वा हरये निवेद्योपोषणं व्रती ।
द्वादश्यां पारणं कुर्याद्वर्जयित्वा ह्युपोदकीं ॥

उपोदकी शाकविशेषः ॥ विष्णुधर्मे—
द्वादश्याः प्रथमः पादो हरिवासरसंज्ञितः ।
तमतिक्रम्य कुर्वीत पारणं विष्णुतत्परः ॥

आद्याः पञ्चदश नाडिकाः प्रथमः पादः ॥

कूर्मपुराणे—एकादशीमुपोष्यैव द्वादश्यां पारणं स्मृतम् ।
त्रयोदश्यां न तत्कुर्यात् द्वादश द्वादशी क्षयात् ॥

विष्णुरहस्ये—पारणं तु न कर्तव्यमुपोष्यैकादशीमिह ।

त्रयोदश्यां नरैर्जातु नित्यं धर्ममभीप्सुभिः ॥

४०० स्मृत्यन्तरे—दशम्यानुगता हन्ति द्वादशद्वादशीफलम् ।

धर्मापत्यं तथायूंषि त्रयोदश्यां तु पारणम् ॥१॥

इति त्रयोदशीपारणनिषेध इति चेत् उच्यते ॥ त्रयोदशीपारणनिषेधवचनानि सामान्यशास्त्राणि त्रयोदशीपारणविधिभिर्विशेषविषयैर्बाध्यन्ते ॥ यथा अग्नीषोमीयपशुहिंसाविधिना एवं सामान्यहिंसानिषेधशास्त्रं ॥ यदा तु पारणाहे द्वादशी विद्यते तदैकादश्युपवासिनां द्वादश्यतिक्रमे दोषः॥ तदुक्तं—यदि किञ्चित्त्रयोदश्यां द्वादशी चोपलभ्यते ।

द्वादश्यां पारयेत्तत्र वर्जयित्वा त्रयोदशीम् ॥

महाहानिकरी ह्येषा द्वादशी लङ्घिता नरैः ।

करोति धर्महरणमस्नाते च सरस्वती ॥

यथा सरस्वती अस्नात्वा लङ्घिता धर्महरणं करोति ॥ एवं पारणे द्वादशी अतिक्रमिता च ॥

एकादश्यामुपोष्यैव द्वादश्यां पारणं स्मृतमिति वचनात् ॥

४०१ स्कन्दपुराणे—यदाभवेदतिस्वल्पा द्वादशी पारणादिने ।

उषः काले द्वयं कुर्यात्प्रातर्माध्यान्हिकं तथा ॥

इति वचनात्स्वल्पद्वादश्यां भुज्यपकर्षे प्रातर्माध्यान्हिकयोः कर्मणोरपकर्षस्तदन्तन्यायेन ॥ तथा तिष्ठन्तं पशुं प्रयजन्तीत्यनेन प्रयाजापकर्षवत् ॥

तदुक्तं गरुडपुराणे—

यदा स्वल्पा द्वादशी स्यादपकर्षो भुजेर्भवेत् ।

प्रातर्माध्यान्हिकस्यापि तत्रस्यादपकर्षणम् ॥

एतदपि स्मृत्यन्तरे—

एतस्मात्कारणाद्विप्रः प्रत्यूषे स्नानमाचरेत् ।
पितृतर्पणसंयुक्तमल्पा चेद्द्वादशी भवेत् ॥
अल्पायामपि विप्रेन्द्रा द्वादश्यामरुणोदये ।
स्नानार्चनक्रिया कार्या जपहोमादिसंयुता ॥

यदा त्वतीवाल्पा द्वादशी तदा तामतिक्रमेत् ॥ उक्तं च ॥

कलाद्वयं त्रयं वापि द्वादश्याः समतिक्रमेत् ।
एकादशीमुपोषित्वा तत्र धर्मफलं व्रजेत् ॥

प्राप्नुयादित्यर्थः ॥ स्वल्पद्वादश्यां पारणासंभवकाले वाऽद्भिः पारणं कृत्वा नित्यकर्म कुर्यात् ॥ तदुक्तं कात्यायनेन ॥

सन्ध्यादिकं भवेन्नित्यं पारणं तु निमित्ततः ।
आद्भिस्तु पारयित्वाथ नैत्यिकान्ते भुजिर्भवेत् ॥
४०२ संकटे विषमे प्राप्ते द्वादश्यां पारयेत्कथम् ।
आद्भिस्तु पारणं कृत्वा पुनर्भुक्तं न दोषकृत् ॥

इदमत्र सूचितं भवति ॥ एकस्य कर्तुरेकस्मिन्दिने भोजने उपवासे च कर्तव्ये भुजिकार्येऽ पोश्नाति ॥ तेनाशितमनशितं च भवति ॥ इति उदकविधानात् भुजिक्रियाकार्यसिद्धिरुपवाससिद्धिश्चेति ॥ तत्राद्भिः पारणे भुजिक्रियासिध्धिर्नित्यकर्मानुष्ठानार्थं अनशनसिध्धिश्चेति वेदितव्यं ॥ अथ स्वतंत्रद्वादशीव्रतोपवासिनां सत्यामपि द्वादश्यां तामतिक्रम्य त्रयोदश्यां पारणं ॥

तिथिनक्षत्रनियमास्तिथिभान्ते च पारणम् ।

इति तिथ्यन्ते पारणविधानात् ॥ इति ॥

कृतेऽचलद्विवेदेन ग्रन्थे निर्णयदीपके ।
सपारणा च निर्दिष्टा सभेदैकादशीतिथिः ॥

## अथ महाद्वादशीनिर्णयः ॥

४०३ अथ अष्टौमहाद्वादश्यो ब्रह्मवैवर्त्तात् ॥

उन्मीलिनी वृंजुली च त्रिस्पृशा पक्षवर्द्धिनी ।
जया च विजया चैव जयन्ती पापनाशिनी ॥
द्वादश्योऽष्टौ महापुण्याः सर्वपापहराः स्मृताः ।
तिथियोगेन जायन्ते चतस्रश्च परास्तथा ॥
नक्षत्रयोगात्प्रबलं पापं प्रशमयन्ति ताः ।
एकादशी तु संपूर्णा वर्धते पुनरेव सा ॥
उन्मीलिनी भृगुश्रेष्ठ कथिता पापनाशिनी ।
द्वादश्यामुपवासस्तु द्वादश्यामेव पारणम् ॥
वृंजुली नाम सा प्रोक्ता हत्यायुतविनाशिनी ।
अरुणोदयमारभ्य द्वादशी सकलं दिनम्
अन्ते त्रयोदशी चात्र त्रिस्पृशा सा हरिप्रिया ॥
कुहूराके यदा वृध्धि प्रयाते पक्षवर्धिनी ।
विहायैकादशीं तत्र द्वादशीं समुपोषयेत् ॥
पुष्यश्रवण*रेवतीरोहिणी संयुतास्तु याः ।
उपोषिताः समफला द्वादश्योऽष्टौ पृथक्पृथक् ॥

इत्यादि॥एताअष्टौमहाद्वादश्यस्तत्तदुक्तफलाभिलाषीउपवसेत्॥

## इति महाद्वादशीनिर्णयः ॥

* योगेन इति पाठान्तरम्.

४०४ अथ द्वादशीतिथिरुपवासादिषुनिर्णीयते ॥

सा पूर्वतिथ्यान्वितोपोष्या न परतिथ्यान्वितेति ॥

तदुक्तं कूर्मपुराणे—

नागविध्धा तु या षष्ठी रुद्रविध्धो दिवाकरः ।
कामविध्धो भवेद्विष्णुर्न ग्राह्यास्ते तु वासरा इति ॥

नागः पञ्चमी । रुद्रोऽष्टमी । दिवाकरः सप्तमी । कामस्त्रयोदशी । विष्णुर्द्वादशी ॥ तथा त्रयोदशीविध्धा द्वादशी निषिध्धा ॥ युग्मे त्वेकादशीद्वादश्योः साहचर्ये प्राशस्त्यमुक्तं ॥ रुद्रेण द्वादशी युक्तेति निगमे ॥

## अयं द्वादशीसामान्यनिर्णयः

## अथद्वादशीविशेषनिर्णयः ॥

---

## अथ श्रवणद्वादशी ॥

तावत्स्कन्दपुराणे—

मासि भाद्रपदे शुक्ला द्वादशी श्रवणान्विता ।
महती द्वादशी ज्ञेया उपवासे महाफला ॥ १ ॥

तथा च भविष्योत्तरे—

द्वादशी श्रवणोपेता यदा भवति भारत ।
संगमे सरितां स्नात्वा शतयज्ञाधिकं फलम् ॥
तत्र तीर्थादिकं सर्वमनन्तफलदं भवेत् । इत्युक्तं ॥

कालादर्शे—भाद्रे द्वादश्यां शुक्लायां नक्षत्रं श्रवणं यदि ।

श्रवणद्वादशी नाम सा प्रोक्ता मुनिपुङ्गवैः ॥ १ ॥
तीर्थस्नानं कृतं तत्र दानं वा देवपूजनम् ।
उपवासो जपोहोमस्तथा ब्राह्मणभोजनम् ।
श्राद्धाद्यपि च तत्सर्वमनन्तफलदं भवेत् इति ॥

[४०५]विष्णुधर्मोत्तरे रामं प्रति शङ्करः ॥

या राम श्रवणोपेता द्वादशी महती तु सा ।
तस्यामुपोषितः स्नातः पूजयित्वा जनार्दनम् ॥
प्राप्नोत्ययत्नाद्धर्मज्ञ द्वादश द्वादशीफलम् ।

तथा—बुधश्रवणसंयुक्ता सा चैव द्वादशी भवेत् ॥
अतीव महती तस्यां सर्वं कृतमथाक्षयम् ।
सङ्गमे सरितां स्नात्वा द्वादशीं तामुपोषयेत् ॥ इति ॥

विष्णुभक्तिचन्द्रोदयात् एवमादिवाक्येभ्यः श्रवणयुक्तद्वादश्यामुपवासः प्राप्त इति ॥ अतो यदा संपूर्णैकादशी संपूर्णा च द्वादशी तदात्वेकादश्यां पृथगुपवासः संपूर्णत्वेन प्राप्नोति ॥ द्वादश्यां पृथक् एवमुपवासद्वयं कर्तव्यं ॥ ननु अभोजनसंकल्पात्मकस्योपवासस्य पारणं भोजनं तदभावे सति व्रतान्तरे प्रारभ्यमाणे पूर्वव्रते पारणाविलोपः प्राप्नोति ॥ तस्मात्पूर्वव्रत समाप्तौ व्रतान्तरं कर्तुमयुक्तं ॥ तथा च स्मृत्यन्तरं—असमाप्ते व्रते पूर्वे नैव कुर्याद्व्रतान्तरम्। इतिवचनात्॥

कथं व्रतान्तरारंभः स्यादिति चेच्छृणु ॥ [४०६]उभयोर्व्रतयोरेकदैवत्वादसमाप्तेऽपि पूर्वव्रते व्रतान्तरारंभे भाविष्योत्तरोक्तेन वचनेन पूर्वव्रतस्य पारणाविधिलोपलक्षणो दोषो न भवति ॥ तद्यथा ॥

एकादशीमुपोष्यैव द्वादशीं समुपोषयेत् ।
न चात्र विधिलोपः स्यादुभयोर्देवता हरि ॥

रित्यभिधानात्तथा ॥ श्रवणद्वादशीमुपक्रम्य विष्णुरहस्ये—

द्वादश्यामुपवासोऽत्र त्रयोदश्यां तु पारणम् ।
निषिद्धमपि कर्तव्यमाज्ञेयं पारमेश्वरी ॥

अथ उपवासद्वयं कर्तुमशक्तः श्रवणद्वादश्युपवासं कुर्यात् ॥ तेन पूर्वोपवासस्यापि फलं प्राप्नुयात् ॥ तदुक्तं पुराणान्तरादनन्तभट्टेन—

एवमेकादशीं मुक्त्वा द्वादशीं समुपोषयेत् ।
पूर्वोपवासजं पुण्यं नरः प्राप्नोत्यसंशयम् ॥

[४०७] किं च ॥ उपवासासमर्थस्य नित्येऽप्येकस्मिन्नेकादश्युपवासे नक्तादिकं विहितं ॥

एकभक्तेन नक्तेन क्षीणवृद्धातुरः क्षिपेत् । इति ॥

तर्ह्युपवासद्वयासमर्थं प्रति किमु वक्तव्यमिति ॥ अथ यस्तूपवासद्वयासमर्थः स्वीकृतैकादशीव्रतः सत्वेकादशीमुपोष्य श्रवणान्वितायां द्वादश्यां पारणं कुर्यात् ॥
तदुक्तं मत्स्यपुराणे—

द्वादश्यां शुक्लपक्षे तु नक्षत्रं श्रवणं यदि ।
उपोष्यैकादशीं पुण्यां द्वादश्यां पूजयेद्धरिम् ॥ इति ॥

दीपिका—अथात्रव्रतो

नन्दायां समुपोष्यतां श्रुतिहरौ भुञ्जीत विष्णवर्चकः ।

नन्दायामेकादश्यां श्रुतिहरौ श्रवणयुक्तद्वादश्यां भुञ्जीतेत्यर्थः ॥ एतदेकादशीव्रतसिद्ध्यभिप्रायपरं ॥ अथ यदैका-

दश्यां द्वादशीयोगः श्रवणयोगो वा भवति तदाकेनोपवासेनै-
कादश्युपवासो द्वादश्युपवासश्च सिध्यति ॥ [४०८] तदुक्तं
विष्णुधर्मोत्तरे—एकादशी द्वादशी च वैष्णव्यमपि तत्र चेत् ।
तद्विष्णुशृङ्खलं नाम विष्णुसायुज्यकृद्भवेत् ।
वैष्णव्यं श्रवणं ॥ मत्स्यपुराणेऽपि—

द्वादशी श्रवणर्क्षं च स्पृशेदेकादशीं यदि ।
स एव वैष्णवो योगो विष्णुशृङ्खलसंज्ञितः ॥
तस्मिन्नुपोष्य विधिवन्नरः प्रक्षीणकल्मषः ।
प्राप्नोत्यनुत्तमां सिध्दिमपुनर्वृत्तिदुर्लभाम्॥ इति ॥

अत्रोपवासद्वयसिध्दिर्द्वादश्यनन्तरपारणे कृते वेदितव्या ॥
यतः—सांयोगिके व्रते प्राप्ते यत्रैकोऽपि वियुज्यते ।
तत्रैव पारणं कुर्यादेवं वेदविदो विदुरिति ॥
व्रतखण्डोदाहृतवचनात्—
ऋक्षान्ते पारणं कुर्याद्विना श्रवणरोहिणी मिति ॥

श्रवणमध्ये पारणविधानादिति ॥ अथेदं श्रवणद्वादशीव्र-
तं श्रवणयुक्तायामेकादश्यामपि कार्यं ॥ तथा चोक्तं
श्यामायनेन—

[४०९] याः काश्चित्तिथयः प्रोक्ताः पुण्या नक्षत्रयोगतः ।
तास्वेव तद्व्रतं कुर्याच्छ्रवणद्वादशीं विना ॥

याः काश्चित्तिथयो येन केनचिन्नक्षत्रविशेषयोगेन पुण्याः
प्रोक्तास्तत्तन्नक्षत्रयुक्तासु तास्वेव तद्व्रतं कुर्यान्नतिथ्यन्तरे ॥
तन्नक्षत्रयुक्ते ॥ यथा फाल्गुनशुक्लद्वादशी पुष्यर्क्षेण युता गो-
विन्दद्वादशी नाम तस्यामुपवासव्रतं विहितं तस्यामेव कु-

र्यात् न पुष्यान्वितायामेकादश्यां ॥ सोयं श्रवणद्वादशीं वि-
ना नियमः ॥ श्रवणद्वादशीव्रतं तु श्रवणैकादश्यामपि भव-
तीत्यस्य तात्पर्यार्थः ॥ तत्प्रशंसापि भविष्योत्तरे श्रीकृष्णे-
न प्रतिपादिता ॥

एकादशी यदा च स्याच्छ्रवणेन समन्विता ।
विजया नाम सा प्रोक्ता भक्तानां विजयप्रदा ॥

नारदीये—यदा न प्राप्यते ऋक्षं द्वादश्यां वैष्णवं क्वचित् ।
एकादशी तदोपोष्या पापघ्नी श्रवणान्विता ।
उभयोर्दैवतं विष्णुः पुराणपुरुषोत्तमः ॥ इति ॥
द्वादशी श्रवणोपेता ह्येकादश्यां भवेत्तदा ।
तदन्ते पारणे सिद्धिरुपवासद्वयस्य चेति ॥

द्वितीयदिने श्रवणवृद्धौ तन्मध्ये पारणं कुर्यात् ॥ तदुक्तं
४१० विष्णुभक्तिचन्द्रे—विशेषेण महीपाल श्रवणं वर्धते यदि ।
तन्मध्ये पारणं कुर्यात्पुण्यं क्रतुशतं भवेत्॥

यच्च कुत्रचित् द्वादशी श्रवणर्क्षयुक्तायामेकादश्यामुपोषि-
तायां श्रवणर्क्षं वर्धते ॥ द्वादशी ऋक्षन्यूना भवति॥ तदा ति-
थ्यन्तो नापेक्षित इत्युक्त्वा ॥

तिथिनक्षत्रसंयोगे उपवासो यदा भवेत् ।
तावदेव न भोक्तव्यं यावदेकस्य संक्षय इति ॥

नारदीयवचनमुदाहृतं ॥ तिथिनक्षत्रसंयोगे न भोक्तव्य-
मिति वचनार्थः। वचनावतारिकायां संयोगे भोक्तव्यमित्यर्थः
प्रतिभासते इति तत्र दोषः ॥ यत्पुनस्तत्रैव

विशेषेण महीपाल श्रवणं वर्धते यदि ।

अस्योत्तरार्धं–तिथिक्षये न भोक्तव्यं द्वादशीं नैव लङ्घयेत् ॥

तदिदं तिथिनक्षत्रसंयोगे भोजनविधायकमपि ॥ नित्यैकादश्युपवासपारणाविधिपरत्वे अदुष्टं ॥ श्रवणैकादश्युपवासविहितपारणाय विधिपरत्वे तु दोषः ॥

यथा–सांयोगिके व्रते प्राप्ते यत्रैकोऽपि वियुज्यते ।

तथा–तिथिनक्षत्रसंयोगे उपवासो यदा भवेत् ।

तथा–तत्रोपोष्य तिथेस्तिथिश्रवणयोर्वांते व्रतं पारयेत् ।

इत्यादि वचनेभ्यः एकविगमे पारणाविधानाच्च ॥ किंच ॥ [४११]इदमसंबद्धमुत्तरार्धं कालनिर्णय कालादर्श दीपिकाऽनन्तभट्टव्रतकल्पविष्णुरहस्यादिष्वदर्शनात् कौतस्त्यमिति विलोकनीयं ॥

याः काश्चित्तिथयः प्रोक्ता पुण्या नक्षत्रयोगतः

ऋक्षान्ते पारणं कुर्यात् विना श्रवणरोहिणी मिति ।

इयांस्तु विशेषः ॥ श्रवणद्वादश्यां जनार्दनो नाम विष्णुः पूज्यते ॥ श्रवणैकादश्यां वामनावतार इति ॥

तथा–आभाकासितपक्षेषु मैत्रश्रवणरेवति ।

प्राप्नोति द्वादशी तत्र हरिमभ्यर्चयेन्नरः ॥

सा विष्णुशृङ्खला नाम सायुज्यफलदायिनी ।

तथा–तिथिनक्षत्रयोरत्र योगश्चैव नराधिप ।

द्विकलो यदि लभ्येत स ज्ञेयो ह्याष्टयामिकः ॥

## इति श्रवणद्वादशीनिर्णयः ॥

### [४१२] अथ त्रयोदशी ॥

कृष्ण पक्षे त्रयोदशी सा परविद्धोपोष्या ॥

तदुक्तं निगमे—षष्ठ्यष्टमी तथा दर्शः कृष्णपक्षे त्रयोदशी ।

एताः परयुताः पूज्याः पराः पूर्वेण संयुताः ।

बृहस्पतिरपि—एकादश्यष्टमी षष्ठी द्वितीया च चतुर्दशी ।

त्रयोदशी त्वमावास्या उपोष्याः स्युः परान्विताः ॥

अत्र त्रयोदशी कृष्णा अमावास्यासाहचर्यात् कृष्णत्रयोदशी परविद्धेति ॥ कालादर्शेऽप्युक्तं—

षष्ठ्यरंभा तृतीयैकादशी कृष्णत्रयोदशी ।

चतुर्थी त्ववरा युग्मेत्येताः पूज्याः परान्विताः ॥

युग्मवाक्ये त्रयोदश्यगृहीतापि दर्शितवाक्यैः कृष्णत्रयोदश्याः परविद्धाभिधानात् ॥ शुक्लत्रयोदशी पूर्वतिथ्यन्वितोपोष्येति गम्यते ॥ अत एव

नवमी दशमी शुक्ला त्रयोदश्यश्रुतिर्हरिः ।

रंभा तृतीया चेत्येता उपोष्याः पूर्वसंयुताः ॥

इति कालादर्शेऽभिहितं ॥ [४१३] ब्रह्मवैवर्तेऽपि—

त्रयोदशी प्रकर्तव्या द्वादश्या सहिता विभो ।

भूतविद्धा न कर्तव्या दर्शपूर्णा कदाचन ॥

पैठीनसिरपि—पञ्चमी सप्तमी चैव दशमी च त्रयोदशी ।

प्रतिपन्नवमी चैव कर्तव्या संमुखा तिथिः ॥

संमुखा तिथिः पूर्वविद्धेत्यर्थः ॥ एतद्वचनद्वयमपि शुक्लपक्षत्रयोदशीविषयं ॥ यतअनन्तभट्टे ॥ कृष्णत्रयोदशी

परविद्धाग्राह्येत्यभिप्राय एतद्वाक्यसमीपे चतुर्दशी स्ववेधात् पूर्वां त्रयोदशीं दूषयतीति वृद्धवसिष्ठवचनमुदाहृतं ॥

द्वितीया पञ्चमी वेधात् दशमी च त्रयोदशी ।
चतुर्दशी चोपवासे हन्युः पूर्वोत्तरे तिथीति ॥

कृष्णत्रयोदशी पूर्वविद्धोपोष्येति निःसंदिग्धं ॥ द्वितीयदिने त्रयोदश्यभावे तु ॥

एकादशी तृतीया च षष्ठी चैव त्रयोदशी ।
पूर्वविद्धा प्रकर्तव्या यदि न स्यात्परेऽहनि ॥ इतिनिगमः॥

इति त्रयोदशीसामान्यनिर्णयः ॥

---

## [४१४] अथ त्रयोदशीविशेषः ॥

अनङ्गत्रयोदशीव्रतेन वांछितार्थो जायत इत्युक्तं श्रीकृष्णेन—त्रयोदशी ह्यनङ्गाख्या सर्वाघौघविनाशिनी ।

सर्वदुष्टप्रशमनी सर्वमाङ्गल्यवर्धिनी ॥
अनङ्गेन कृता ह्येषा तेनानङ्गत्रयोदशी ।
मार्गशीर्षात्समारभ्य व्रतं कार्यं विधानतः ॥

इति व्रतविधिरतिप्रसिद्धत्वान्न लिखितः ॥ सा पूर्वविद्धोपोष्येति संवर्तेनोक्तं ॥

कृष्णाष्टमी स्कन्दषष्ठी सावित्री वटपैतृकी ।
अनङ्गत्रयोदशी रंभा उपोष्याः पूर्वसंयुताः ॥
सर्वासु त्रयोदशीष्वधिपतित्वेनाङ्गः पूजनीयः ॥

तदुक्तं ब्रह्मणा—कामः पूज्यस्त्रयोदश्यां सुरूपो जायते ध्रुवम् ।
इष्टां रूपवतीं भार्यां लभेत्कामांश्च पुष्कलान् ॥ इति ॥

इति अनङ्गत्रयोदशी ॥

---

## अथ नृसिंहत्रयोदशी ॥

गुरुवारे त्रयोदश्यां नारसिंहं प्रपूजयेत् ।

तदुक्तं नारसिंहपुराणे—

गुरुवारे त्रयोदश्यामपराण्हे जले प्लुतः ।
तर्पयित्वा देवपितृनृषींश्च तिलतण्डुलैः ॥
नारसिंहं समभ्यर्च्य यःकरोत्युपवासकम् ।
स तु पापविनिर्मुक्तो विष्णुलोके महीयते ॥
इदं पक्षविशेषानुपादानादुभयोः पक्षयोः साधारणं ॥

कालविशेषग्रहणादपराण्हव्यापिनी तिथिर्ग्राह्येति ॥

## इति नृसिंहत्रयोदशी ॥

---

## [४१५] अथ शनित्रयोदशी ॥

सौरपुराणे व्यास उवाच—

मन्दवारयुता पुण्या शुक्लपक्षे त्रयोदशी ।
तस्यामुपोष्य विधिवत्संपूज्य गिरिजापतिम् ॥
ब्रह्महत्यादिभिः पापैर्मुक्तो भवति मानवः ॥ इति ॥

तथा कूर्मपुराणे—

त्रयोदश्यां तथा रात्रौ सोपवासस्त्रिलोचनम् ॥
दृष्ट्वेशं प्रथमे यामे मुच्यते सर्वपातकैः ॥ इति ॥

इदं त्रयोदशी साधारणं ॥ विशेषानुक्तत्वात् ईशं संपूज्य
नमस्काष्टकं कृत्वा जप्त्वा पूजां समाप्य च ।
वृषराजं समभ्यर्च्य वृषमंत्रेण मंत्रवित् ॥

मंत्रः—धर्मस्त्वंवृषरूपेण गवामानन्दकारकः ।
अष्टमूर्तेरधिष्ठानमतः पाहि सनातन ॥
पृथिव्यां यानि तीर्थानि सागरान्तानि यानि च ।
अण्डमाश्रित्य तिष्ठन्ति प्रदोषे गोवृषस्य च ।
स्पृट्वा तु वृषणौ तस्य शृङ्गमध्यं विलोक्य च ॥
पुच्छं च ककुदं चैव सर्वपापैः प्रमुच्यते ॥
एवं संवत्सरं कुर्यात्त्रयोदश्यामिदं व्रतम् ।
मन्दवारेण वा युक्तां यथेष्टं प्राप्नुयात्फलम् ॥ इति ॥

इति शनित्रयोदशी ॥

---

## [४१६]अथ भाद्रपदकृष्णत्रयोदशी युगादिः ॥

तदुक्तं—शुक्ला तृतीया वैशाखे प्रेतपक्षे त्रयोदशी ।
तथा—कलिः कृष्णत्रयोदश्यां नभस्ये मासि निर्गतः ।
सा नक्षत्रादि योगविशेषे गजच्छायेति ॥
यदेन्दुः पितृदैवत्ये हंसश्चैव करे स्थितः ।
त्रयोदशी गजच्छाया श्राद्धे पुण्यैरवाप्यते ॥

इन्दुः सोमः । पितृदैवत्यं मघा । हंसः सूर्यः । करो हस्तः ।
अत्र घृतमधुयुक्तेन पायसेन श्राद्धं कुर्यात् ॥ तथा पितृगाथा ॥
अपि नः सकुले जातो यो नोदद्यात्त्रयोदशीं ॥
पायसं मधुसर्पिभ्यां वर्षासु च मघासु च ।
त्रयोदश्युक्तव्रतविशेषाणि व्रतकल्पादवगन्तव्यानीति अत्र विशेषः ॥

नभो वाथ नभस्यो वा मलमासो यदा भवेत् ।
सप्तमः पितृपक्षः स्यादन्यत्रैव तु पञ्चमः ॥

पूर्वस्मिन्भाद्रपदे यद्यप्यपरपक्षत्रायोदशीनिमित्तश्राद्धं न-भवेत् । तथापि युगादिनिमित्तं भवत्येव ॥

मन्वादौ च युगादौ च तन्मासोरुभयोरपि ।

इति वचनात् ॥ यत्तु—

दशाहरासु नोत्कर्षश्चतुर्ष्वपि युगादिषु ।

इदं व्यवस्थापितमक्षयतृतीयानिर्णये ॥

## इति त्रयोदशीनिर्णयः ॥

---

कृतेऽचलाद्विवेदेन ग्रन्थे निर्णयदीपके ।
तिथिद्वयं च निर्णीतं द्वादशी च त्रयोदशी ॥

---

## [४१७]अथ चतुर्दशी निर्णीयते ॥

शुक्ला चतुर्दशी परविद्धोपोष्या ॥ इति तदुक्तं निगमे—

शुक्लपक्षेऽष्टमी चैव शुक्लपक्षे चतुर्दशी ।
अमावास्या तृतीया च ता उपोष्याः परान्विताः ॥

अत्र चतुर्दशी शुक्लेति कालादर्शे व्याख्यातं ॥ चतुर्दश्या च पूर्णिमेति युग्मवाक्येनापि शुक्लायाः परविद्धाभिधानात् ॥ कृष्णा चतुर्दशी पूर्वविद्धा ग्राह्येति ॥ तदुक्तं गार्ग्येण—

कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी ।
पूर्वविद्धा प्रकर्तव्या परविद्धा न कस्यचित् ॥

स्कन्दपुराणेऽपि—कृष्णाष्टमी चतुर्दशी सावित्री वटपैतृकी ।
पूर्वविद्धा प्रकर्तव्या ........................................

इत्यादिवाक्यैः कृष्णा पूर्वविद्धाभिहितेति ॥ नक्तैकभक्तादिषु तत्तद्व्रतकालव्यापिनीति ॥

इति चतुर्दशी सामान्यनिर्णयः ॥

---

४१८ अथ शिवरात्रिनिर्णीयते ॥

तद्व्रतकालस्तूक्तो विश्वरूपेण—

माघफाल्गुनयोर्मध्ये कृष्णपक्षे चतुर्दशी ।
शिवरात्रिस्तु सा प्रोक्ता शङ्करेण महात्मना ॥
शिवयोगेन संयुक्ता रात्रिभागे चतुर्दशी ।
शिवरात्रिस्तु सा प्रोक्ता सर्वकामफलप्रदा ।

तथा—माघफाल्गुनयोर्मध्ये यस्माच्छिवचतुर्दशी ॥
अनङ्गेन समायुक्ता कर्तव्या सा सदा तिथिः ।

अनङ्गस्त्रयोदशी ॥

बृहद्यमः—श्रावणी दुर्गनवमी तथा दूर्वाष्टमी च या ।
पूर्वविद्धा तु कर्तव्या शिवरात्रिर्बलेर्दिनमिति ॥

अनेन च चतुर्दशी शुक्लापि या शिवरात्रिः सा पूर्वविद्धोपावसनीयेति विधीयते ॥ आचारातिलके त्वेतद्विरुद्धवचनं दृश्यते ॥

माघफाल्गुनयोर्मध्ये यस्माच्छिवचतुर्दशी ।
सापि दर्शयुता कार्या अन्यथा निष्फला भवेदिति ।

परविद्धोक्ता ॥ अत्र पूर्वविद्धा परविद्धामात्रेऽतिप्रसङ्गात् पुराणाद्युक्तकालविशेषालंबनेन निर्णीयते ॥ कालविशेषाभिधानमुक्तं ॥ शिवपुराणे–

प्रदोषव्यापिनी ग्राह्या शिवरात्रिः शिवप्रिया ।
रात्रौजागरणं यस्मात्तस्मात्तां समुपोषयेत् ॥

इति वचनात्पूर्वविद्धा परविद्धा वा या प्रदोषव्यापिनी सैवोपोष्या ॥ प्रदोषपरिमाणमुक्तं स्कन्दपुराणे–

[४१९] त्रिमुहूर्तः प्रदोषः स्याद्रवावस्तं गते सतीति ।

शिवरात्रिमुपक्रम्य विश्वरूपोऽपि–

दिवाव्रते दिवा ग्राह्या तिथिरौदयिकी द्विजः ।
निशाव्रतेषु सर्वेषु कर्तव्या या निशामुखे ॥

निशामुखे प्रदोषे पूर्ववचनानुरोधात् ॥ ननु–

मनु–अर्धरात्रात्पुरस्ताच्चेज्जययोगो यदा भवेत् ।
पूर्वविद्धा प्रकर्तव्या शिवरात्रिः शिवप्रिया ॥

इत्यनेन कालनिर्णयोदाहृतेन वचनेन प्रदोषकालादूर्ध्वतरकाले त्रयोदशीप्रवृत्तौ चतुर्दशीनिमित्तोपवासविधिदर्शनात् ॥ कथं प्रदोषव्यापिनी ग्राह्येति चेत् शृणु ॥ अनेनापि प्रदोषान्विता विधीयते ॥ कथं ॥ अर्धरात्रात्पुरस्ताच्चेदित्यत्र रात्रेरर्धात् अर्धं रात्रमिति विग्रहे एकस्यार्धशब्दस्य लोपेन समासे अर्धात्पुरस्तात्प्रथमयामे त्रयोदशीचतुर्दश्योर्योगो यदा स्यात्तदा त्रिमुहूर्तात्मके प्रदोषे चतुर्दशी प्रदोषान्वितापि भवति प्रदोषव्यापिनीविधायकवचनमप्यनुगृहीतं भवति च ॥ प्रदोषव्यापिनी ग्राह्येति वचनान्यथानुपपत्त्या एकार्धपदलो-

पीसमास आश्रीयत इति [४२०] किं च ॥ अर्धरात्रात्पुरस्तात् अस्यवचनस्य मुख्यार्थाश्रयणे द्वितीयदिनेऽवश्यं चतुर्दश्याः प्रदोषव्यापित्वसद्भावात् ॥

विधिवाक्यसहस्रेभ्यः कालव्याप्तिर्बलीयसी ।

इत्यनेन प्रदोषकालव्यापिन्याः द्वितीयाया विधायकेन मुख्यार्थोबाधितः स्यात्॥ अतो लोपलक्षणाश्रीयते॥ मुख्यार्थबाधे अन्योऽर्थो लक्ष्यते ॥ सा लक्षणेति लाक्षणिकोग्दारः ॥ दीपिका कारेण यथा श्रुतवचनानुरोधेन वृत्तं निबद्धमिति न दोषस्तस्य ॥ अस्मिन्विषये पूर्वविद्धावाक्यानि स्कन्दपुराणात्

कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रिश्चतुर्दशी ।
एता पूर्वयुताः कार्यास्तिथ्यन्ते पारणं भवेत् ॥

तथा चानन्तः—जयन्ती शिवरात्रिश्च कार्ये भद्राजयान्विते ।
कृत्वोपवासस्तिथ्यन्ते तदा कुर्याच्चु पारणम् ।

भद्रा सप्तमी । जया त्रयोदशी । इत्यादीन्युपपन्नानि ॥ यदा चात्यन्ततिथिक्षये दिनद्वयेऽपि प्रदोषव्यापिनी तदा पूर्वोपोष्या ॥ तदुक्तं ब्रह्मवैवर्ते—

सूर्येऽस्ते नवनाडीषु भूतविद्धा त्रयोदशी ।
शिवरात्रिव्रतं तत्र कुर्याज्जागरणं तथेति ॥

नवघटीपर्यन्तं त्रयोदशीत्यर्थः ॥

[४२१] यत्तु—भवेद्यत्र त्रयोदश्यां भूतव्याप्ता महानिशा ।
शिवरात्रिव्रतं तत्र कुर्याज्जागरणं तथेति ॥

तदापि—महानिशा तु सा प्रोक्ता मध्यस्थं प्रहरद्वयमिति ॥ स्मृत्यन्तरवचनात् ॥ अत्रोदाहृतेन ब्रह्मवैवर्त्तवचनेन

समानार्थमिदं वचनद्वयं ॥ अर्धरात्रात्पुरस्ताच्चेतत्सर्वं व्याख्यातं चेतीमानि वचनानि तिथिक्षयविषये वेदितव्यानि ॥ अतोऽत्यन्ततिथिक्षयवशात्परदिने वायुपुराणोक्तचतुर्नाड्यात्मकप्रदोषव्यापित्वाभावात् ॥

त्रयोदश्यस्तगे सूर्ये चतसृष्वेव नाडिषु ।
भूतविद्धा तु या तत्र शिवरात्रिव्रतं चरेदिति ॥

वायुपुराणे ॥ परदिने वृद्धौ समतायां च परैवोपोऽष्या॥ खर्वदर्पौपरौ पूज्याविति वचनात् ॥ विश्वरूपोपि—

वृद्धौ पुनश्चास्तमयाद्द्वितीयेऽन्हि चतुर्दशी ।
युज्यते सह यामिन्या शिवरात्रिस्तदा परा ॥

अस्तमयादूर्ध्वं प्रदोषव्यापिनीत्यर्थः॥ यदा तु परदिने एव प्रदोषव्यापिनी न पूर्वदिने तदा परैवोपोष्या ॥ ४२२ तदुक्तं—
माघासिते भूतदिनं हि राजन् उपैति योगं यदि पञ्चदश्याः ।
जयाप्रयुक्तांनतुजातुकुर्यात्शिवस्यरात्रिंप्रियकृच्छिवस्य॥इति॥

शिवप्रियकृज्जयाप्रयुक्तां रात्रिं न कुर्यादित्यनेन त्रयोदशीसंभिन्ना यदा चतुर्दशीरात्रिर्न भवति तदा उपवासादि कर्तव्यमितिगम्यते ॥ एतच्च परदिने प्रदोषव्यापित्वे वेदितव्यं॥ तथा च आचारतिलके—

चतुर्दशी शिवा प्रोक्ता शिवो दर्शोऽभिधीयते ।
तयोर्योगः शिवोयोग शिवयोगः स उच्यते ॥

यदा च दिनद्वये चतुर्दशी प्रदोषव्यापिनी त्रयोदशी च पूर्वदिने दिनपर्याप्ता रात्रिभागे न स्यात्तदा पूर्वा ॥ तदुक्तंवाराहपुराणे—त्रयोदशी यदा देवि दिनभुक्ति प्रमाणतः।

जागरी शिवरात्रिः स्यान्निशि पूर्णा चतुर्दशी ॥

इति वचनेन ॥ किं च ॥ रात्रिभागे त्रयोदश्यानुरञ्जितत्वाभावेन चतुर्दश्याः प्रदोषात्प्रवृत्तत्वेन संपूर्णत्वात् प्रथमातिक्रमे कारणा भावाच्चेति पूर्वा ॥

निशि भ्रमन्ति भूतानि शक्तयः शूलभृद्यतः ।
अतस्तस्यां चतुर्दश्यां सत्यां तत्पूजनं भवेत्॥ इति निर्णयः ॥

---

## [४२३] अथ पारणाविचारः ॥

ननु—परदिनेऽस्तमयोर्ध्वव्यापिन्यां व्रततिथौ पूर्वविद्धोपवासे कृते व्रततिथिर्यदारात्रावास्त परदिने तदा ॥

जन्माष्टमी रोहिणी च शिवरात्रिस्तथैव च ।
पूर्वाविद्धैव कर्तव्या तिथिभान्ते च पारणम् ॥

इत्यनेन तिथ्यन्ते रात्रौ पारणं विहितं ॥ अमावास्यायां च रात्रिभोजनं निषिद्धं ॥ तदुक्तं कात्यायनेन—

भूताष्टम्योर्दिवा भुक्त्वा रात्रौ भुक्त्वा च पर्वणि ।
एकादश्यां दिवा रात्रौ भुक्त्वा चान्द्रायणं चरेदिति ॥

अतः परदिने दिवा तिथ्यन्ताभावे कथं पूर्वत्रोपवास इति चेत्सत्यं ॥ अमावास्यायां रात्रौ रागतः प्राप्तस्य भोजनस्य निषेधो न वैधस्य ॥ तिथ्यन्ते पारणं कुर्यादिति विधितः प्राप्तस्य भोजनस्य निषेधानुपपत्तिः ॥ अग्नीषोमीयहिंसावदिति ॥ [४२४] अथवा परोविधिः ॥

सात्वस्तमयपर्यन्तव्यापिनी चेत्परेऽहनि ।
दिवैव पारणं कुर्यात्पारणानैव दोषभागिति कालादर्शात्॥

यद्वा—यामत्रयोर्ध्वगामिन्यां प्रातरेवहि पारणमिति ।
अस्मिन्विषये योज्यं ॥

तिथ्यन्ते वोत्सवान्ते वा व्रती कुर्वीत पारणम् ।

इति पारणा निर्णयः

---

यत्तु वचनं—चतुर्दश्यां तु कृष्णायां फाल्गुने नित्यभोजनम् ॥
तामुपोष्य प्रयत्नेन विषयान्परिवर्जयेत् ॥

तत् कृष्णप्रतिपदादिपौर्णमास्यन्तमासाभिप्रायेण । अत एवान्यानि माघस्नानमासोपवासादीनि च व्रतानि पौर्णमास्यामेवारभ्यन्ते इति निर्णयः ॥

---

## अथ चतुर्दशी सामान्या निरूप्यते ॥

लिङ्गार्चनं रुद्रजपो व्रतं शैवं दिनत्रयम् ।
वाराणस्यां च मरणं मुक्तिरेषा चतुर्विधा ॥

इत्युक्त्वोक्तं

[४२५] एकादश्यष्टमी चैव पक्षयोश्च चतुर्दशी ।
शिवस्य तिथयः प्रोक्ता मुनिभिः शौनकादिभिः ।
तासामाद्यामुपवसेद्दिवा नाद्यात्तथान्त्ययोः ।

आद्यामेकादशीमुपवसेत् ॥ अन्त्ययोरष्टमीचतुर्दश्योर्दिवा नाद्यात् ॥

तदुक्तं—अष्टम्यां च चतुर्दश्यां दिवा भुक्त्वैन्दवं चरेत् ।
एकादश्यां दिवा रात्रौ भुक्त्वा चैव तु पर्वणि ॥

ऐन्दवं चान्द्रायणं ॥ पद्मपुराणे—

चतुर्दश्यां तु नक्ताशी समास्ते गोयुगप्रदः ।
स शैवं पदमाप्नोति ज्ञेयं त्रैयम्बकं व्रतम् ॥

तथा—कार्तिके भौमवारेण चित्रा कृष्णा चतुर्दशी ।
तस्यां भूतेशमभ्यर्च्य गच्छेच्छिवपुरं नर इति ॥

तथा—नक्तं प्रेतचतुर्दश्यां यः कुर्याच्छिवतुष्टये ॥
न तत्क्रतुशतेनापि प्राप्यते पुण्यमीदृशम् ॥

भोजनं माषान्नेनेति शेषः ॥

## इति चतुर्दशीसामान्या ॥

---

## [४२६] अथ चतुर्दशी विशेषनिर्णयः ॥

## अथ नृसिंहचतुर्दशीनिर्णयः ॥

वैशाखशुक्लचतुर्दशी तत्र नृसिंहव्रतं कार्यं ॥ तदुक्तं नृसिंहपुराणे प्रल्हादनृसिंहसंवादे मद्व्रतं पापनाशनमित्युक्तं ॥

प्रल्हाद उवाच—

कस्मिन्मासे भवेदेतत्कस्मिंश्च वासरे प्रभो ।

इति पृष्टे सति नृसिंहः—

वैशाखे शुक्लपक्षे तु चतुर्दश्यां समाचरेत् ।
मज्जन्मसंभवं पुण्यं व्रतं पापप्रणाशनम् ॥
स्वातिनक्षत्रयोगेन शनिवारे तु मद्व्रतम्
सिद्धियोगस्य संयोगे वणिजे करणे तथा ॥

पुंसां सौभाग्ययोगेन लभ्यते दैवयोगतः ।
सर्वैरेतैस्तु संयुक्तैर्हत्याकोटिविनाशनम् ॥
एतदन्यतरे योगे मद्दिनं पाप नाशनम्॥
केवलं हि प्रकर्तव्यं मद्दिनं फलकांक्षिभिः ॥
४२७तथा–वर्षे वर्षे तु कर्तव्यं मम संतुष्टिकारणं ।
मयागुप्तमिदं श्रेष्ठं मानुषैर्भवभीरुभिः ॥
येन वै क्रियमाणेन सहस्रद्वादशीफलम् ।
जायते न मृषा वच्मि मानुषाणां महात्मनां ॥
विज्ञायमद्दिनं यस्तु लङ्घयेत्स तु पापभाक् ।
उपवासाकरणेन उल्लङ्घयेदित्यर्थः ॥
एवं ज्ञात्वा प्रकर्तव्यं मद्दिने व्रतमुत्तममिति ।
व्रतविधिर्नृसिंहपुराणादवगन्तव्य इति ॥ इदं व्रतमुपवासरूपं ॥ यतोऽग्रे उपवासमंत्रः श्रूयते
नृसिंह देवदेवेश तव जन्मदिने शुभे ।
उपवासं करिष्यामि सर्वभोगविवर्जितः ॥ इति ॥
इयं शुक्ला चतुर्दशी॥ चतुर्दश्या च पूर्णिमा इति युग्मवाक्यात् परविद्धोपवासे ग्राह्या ॥
तथा च ब्रह्मवैवर्ते–शुक्लपक्षेऽष्टमी चैव शुक्लपक्षे चतुर्दशी ।
परा उपोष्या इति सामान्यचतुर्दशीनिर्णयोक्तमत्रानुसन्धेयं ॥

इति नृसिंहचतुर्दशीनिर्णयः

४२८ अथ अनन्तचतुर्दशी

अथ भाद्रपदशुक्लचतुर्दश्यामनन्तव्रतं कार्यं ॥
तेन सर्वपापक्षयो जायते ॥

तदुक्तं व्रतखण्डे—अनन्तव्रतमस्त्यन्यत्सर्वपापहरं नृणाम् ।
शुक्लपक्षे चतुर्दश्यां मासि भाद्रपदे भवेदिति ॥

शीलयानन्तव्रतमाचरितमित्याख्यायिकामुखेन विधिरपि तत्रैवोक्तः ॥

यथा—कौण्डिन्यस्तु विवाह्यैतां पथि गच्छन् शनैःशनैः ।
शीलां सुशीलामादाय नवोढां गोरथेन हि ।
मध्यान्हे भोज्यवेलायां समुत्तीर्य सरित्तटे ॥
ददर्श शीला सा स्त्रीणां समूहं रक्तवाससम् ।
चतुर्दश्यामर्चयन्तं भक्त्या देवं जनार्दनम् ॥
उपगम्य शनैः साथ पप्रच्छ स्त्रीकदंबकम् ।
आर्याः किमेतन्मे ब्रूत किन्नाम व्रतमीदृशम् ॥

ता ऊचुः—अनन्तव्रतमेतद्धि व्रतेऽनन्तस्तु पूजयेत् ।
शीलोवाच—विधानं कीदृशं तत्र किं दानं कोऽत्र पूज्यते ॥
४२९ स्त्रिय ऊचुः—शीले सदन्नप्रस्थस्य पुन्नाम्नःसंस्कृतस्य च ।
अर्धं विप्राय दातव्यमर्धमात्मनि भोजनम् ॥
कर्तव्यं तत्सरित्तीरे विधिनानेन भामिनि ।
स्नात्वानन्तं समभ्यर्च्य गन्धलेपेन पुष्पकैः ॥
तस्याग्रतो दृढं सूत्रं कुङ्कुमाक्तं सुदोरकम् ।
चतुर्दशग्रन्थियुतं वामे करतले न्यसेत् ॥

तत्र मंत्रः—अनन्तसंसारमहासमुद्रे मग्नान्समभ्युद्धर वासुदेव ।

अनन्तरूपी विजयो जयश्च अनन्तसूत्राय नमो नमस्ते॥

अनेन दोरकं बध्वा भोक्तव्यं स्वस्थमानसैः ।
भुक्त्वा चान्ते व्रजेद्वेश्म भद्रे उक्तं व्रतं तव ॥
सापि चक्रे व्रतं शीला करे बध्वा सुदोरकम् ।
पाथेयार्धं तु विप्राय दत्वा भुक्तं स्वयं तथा ॥
पुनर्जगाम संहृष्टा गोरथेन पतेर्गृहामिति ।

एकभक्तेनानन्तव्रतं कार्यमित्युक्तं युधिष्ठिरं प्रति श्रीकृष्णेन भविष्योत्तरे ॥ तद्यथा—

शुक्लायां च चतुर्दश्यां मासि भाद्रपदे नृप ।
एकभक्तेन नियमं कृत्वा भक्तिसमन्वितः ॥
स्नात्वा नद्यां देवखाते तीर्थे प्रस्रवणे तथा । इत्यादि॥
कृतेऽनन्तव्रते चैव विष्णुलोके महीयते ॥

इति व्रतविधिः ॥ [430] अथ अनन्तव्रतनिर्णयः प्रस्तूयते ॥ भाद्रपद शुक्लचतुर्दशी अनन्तचतुर्दशी ॥ सा परविद्धापि मध्यान्हव्यापिनी ग्राह्या ॥ तदुक्तं भविष्योत्तरे—

यथा भाद्रपदस्यान्ते चतुर्दश्यां द्विजोत्तम ।
पौर्णमास्या समायोगे व्रतं चानन्तकं चरेत् ॥

एतद्व्रतं मध्यान्हे भोज्यवेलायामपि व्रतविधिनोक्तलिंङ्गादग्रे भविष्योत्तरोक्तेन श्रीकृष्णवचनेनैकभक्तोपदेशाच्च एकभक्तव्रतं कुर्यादिति ॥ यथा ॥

अक्ताः शर्करा उपदधातीत्यत्राग्ने तेजो वै घृतमितिश्रवणात् घृतेनाक्ता इति तद्वत् एकभक्तं कार्यं ॥ एकभक्तं तु मध्यान्हव्यापिन्यां तिथौ कार्यं ॥ तदुक्तं

स्मृति संग्रहे—

मध्यान्हव्यापिनी या स्यादेकभक्ते तु सा तिथिरिति।

दिनद्वये मध्यान्हव्यापिनी चेत्परा कार्या ॥

शुक्लपक्षेऽष्टमी चैव शुक्लपक्षे चतुर्दशी।
पूर्वविद्धा न कर्तव्या कर्तव्या परसंयुता ॥

इति निगमवाक्यात् ॥ तथा ॥

मुहूर्तमपि चेद्भाद्रे पूर्णिमायां चतुर्दशी।
संपूर्णां तां विदुस्तस्यां पूजयेद्विष्णुमव्ययम् ॥

इत्यनेन स्कन्दोक्तवचनेन मध्यान्हे मुहूर्तमात्रं चतुर्दशी यदा तदा तस्यां नियमविधिः ॥ त्रयोदशीयोगनिवृत्तये यदा पूर्वदिने मध्यान्हयोगिनी न परदिने तदा पूर्वा कार्या ॥

विधिवाक्यसहस्रेभ्यः कालव्याप्तिर्बलीयसी।

स्मृतिवचनात् ॥ [431] ननु—पूर्वदिने मध्यान्हव्यापिन्यां व्रते क्रियमाणे ॥

प्रातरारभ्य मतिमान् कुर्यान्नक्तव्रतादिकम्।
नापराण्हे न मध्यान्हे पितृकालौ हि तौ स्मृताविति॥

दक्षवचनात् ॥ प्रातर्व्रततिथ्यभावे प्रारंभः कथमिति दोषः ॥ सत्यं ॥ प्रधानतानुरोधेन प्रातस्तिथ्यभावेऽपि प्रारंभे दोषाभाव इति ॥ यथा ॥ अग्नीषोमीयः पशुः ॥ यइष्ट्या पशुना सोमेन यजेत सोऽमावास्यायां पौर्णमास्यां वा यजेतेति वाक्येन स यदा प्रावृषि प्रधानभूतः क्रियते तदा तत्रानुष्ठीयते ॥ यदा सोमाङ्गत्वेन तदा चतुर्दश्यामनुष्ठीयत एव तद्वत् ॥ तदुक्तं—अङ्गगुणविरोधे तादर्थ्यादित्याधिकरणे ॥

[४३२] यदा दिनद्वयेऽपि मध्यान्हं न प्राप्नोति तदा पूर्वा ॥
तिथ्यादौ तु भवेद्यावान्ह्रासो वृद्धिः परेऽहनि ॥
तावान्ग्राह्यः स पूर्वेद्युरदृष्टोऽपि स्वकर्मणि ॥

इति वचनात् ॥ अतो मध्यान्हव्याप्त्यनुरोधेन व्रतं कर्तव्यमिति सिद्धान्तः ॥ निर्णयामृते तु उदयकालव्यापिन्यामेतद्व्रतं सिद्धान्तितम् ॥ तन्न युक्तिसहमतिप्रसङ्गात् ॥ यत्तूक्तं ॥ मध्यान्हे भोज्यवेलायां इत्याद्युपक्रम्य विधिवाक्यानां लिङ्लोट् तव्यानामदर्शनादिति तदपि इतिहासमात्रं ॥ अत्रोत्तरं॥ यद्यपि लिङाद्यभावादविधिरिति तदा दोरकानन्तधारणादीनां विधिः केन स्यात् ॥ भवन्मते व्रतं चरेदित्यत्र प्रधानस्य पूजनस्यैव विधानात् ॥ अथ सर्वं व्रतशब्दार्थस्तदा सर्वेषां प्राधान्यापत्तिः ॥ दोरकबन्धनादिवाक्यानां विधित्वाभावे विशेषलाभः कुतो भवेत्॥ [४३३] तस्मादङ्गविशेषविध्यर्थमितिहास वाक्येषु विधिरवश्यमन्वेष्टव्यः ॥ तत्किमर्धजरतीयन्यायेन ॥ यथोक्तं ॥ शीलया मध्यान्हे प्रारब्धमिति मध्यान्हे व्रतप्रारंभापत्तिरिति तन्न पूर्वं चीर्यमाणं व्रतं दृष्टमुपजीवितं तेन शीलया गौणकाले प्रारब्धमिति स्वयमेव सूचितं यदभाणि नेदमेकभक्तव्रतं किंतु पूजाङ्गत्वेन भोजनमात्रं तदपि न चातुरीं धत्ते ॥

शुक्लायां च चतुर्दश्यां मासि भाद्रपदे नृप ।
एकभक्तेन नियमं कृत्वा भक्तिसमन्वितः ॥

इति व्रतकल्पोक्तं वचनं निन्होतुमशक्यत्वात् ॥ यन्निरूपितं अनन्तपूजनस्यैव प्राधान्यं तस्य पूर्वाण्हो वै देवाना-

मिति दैविकत्वात् पूर्वाण्ह एव पूजनं ॥ [४३४] अत्र ब्रूमः ॥ यदि पूर्वाण्हे विधितः पूजनं तर्हि मध्यान्हे चतुर्दश्यामर्चनमित्यस्य का गतिः ॥ यदुक्तं ॥ चतुर्दश्यामुपक्रम्य पूर्णिमाभागे पूजादिकमिति तत्प्रधानस्यैव कालत्यागाभिधानं मीमांसकस्य न शोभते ॥ तस्मान्मध्यान्हानुरोधेन परविद्धायां व्रतं कार्यमिति ॥ किं वा ॥ उपवासव्रतादीनां घटिकैका तथा उदिते दैवते भानावित्यादिषु या भानावुदिते द्विमुहूर्तं व्याप्नोति तस्यां दैविकं एकभक्तादिकं च कार्यमित्युक्तं निर्णयामृते तद्युक्तं ॥ तथा सत्येकभक्तादिव्रते तिथिः कर्मकालव्यापिनीति विचारस्तस्यासङ्गतः स्यादित्यलं ॥

बौद्धायनेन व्रते व्यवस्थोक्ता ॥

उदये तूपवासस्य नक्तस्यास्तमये तिथिः ।
मध्यान्हव्यापिनी ग्राह्या एकभक्तव्रते तिथिरिति ॥

## इत्यनन्तचतुर्दशीनिर्णयः ॥

---

## ॥ अथ माघचतुर्दशी ॥

[४३५] अथ माघचतुर्दश्यां देवतीर्थविशेषोपासनया पुत्रप्राप्तिः स्यात्तदुक्तं ॥ अट्टेश्वरवसिष्ठकुण्डं चोपक्रम्य हाटकेश्वरक्षेत्रमाहात्म्ये ऋषीन् प्रति सूत उवाच ॥

अट्टो नाम सुविख्यातः सर्वशत्रुनिबर्हणः ।
अट्टेश्वर इति ख्यातो येन देवोऽत्र निर्मितः ॥
सुभक्त्या येन दृष्टेन वंशोच्छित्तिर्न जायते ।

यस्तु माघचतुर्दश्यां पूजयेच्छ्रद्धयान्वितः ॥
न तस्य जायते किञ्चिद्दुःखं संतानसंभवम् ॥
तत्रैव—तथात्रास्ति शुभं कुण्डं वासिष्ठं पुत्रजन्मदम् ।
यत्र स्नाता ऋतौ नारी सद्यो गर्भवती भवेत् ॥
अमोघरेताः कान्ता च स्नानादत्र प्रजायते ।
अत्र च वसिष्ठकुण्डे ॥
दम्पत्योः स्नानमात्रेण जातोऽत्र स्यात्सुपुत्रकः ।
तस्मात्सुपुत्रकं नाम कुण्डमेतन्निगद्यते ॥
अपि वर्षशता नारी स्नात्वा कुण्डे सुतप्रदे ।
अट्टेश्वरं ततः पश्येच्छिवभक्तिपरायणा ॥
सद्यः पुत्रमवाप्नोति वंशवृद्धिकरं परमिति
नागरखण्डात् ॥ [४३६] अथ भाद्रपदकृष्णचतुर्दश्यां रामह्रदे
स्नानतर्पणादिकं अनन्तफलदं स्यात्
तदुक्तं स्कान्दे नागरखण्डे—
कृष्णपक्षे चतुर्दश्यां मासि भाद्रपदे नराः ।
तत्र रामह्रदे स्नात्वा तर्पयिष्यन्ति ये पितॄन् ॥
तेऽश्वमेधफलं प्राप्य प्रयास्यन्ति परां गतिम् ।
तथा—करिष्यन्ति च ये श्राद्धं भक्त्या शस्त्रहतस्य च
अपि प्रेतत्वमापन्नं नरके वा समाश्रितम् ॥
उद्धरिष्यन्ति ते प्रेतमपि पापसमन्वितम् ।
तस्मात्सर्वप्रयत्नेन तत्र शस्त्रहतस्य च ॥
तस्मिन्दिने प्रकर्तव्यं श्राद्धं श्रद्धासमन्वितैः ।
उपसर्गमृतानां च सर्पाग्निविषबन्धनैः ॥

तत्र मुक्तिपदं श्राद्धं दिने तस्मिन्नुदाहृतम् ।
यः पितृंस्तर्पयेत्तत्र प्रेतपक्षे जलैरपि ॥
स तेषामनृणो भूत्वा पितृलोके महीयते ।
एतद्वः सर्वमाख्यातं रामह्रदसमुद्भवम् ॥
माहात्म्यं ब्राह्मणश्रेष्ठाः सर्वपातकनाशनमिति ॥

रामह्रदमाहात्म्यं ॥

## इति चतुर्दशी निर्णयः ॥

कृतेऽचलद्विवेदेन ग्रन्थे निर्णयदीपके ।
शैवव्रतयुतो जातश्चतुर्दश्या विनिर्णयः ॥

---

## [४३७]अथ पौर्णमासी निर्णीयते ॥

पौर्णमासी तिथिरुपवासादिव्रते परतिथ्यन्वितोपोष्या सावित्रीव्रते पूर्वातिथ्यन्वितोपोष्या ॥ तदुक्तं—

सावित्र्यमा पौर्णमासी चतुर्थी गणसंज्ञिता ।
रंभा तृतीया चेत्येता उपोष्याः पूर्वसंयुताः ॥ इति ॥

सावित्रीव्रतव्यतिरिक्ता पौर्णिमा ब्रह्मवैवर्त्तेऽपि—

भूतविद्धा न कर्तव्या अमावास्या च पौर्णिमा ।
वर्जयित्वा मुनिश्रेष्ठ सावित्रीव्रतमुत्तमामिति ॥

अत एव चतुर्दश्या च पूर्णिमेति युग्ममपि सावित्रीव्रतविषयं ॥ सावित्रीव्रतव्यतिरिक्ते परविद्धा ॥ तदाह बृहस्पतिः

एकादश्यष्टमी षष्ठी पौर्णमासी चतुर्दशी ।

अमावास्या तृतीया च ता उपोष्याः परान्विताः ॥

पौर्णमास्यां यानि पूर्वविद्धा वाक्यानि तानि सावित्रीव्रतविषये योजनीयानि ॥

तथा–प्रतिपत्पञ्चमी भूतं सावित्री वटपूर्णिमा ।
नवमी दशमी चैव नोपोष्याः परसंयुता इति ॥

नक्तैकभक्तादिषु कर्मकालव्यापिनी ग्राह्या ॥

इति पौर्णमासीसामान्यनिर्णयः ॥

---

## [४३८] अथ पौर्णमासीविशेषः ॥

## ॥ अथ होलिकानिर्णीयते ॥

फाल्गुनपौर्णमासी होलिकेत्युच्यते ॥ फाल्गुन्यां प्रदोषव्यापिन्यां होलिका पूज्या ॥ तदाह याज्ञवल्क्यः ॥

सद्भावे पूर्णिमायास्तु फाल्गुने रजनीमुखे ।
होलिकां पूजयेत्प्राज्ञो नान्यथा भ्रंशशङ्कया ॥

रजनीमुखे प्रदोषे । तथा भविष्यत्पुराणे–

पूर्वाण्हे पूजयेद्देवान्मध्यान्हे च पितृंस्तथा ।
प्रदोषे पूजयेद्धोलामिति धर्मो व्यवस्थितः ॥
बालानां रक्षणं कार्यं तस्मात्तस्मिन्निशागमे इति ॥

गार्ग्यः–दृष्टे पूर्वोदिते चन्द्रे सूर्ये चास्तमुपागते ।
होलिकां तत्र कुर्वीत विधिदृष्टेन कर्मणा ॥
[४३९] ईषत्सन्ध्यामतिक्रान्तः किञ्चिदुद्भिन्नतारकः ।
विजयो नाम योगोऽयं क्षेमः सर्वार्थसाधकः ॥

सूर्येऽदृष्टे सदा पूज्या होलिका शुभदायिनी ।
नक्षत्रसहिता पूज्या पूजनीया सुसन्ध्ययेति ॥

सा यदि पूर्वस्मिन्दिवसे प्रदोषे भवति द्वितीये दिने न भवति तदा पूर्वोदाहृतवचनबलात्पूर्वदिने कर्तव्या ॥ यदा पुनर्दिनद्वयेऽपि न भवति प्रदोषे पूर्वस्मिन्दिने प्रदोषे चतुर्दशी भवति द्वितीये दिवसे तिथिक्षयवशात् प्रतिपद्भवति तदा पूर्वदिने कार्या ॥

श्रावणी दुर्गनवमी दुर्वा चैव हुताशनी ।
पूर्वविद्धा प्रकर्तव्या शिवरात्रिर्बलेर्दिनमिति

बृहद्यमवचनात् ॥ अत्र होलिकायां क्रियमाणायां विष्ट्यादि दोषाय न भवति ॥

४४० तदुक्तं गार्ग्येण—विष्टिरङ्गारकश्चैव व्यतीपातोऽथ वैधृतः ।
प्रत्यर्कं वापि नक्षत्रं मध्यान्हात्परतः शुभम् ॥

तथा भविष्योत्तरे—
रक्षाबन्धे ऋतुस्नाने कार्तिक्यां च रजोत्सवे ।
देवीपूजा प्रकर्तव्या विष्टिः श्रेष्ठा सदा भवेत् ॥
दिवाभद्रा यदा रात्रौ रात्रिभद्रा यदा दिवा ।
सा भद्रा भद्रदा यस्माद्भद्रा कल्याणकारिणी ॥

देवीपुराणेऽपि—अहं भद्रा च भद्राहं नावयोरन्तरं क्वचित् ।
सर्वसिद्धिं प्रदास्यामि भद्रायामर्चिता ह्यहम् ॥
भद्रायां विहितं कार्यं होलिकायाः प्रपूजनम् ।
करोति यदि तां त्यक्त्वा राज्यराष्ट्रक्षयो भवेत् ॥

तथा—विवादे शस्त्रसंघाते भयार्ते राजदर्शने ।

रोगार्ते चापि भैषज्ये विष्टिः श्रेष्ठा सदा भवेत् ॥

तथा—बलेश्च दीपोत्सवहोलिकासु भ्रातृद्वितीयाजयमङ्गलेषु ।
इष्टागमे भूपतिमानयोगे न चन्द्रभद्राकुलिकार्धयामाः ॥

योगयाज्ञवल्क्यः—श्रावण्यामथ वैशाख्यां होलिकापूजने तथा ।
देवीपूजासु सर्वासु विष्टिदोषो न विद्यते ॥

अत्रापरो विशेषः ॥ प्रदोषे चतुर्दशीसद्भावे च प्रदोष एव होलिकां ज्वालयेदिति न नियमः ॥ प्रदोषे पूर्णिमाया अभावे गौणकालेऽपि होलिका पूज्या ॥ तदुक्तं—

प्रदोषान्मध्यरात्रान्तं होलिकापूजनं शुभम् ।
विष्टेर्मुखं वर्जनीयं ज्ञात्वा दैवज्ञकोविदैरिति ॥

चतुर्थ्यादितिथिषु विष्टेर्मुखज्ञानप्रकारोऽभिहितो ज्योतिर्विद्भिः॥

४४१ यथा—घुजाटेणी सिते पक्षे गैछिञूढ सितेतरे ।
अक्षरैस्तिथयो ज्ञेया स्वरैस्तु प्रहरा दिशः ॥

अत्र ककारादिगणनया अक्षरसंमितेषु तिथिषु अकारादि गणिते स्वरसंख्याके प्रहरे विष्टेर्मुखं ॥ एवं पौर्णमास्याश्चतुर्थे प्रहरे विष्टेर्मुखं भवति ॥ मुखप्रमाणं घटिकाः पञ्चेति ॥ मुखं मङ्गले वर्ज्यं । उक्तं च रत्नमालायां—

स्फुटमिह परिहार्यं मङ्गलेष्वेतदेव ।

मुखादधः पुच्छम् । पुच्छप्रमाणं घटिकास्तिस्रः ॥ तत्र मङ्गलं कार्यं ॥ तदाह लल्लः—

पृथिव्यां यानि कार्याणि शुभानि त्वशुभानि च ।
तानि सर्वाणि सिध्यन्ति विष्टिपुच्छे न संशय इति ॥

मध्यरात्रादर्वाक् होलिका पूज्या ॥ ४४२

तदुक्तं स्मृत्यन्तरे—

मध्यरात्रमतिक्रम्य विष्टेः पुच्छं यदा भवेत् ।
प्रदोषे ज्वालयेद्वन्हि सुखसौभाग्यदायकमिति ॥

यत्तु—भद्रायां दीपिता होळी राष्ट्रभङ्गं करोति वै ।
नगरस्य च नैवेष्टं तस्मात्तां परिवर्जयेत् ॥

तथा—भद्रायां द्वे न कर्तव्ये श्रावणी फाल्गुनी तथा ।
श्रावणी नृपतीन्हन्ति ग्रामं दहति फाल्गुनी ॥

तदपि द्वितीयदिनप्रदोषे फाल्गुनीसद्भावे पूर्वत्र निषेधकं ॥
विष्टिमुखज्ञानार्थं घुजाटेणीति श्लोकोक्तरीत्या स्पष्टकोष्ठकं ॥

| | आसां तिथीना मुत्तरदले विष्टिः | तिथिवर्णाः स्वर सहिताः | विष्टिमुखं घ. ५ महराः | आसांतिथीनां पूर्वदले विष्टिः | तिथिवर्णाः स्वर सहिताः | विष्टिमुखं घ. ५ महराः | ० |
|---|---|---|---|---|---|---|---|
| शुक्ल पक्षः | ११ | टे | ३ | ८ | जा | २ | ति |
| | ४ | घु | १ | १५ | णी | ४ | थ |
| कृष्ण पक्षः | ३ | गै | ४ | ७ | छि | ३ | यो |
| | १० | ञू | २ | १४ | ढ | १ | ज्ञेया |

अयमाशयः ॥ यदा तु पूर्वदिने प्रदोषात्प्रवृत्ता पूर्णिमा द्वितीयदिवसे किञ्चिन्निशागमे भवति तदा उत्तरस्यां होलिका कार्येति ॥ एवं चोक्तं

ज्योतिः शास्त्रे—स्तोकः क्षयः समत्वं वा वृद्धिर्वा दृश्यतेऽप्रतः
ततः पूज्या द्वितीयेऽन्हि होळी रात्रौ मनीषिभिः ॥

अत्रापि सद्भावे पूर्णिमाया इति पूर्वोदाहृतयाज्ञवल्क्य वचनात् द्वितीयेऽन्हि रात्रौ पौर्णमास्यामेव होलिर्दीपनीया न प्रातिपदि ॥ तदुक्तमाचारतिलके—

पूर्णायांज्वाल्यते वन्हिः पक्षान्ते भस्मवन्दनम् ।
तत्र राज्ञो भवेत्सौख्यं प्रजाः क्षेममवाप्नुयुः ॥

इति प्रतिपदि होलिं न पूजयेत् ॥ [४४३] तदुक्तं ज्योतिः शास्त्रे—

असत्यां पौर्णमास्यां तु रात्रौ हि होलिकार्चनम् ।
क्रियमाणं प्रतिपदि प्रजानाशकरं भवेत् ॥
पौर्णमासीमतिक्रम्य विद्यमानां यदा निशि ॥
होलिपूजा प्रतिपदि स्यात्तदा मरणादिकम् ॥

तथा—नन्दायां वर्जयेद्रक्षां बलिदानं च मृत्यवे ।
भद्रायां गोकुलक्रीडा वन्हौ वन्हिं परित्यजेत् ॥

इति वन्हौ प्रतिपदि वन्हिं होलिकां वर्जयेदित्यर्थः ॥

आचारतिलकेऽपि—

नन्दायां ज्वालयेद्धोलिं भद्रायां भस्मवन्दनम् ।
छत्रभङ्गस्तदा ज्ञेयो हाहाभूताः प्रजास्तथेति ॥

गार्ग्योऽपि प्रतिपदि निषेधमाचष्टे ॥

अस्तंगते दिवानाथे पश्चाच्चन्द्रोग्दमो यदि ।
हुतभुक् पूजितस्तत्र भवेत्संतापकारक इति ॥

अथ क्षयवृद्धिभ्यां द्वितीयदिनेऽस्तात्पूर्वं प्रतिपत्सद्भावे सति पूर्वदिने कर्तव्या ॥

तिथिः शरीरं तिथिरेव साधनं तिथिः प्रमाणं तिथिरेव कारणं ।

इति लल्लवचनात् ॥ एवं च विष्टेर्मुखं वर्जनीयमिति

विशेषश्रवणात् ॥ भद्रायां होलिकापूजनविधायकवाक्यानां बहूनां सद्भावात् प्रदिपदि होलिदीपननिषेधदर्शनाच्च भद्रायां यानि होलिदीपननिषेधवचनानि तानि विष्टेर्मुखे एव दीपननिषेधकानीति बोद्धव्यं ॥ [४४४] यदपि वचनं—

सार्धयामत्रयं वा स्याद्द्वितीयादिवसे यदा ।

प्रतिपद्वर्धमाना तु तदा स्याद्धोलिका स्मृतेति ॥

तदपि—सूर्यास्तावधिभूतः स्यात्पूर्वस्मिन्दिवसेऽथवा ।

प्रवृत्ता पूर्णिमा रात्रावितरत्र च भूतवत् ॥

विष्टियुक्ता तदा कार्या होलिकाद्या प्रयत्नतः ।

प्रतिपद्यर्धमानापि वन्हिं वन्हिषु वर्जयेदिति

ब्रह्मपुराणवचनविरोधात् ॥ सार्धयामत्रयमित्यस्य वचनस्य पौर्णमासीनिमित्तश्राद्धव्रतादिकं विषयान्तरं कल्प्यं॥ यत्तु ॥ कैश्चिदेतद्वाक्यबलेन प्रतिपदि होलिदीपनमित्युक्तं तत्रोदाहृतैर्बहुभिर्वचनैर्विरुद्धं ॥ विरुद्धसमवाये भूयसामनुग्रहो न्याय्यः ॥ तथा यस्मिन्काले यस्यां तिथौ यत्कर्म विहितं तस्मिन्काले तत्तिथौ सत्यां कृतं कर्म फलदं भवतीति रहस्यं॥

कर्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः ।

तया कर्माणि कुर्वीत ह्रासवृद्धी न कारणमिति

स्मृतिवचनात् ॥ एतेन इदमप्यपास्तं ॥

श्राद्धकाले यदा पूर्णा प्रतिपच्चापराण्हिकी ।

श्राद्धं निर्वर्त्य तत्काले कुर्यादुल्मुकहोलिके ॥ इति ॥

यदा दिवा होलिपूजनं नोक्तं प्रदोषे चेत्प्रतिपद्विधानलक्षणो दोषस्तदवस्थ एव ॥ [४४५] किं च ॥

आषाढी कार्तिकी माघी वैशाखी च विशेषतः ।
स्नानदानविहीनास्ता न नेयाः पाण्डुनन्दन ॥

इत्यादिविशेषवचनैरन्यासु पौर्णमासीषु श्राद्धस्य नियमा-वगमान्न श्राद्धहोल्योः पौर्वापर्यमिति निर्णयः ॥

अथ कर्तव्यता—अभयं सर्वलोकानां दातव्यं पुरुषर्षभ ।
यथा ह्यशङ्किता लोका रमन्ति च हसन्ति च ॥
दारुजानि च खड्गानि गृहीत्वा समरोत्सुकाः ।
योधा इव विनिर्यान्ति शिशवः संप्रहर्षिताः ॥
सर्वसारा तिथिश्चेयं पौर्णमासी युधिष्ठिर ।
अस्यां निशागमे पार्थ संरक्ष्याः शिशवो गृहे ॥
गोमयेनोपलिप्ते च चतुष्के च गृहाङ्गणे ।
सञ्चयः शुष्ककाष्ठानां पलालानां सकारिषः ।
तत्राग्निं विधिवत्कृत्वा रक्षोघ्नैर्मंत्राविस्तरैः ॥
सर्वदुष्टापहो होमः सर्वदुःखोपशान्तिकः ।
क्रियतेऽस्यां द्विजैःपार्थ तेन सा होलिका मता ॥
आडाढायाश्च होलायाः पूजनं दुःखशान्तिदम् ।
तमग्निं त्रिःपरिक्रम्य गर्जन्ति च हसन्ति च ॥

प्रदक्षिणामंत्रः—त्वमग्ने सर्वभूतानामन्तश्चरसि पावक ।
होलिकां प्रक्रमिष्यामि रक्षां त्वं कुरु मे सदा ॥

४४६ ततः प्रार्थना—शिशिरस्यान्तिके देवि वसन्तमदनप्रिये ।
आगतासि विधानेन पूजां मे नय होलिके ॥
यन्मया शीतभीतेन निषिद्धाचरणं कृतम् ।
ततः पापं समुद्भूतं नाशय त्वं हुताशनि ॥

ततः प्रभाते प्रतिपत्स्नात्वा सतर्प्य देवताः ।
वन्दयेद्धोलिकाभूतिं सर्वदुःखोपशान्तये ॥

रक्षावन्दनमंत्रः—

वन्दितासि सुरेन्द्रेण ब्रह्मणा शङ्करेण च ।
अतस्त्वं पाहि भूतेभ्यो भूते भूतिप्रदा भव ॥
पश्चाच्च प्राशयेद्विद्वान् चूतपुष्पं सचन्दनम् ।
मनोभवस्य सा पूजा प्रतिवार्षिकसंमता ॥

प्राशनमंत्रः चूतमग्र्यं वसन्तस्य माकन्द कुसुमं तव ।
सचन्दनं पिबाम्यद्य सर्वकामार्थसिद्धये ॥
कुसुमं चूतवृक्षस्य वसन्तवनवल्लभम् ।
संप्राशयामि सौख्यार्थमायुरारोग्यवर्धनम् ॥

इति होलिकानिर्णयः ॥

---

## [४४७] अथ श्रावणीनिर्णयः ॥

अस्यां दैविकं पूर्वाण्हे पित्र्यमपराण्हे कुर्यात् ॥

तदुक्तं भाविष्योत्तरे—

संप्राप्ते श्रावणस्यान्ते पौर्णमास्यां दिनोदये ।
स्नानं कुर्वीत मतिमान् श्रुतिस्मृतिविधानतः ॥
ततोदेवान् पितृंश्चैव तर्पयेत्परमांभसा ।
कुर्वीत ब्राह्मणः श्राद्धं वेदानुद्दिश्य भक्तितः ॥
शूद्राणां मंत्ररहितं स्नानं दानं च शस्यते ।

तथा तत्रैव—उपाकर्मादिकं प्रोक्तं ऋषीणां चैव तर्पणम् ॥
ततस्तत्रापराण्हे तु रक्षाबन्धनमेव च ॥

तदुक्तं—ततोऽपराण्हसमये रक्षापोटलिकां शुभाम् ।

कारयेच्चाक्षतैस्तद्वात्सिद्धार्थैर्होमचर्चिताम् ॥

तथा (आर्या)—सहितांदूर्वावर्णकसहितैः शुभैर्युतश्च सुमुहूर्ते ।

रक्षाबन्धः कार्यः शान्तिकरः सर्वविघ्नानाम् ॥

४४८ ननु—श्रावणीदुर्गनवमी दूर्वा चैव हुताशनी ।

पूर्वविद्धा प्रकर्तव्या शिवरात्रिर्बलेर्दिनम् ॥

इत्यनेन बृहद्यमवचनेन श्रावणी पूर्वविद्धा विहिता ॥ पूर्वविद्धायां विष्टयुपाहिता भवति विष्ट्यान्वितायां तु स्मृत्यन्तरे विशेष उक्तः ॥

तथा—भद्रायां द्वे न कर्तव्ये श्रावणी फाल्गुनीति च ।

श्रावणी नृपतीन्हन्ति ग्रामं दहति फाल्गुनी ।

इति निषेधात् कथं तत्र स्यात् ॥ सत्यं ॥ श्रावण्याः पूर्वविद्धाविधानबलात् उपाकर्मादिकं श्रावणीकर्म विष्ट्यामपि भवति ॥ तस्य पूवाण्हे एव विधानात् ॥ निषेधो रक्षाबन्धनविषयस्तस्य सुमुहूर्ते विधानात् इति व्यवस्था ॥

४४९ अथवा ॥ ततोऽपराण्हसमये रक्षापोटलिकामिति ।

अन्हः पूर्णिमाया अपरो भागोऽपराण्हस्तत्ररक्षाबन्धस्योक्तत्वात् ॥ पूर्णिमाद्वितीयभागे विष्टिर्न भवत्येव ॥

(आर्या)—उपलिप्ते गृहमध्ये दत्तचतुष्के न्यसेत्पीठम् ।

तत्रोपरिविशेद्राजामात्यैर्युतश्च सुमुहूर्तः ॥

रक्षाबन्धनमंत्र—

येन बद्धो बली राजा दानवेन्द्रो महाबलः ।

तेन त्वामनुबध्नामि रक्षे मा चल मा चल ॥

तथा–ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्चान्यैश्च मानवैः ।

कर्तव्यो राक्षिकाबन्धो द्विजान् संपूज्य भक्तितः ॥

अनेन विधिना यस्तु रक्षाबन्धनमाचरेत् ।

सर्वदोषेण रहितः सुखी संवत्सरं वसेत् ॥

तथा – आषाढ्यामथवाष्टम्यां चतुर्दश्यामुमापातिम् ।

पवित्रैरर्चयेद्रात्र्यां श्रावण्यां चेतरान्सुरानिति ॥

तथा–श्रावण्यां श्रवणः पूज्यते ॥ तत्र पूजामंत्रः

श्रवणाय नमस्तुभ्यं यक्षगोत्रसमुद्भव ।

क्षेमं कुरुष्व मे नित्यं शान्तिं कुरु पदे पदे ॥

इति श्रावणीनिर्णयः ॥

कृतेऽचलद्विवेदेन ग्रन्थे निर्णयदीपके ।

हुताशन्यादिसंयुक्तः पूर्णमासीविनिर्णयः ॥

४५० अथोपवासव्रतसाधारणं किञ्चित् देवलः–

दन्तानां धावनं हिंसामनृतं स्नेहमेवच ।

असकृज्जलपानं च स्त्रीभोगं स्वपनं दिवा ॥

तांबूलचर्वणं मांसं वर्जयेद्व्रतवासरे ।

मांसं क्षत्रियविषयं ब्राह्मणानां प्राप्त्यभावात् ॥

वृद्धवसिष्ठः–उपवासे तथा श्राद्धे न खादेद्दन्तधावनमिति ॥

व्यासः–अलाभे दन्तकाष्ठानां निषिद्धायां तथा तिथौ ।

अपां द्वादशगण्डुषैर्मुखशुद्धिर्भवेन्नृणाम् ॥

पर्णेन वा विशुद्धेन जिव्हेल्लेखं च कारयेत् ।

यद्यपि तांबूलचर्वणं स्त्रीसंभोगं सामान्येनोक्तं तथापि स्व-

दारेषु ऋतुसंगमनं स्त्रीसंगमनं स्त्रीसंस्पर्शनं संप्रेक्षणं संलापं च वर्जयित्वान्यत्रसतलोप इति पैठीनसिः ॥

कात्यायनोऽपि—स्त्रीणां संप्रेक्षणात्स्पर्शात्ताभिः संकथनादपि ।

भिद्यते ब्रह्मचर्यं च न दारेष्वपि संगमादिति ॥

उपवासाशक्तं प्रति विशेषः ॥

अशक्तोऽयाचनं नक्तैकभक्तादीन्यनुक्रमात् ।

कुर्यात्तथाप्यशक्तस्तु भार्यादीन् विनियोजयेत् ॥

आदिशब्देन पुत्रभ्रातृभगिन्यादयः ॥

तथा—भार्या पत्युर्व्रतं कुर्याद्भार्यायाश्च पतिर्व्रतम् ।

असामर्थ्ये परस्ताभ्यां व्रतभङ्गो न जायते ।

इति पैठीनसिवचनात् ॥

[४५१] कात्यायनः—उपवासेऽप्यशक्तानामशीतेरूर्ध्वजीविनाम् ॥

एकभक्तादिकं कार्यमाह बौद्धायनो मुनिः ।

वायुपुराणे—अथवा विप्रमुख्येभ्यो दानं दद्याच्च शक्तितः ।

उपवासफलं तस्य समग्रं संभविष्यति ॥

अन्नभोजनदोषोऽपि तत्क्षणादेव नश्यति ।

स्कन्दपुराणे—असामर्थ्येशरीरस्य व्रते च समुपस्थिते ।

कारयेद्धर्मपत्नीं वा पुत्रं वा विनयान्वितम् ॥

भ्रातरं भगिनीं शिष्यं ब्राह्मणं दक्षिणादिभिः ।

विशेषान्तरं—पितृमातृपितृभ्रातृ स्वसृगुर्वादि भूभुजः ।

अदृष्टार्थमुपोष्याश्च स्वयं च फलभाग्भवेत् ॥

आदिशब्देन पितामहमातामहानामुपसंग्रहः ॥

[४५२] कात्यायनस्तु—अन्यार्थोपवासे शतगुणं फलं ब्रवीति ॥

तथा—पितृमातृस्वसृभ्रातृगुर्वर्थे च विशेषतः ।
उपवासं प्रकुर्वाणः पुण्यं शतगुणं लभेत् ॥
दक्षिणा नात्र दातव्या शुश्रुषा विहिता हि सेति ।

अथ स्त्रीणां व्रतविषये विशेषः ॥

पत्नी पत्युरनुज्ञाता व्रतादिष्वधिकारिणी ॥

यतः—रक्षेत्कन्यां पिता विन्नां पतिः पुत्रास्तु वार्धुके ।
अभावे ज्ञातयस्तेषां न स्त्री स्वातंत्र्यमर्हति ॥

विन्नां परिणीतां ॥

कात्यायनः—भार्या भर्तुर्मतेनैव व्रतादीनाचरेदिति ।

अनुमत्यभावे तु

सुमन्तुः—न तु स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषणम् ।

विष्णुः—पत्यौ जीवति या नारी उपवासव्रतं चरेत् ।
आयुः सा हरते भर्तुर्नरकं चैव गच्छति ॥

मार्कण्डेयः—नारी खल्वननुज्ञाता भर्त्रा वापि सुतेन वा ।
निष्फलं तु भवेत्तस्या यत्करोति व्रतादिकम् ॥

आदिशब्देन तीर्थयात्रादि ॥ स्त्रीणां व्रते पुष्पादिकमदुष्टम् ॥ तदुक्तं सुमन्तुना—

पुष्पालङ्कारवस्त्राणि गन्धधूपानुलेपनम् ।
उपवासे न दुष्यन्ति दन्तधावनमञ्जनमिति ॥

[४५३] अथ रजस्वला नारी प्रारब्धे व्रते प्रार्थनादिना पतिं नियोजयेत् ॥ इत्युदाहृतं पूर्वं तदभावेऽन्यं वा ॥ स्कन्दोऽपि—

पुत्रं वा विनयोपेतं भगिनीं भ्रातरं तथा ।
एषामभाव एवान्यं ब्राह्मणं विनियोजयेत् ॥

सत्यव्रतः—प्रारब्धदीर्घतपसां नारीणां यद्रजोभवेत् ।

न तत्रास्य व्रतस्य स्यादुपरोधः कदाचनेति ॥

ऋषिवचनादपि रजस्वला स्वयमेव व्रतं चरेदिति व-

क्तुं न शक्यते ॥

यतः—पञ्चमेऽहनि संशुद्धा दैवे पित्र्ये च कर्मणि ।

तथा—शुचिनाकर्म कर्तव्यमित्यादि विरुद्धवचनदर्शनादयम-

र्थः कल्प्यते ॥

संप्रवृत्तेऽपि रजसि न त्याज्यं द्वादशीव्रतम् ॥

इति ऋष्यशृङ्गवचनेनाङ्गीकृतस्य व्रतस्यापरित्यागा-

भिधानात् अन्यं नियोजयेत् ॥

तथा—एकादश्यां न भुञ्जीत नारी दृष्टे रजस्यपि ।

इति पुलस्त्यवचनेन भोजननिषेधात् स्वयं च भुक्तिं

वर्जयेदिति निश्चीयते ॥ अत्रैकादशी द्वादशीति प्रारब्धव्रत-

मात्रोपलक्षणं ॥

पूर्वसंकल्पितं यच्च व्रतं सुनियतव्रतैः ।

तत्कर्तव्यं जनैः शुद्धं दानार्चनविवर्जितम् ॥

इति कालादर्शोदाहृतसंमत्यनुरोधात् ॥ सत्यव्रतवचन-

स्य सर्वव्रतसाधारणप्रवृत्तत्वाच्च ॥ [४५४] अथ काम्योपवासे प्रा-

रब्धेऽन्तरा सूतकादिपाते प्रारब्धं कुर्यात्तथाचोक्तं ॥

कूर्मः—काम्योपवासे प्रक्रान्ते त्वन्तरा मृतसूतके ।

तत्र काम्यव्रतं कुर्याद्दानार्चनविवर्जितम् ॥

दानं देवार्चनं च सूतकान्ते कुर्यात् ॥ तदाह मत्स्यः—

सूतकान्ते नरः स्नात्वा पूजयित्वा जनार्दनम् ।

दानं दत्वा विधानेन व्रतसाफल्यमश्नुते ॥ इति ॥

जनार्दनमिति व्रतदेवतोपलक्षणं ॥

अन्ते कुर्याद्रजोदुष्टा पतिं वान्यं नियोजयेत् ॥

एकादशी विषये वाराहपुराणे–

सूतके च नरः स्नात्वा प्रणम्य मनसा हरिम् ।

एकादश्यां न भुञ्जीत व्रतमेतन्न लुप्यते ॥

[४५५]व्रतवासरे वर्ज्यमाह कूर्मः–

बहिरन्त्यजान्सूतिं तु पतितं च रजस्वलाम् ।

न स्पृशेन्नाभिभाषेत नेक्षेत व्रतवासरे ॥ इति ॥

संस्पर्शनादौ प्रायश्चित्तं विष्णुपुराणे–

संस्पर्शे च बुधः स्नात्वा शुचिरादित्यदर्शनात् ।

संभाष्य तान् शुचिषदं चिन्तयेदच्युतं नरः ।

तेषामालोकनात्सूर्यं संपश्येन्मतिमान्नरः ॥

शुचिषदं शुचित्वकरं ॥

विष्णुरहस्ये–असंभाष्यान्समाभाष्य प्राशयेत्तुलसीदलम् ।

आमलक्याः फलं वापि पारणे प्राश्य शुध्यति ॥

इत्यादि व्रतवासरे नियमाः व्रतप्रारंभसमाप्तिविधानविषयाः ॥ मंत्राश्च ग्रन्थान्तरादवगन्तव्या इति सर्वत्र व्रतविषयः साधारणो निर्णयः ॥

कृतेऽचलद्विवेदेन ग्रन्थे निर्णयदीपके ।

निर्णीतास्तिथयः सर्वाः किंश्चित्किञ्चिद्व्रतान्विताः ।इति॥

[४५६]अथोत्क्रान्त्यनन्तरं प्रेतस्य सपिंडीकरणयोग्यताप्रतिपादकानि मलिनाभिधानि त्रिषोडशप्रेतश्राद्धानि अभिधी-

यन्ते ॥ तावत्प्रेतकल्पे—

मलिनश्राद्धसंज्ञानि पूर्वं षोडश काश्यप ।
स्थाने चार्धपथेऽतीते चितायां शवहस्तके ॥
श्मशानवासिभूतेभ्यः पञ्चमं प्रातिवेश्मिकम् ।
षष्ठं सञ्चयने प्रोक्तं दशपिंडा दशाहिकाः ॥
श्राद्धषोडशकं चैतत्प्रथमं परिकीर्तितम् । इति ॥

प्रातिवेश्मिकं गृहद्वारे प्रतिवेश्मनिभवमिति ॥ षष्ठमिति श्मशानवासिव्यतिरिक्तप्रेतश्राद्धपरं ॥ तथाच स्मृत्यन्तरं—

उत्क्रान्तौ द्वारदेशे च विश्रान्तौ च चितौ करे ।
श्मशानवासिदेवानां षष्ठः सञ्चयने स्मृतः ॥

गरुडपुराणेऽपि—

मृतस्थाने तथा द्वारि चत्वरे तार्क्ष्य कारणात् ।
विश्रामे काष्ठचयने तथा सञ्चयने च षट् ॥
पूर्वैस्तु पञ्चभिः पिंडैः शवस्याहुतियोग्यतेति ॥

४५७ अत्रविशेषः—मरणसमये अस्नातादिदोषोपघाते सति शुद्धिं कृत्वा शवनिर्हरणं कुर्यात् ॥

तदुक्तं—अस्नाताद्युपघातेन म्रियते यदि मानवः ।
तत्र शुद्धिं समुत्पाद्य ततो निःक्रामयेच्छवमिति ॥

शुद्धिं प्रायश्चित्तेनेति ॥ प्रायश्चितं तु

रजस्वलासूतिकयोः श्वपाकस्पर्शने मृतः ।
अब्देनैव तु कृच्छ्रेण शुद्धिर्वात्स्यायनोऽब्रवीत् ॥
रजकश्चर्मकारादि स्पर्शने म्रियते यदि ।
सार्धेनाब्देन शुध्धिःस्यात्त्रिंशत्कृच्छ्रैरसंभवे ॥

तथा—ऊर्ध्वोच्छिष्टाधरोच्छिष्टादिदोषे त्रीन् षट् एवमादिकृच्छ्रान् यद्वा यथायोग्यं प्रायश्चितं कृत्वा तदनन्तरं उत्क्रान्तादि पिंडं कुर्यात् ॥ ततः शवनिर्हरणं ॥ प्रायश्चित्तविवेको गोविन्दराजस्मृत्यर्थसारादवगन्तव्य इति ॥

४५८ तथा—संमृज्य चोपलिप्याथ उल्लिख्योद्धृत्य एव च ।
अभ्युक्ष्योपसमाधाय वन्हिं तत्र विधानतः ॥ इति ॥

विधानत इति स्वशाखोक्तविधिनेत्यर्थः ॥ तथाच वृद्धयाज्ञवल्क्यः—आहिताग्निर्यथाशाखं दग्धव्यस्त्रिभिराग्निभिः ।
अनाहिताग्निरेकेन लौकिकेनापरो जनः ॥

अनाहिताग्निरेकेनावसथ्याग्निना ॥ अपरो निरग्निर्लौकिकाग्निना कपालसंस्कृतेन ॥ लौकिकाग्निरपि चाण्डालादिव्यतिरिक्त इति ॥ तदुक्तं देवलेन—
चाण्डालाग्निरमेध्याग्निः सूतिकाग्निश्च कर्हिचित् ।
पतिताग्निश्चिताग्निश्च न शिष्टो ग्रहणोचित इति ॥

तथा—यस्यानयति शूद्रोऽग्निं तृणकाष्टहवींषि च ।
प्रेतत्वं हि सदा तस्य स चाधर्मेण लिप्यत इति ॥

देवलस्मरणात् ॥

४५९ तथा—मृतो मर्त्यः स्वकुल्यैस्तु श्मशानं नीयते तदा ।
स्नानं प्रेतस्य कृत्वा तु पुष्पैर्वस्त्रैस्तु पूजनम् ॥
नग्नदेहं दहेन्नैव किञ्चिद्देयं परित्यजेत् ।

किञ्चिद्देयमिति शववस्त्रैकदेशं श्मशानवास्यर्थं परित्यजेदिति ॥

प्रचेतसोक्तं ॥ तथा यमोऽपि—

गोत्रजस्तं गृहीत्वाथ चितामारोपयेत्तथा ।

प्रेतं दहेच्छुभैर्गन्धैः स्नापितं स्रग्विभूषितम् ॥ इति ॥

अनाथप्रेतनिर्हरणे फलविशेषं दर्शयति पाराशरः–

अनाथं ब्राह्मणं प्रेतं ये वहन्ति द्विजातयः ।

पदे पदे यज्ञफलमानुपूर्व्याल्लभन्ति ते ॥

न तेषामशुभं किञ्चित्पापं वा शुभकर्मणि ।

जलावगाहनात्तेषां सद्यः शौचं विधीयते ॥

तथा–दक्षिणेन मृतं शूद्रं पुरद्वारेण निर्हरेत् ।

पश्चिमोत्तरपूर्वैस्तु यथा संख्यं द्विजातय इति ॥

तथा–अस्वर्ग्या ह्याहुतिः सा स्याच्छूद्र संस्पर्शदूषितः ॥

इति वचनात् शूद्रसंपर्कं परित्यजेत् ॥ मरणानन्तरं केशनखनिकृन्तनाप्लवनालङ्करणादिविधयः शाखाभेदभिन्नत्वान्न लिखितास्ते स्वशाखोक्ता अवगन्तव्या इति ॥

गरुडपुराणे–पुष्पाक्षतैश्च संपूज्य देवं क्रव्यादसंज्ञकम् ।

त्वं भूतकृज्जगद्योने त्वं लोकपरिपालकः ।

उक्तसंस्कारकस्तस्मादेनं स्वर्गं मृतं नय ॥ इति मंत्रः॥

४६० इति क्रव्यादमभ्यर्च्य शरीराहुतिमाचरेत् ।

अर्धदग्धे तथा देहे दद्यादाज्याहुतिं ततः ॥

अस्मात्त्वमभिजातोऽसि त्वदयं जायतां पुनः ।

असौ स्वर्गाय लोकाय स्वाहा ज्वलति पावके ॥

एवमाज्याहुतिं हुत्वा तिलमिश्रां समंत्रकाम् ।

रोदितव्यं ततो गाढमेवं तस्य सुखं भवेत् ॥

पत्न्याः पतिपरोक्षे कपालाग्नेरभ्यनुज्ञास्ति दहनकाले

अग्निनाशे दग्धकाष्ठैरग्निं मन्थयित्वा दहेत् ॥ लौकिकाग्नौ भूर्भुवः स्वः स्वाहेत्याहुतिं हुत्वा वा दहेत्॥ इति स्मृत्यर्थसारे॥

इति दाहनिर्णयः।

---

## अथ दहनानन्तरमुदकदानविधिः प्रस्तूयते॥

एतदुदकदानं स्नानानन्तरं कार्यं ॥ शरीरमग्नौ संयोज्यानवेक्षमाणा अपोऽभ्युपयन्तीति शातातपः ॥

दाहस्यानन्तरं कार्यं पुत्रैः स्नानं सचैलकम् ।
तिलोदकं ततो दद्यान्नामगोत्रोपतिष्ठतु ॥

४६१ गरुडपुराणे प्रचेतसा मंत्र विशेषो दर्शितः ॥

नदीकूलं ततो गत्वा शौचं कृत्वा यथार्थवत् ।
वस्त्रं संशोधयेदादौ ततः स्नानं समाचरेत् ॥

तथा प्रेतस्य बान्धवाः सपिंडाः समानोदकाश्च मौनिनो यथावृद्धमुदकमवतीर्यापसव्ययज्ञोपवीतिनो दक्षिणाभिमुखाः प्रेतस्य नामगोत्रे उच्चार्य प्रेतस्तृप्यतु इति जलपूर्णाञ्जलिं सतिलां पाषाणे प्रसिञ्चेयुः ॥ वासिष्ठः ॥ सव्योत्तराभ्यां पाणिभ्यामुदकक्रियां कुर्वीरन्निति ॥

तथा—सकृत्प्रसिञ्चेत्युदकं नामगोत्रेण वाग्यत इति ।
सकृदेवोदकं सिञ्चेयुस्त्रिर्वा ॥ त्रिःप्रसेकं कुर्युरिति प्रचेताः ॥

तथा—सपिंडोऽपि ब्रह्मचारी समावर्तनपर्यन्तं प्रेतस्योदकदानमाशौचं च न कुर्यात्तदुक्तं मनुना—

आदिष्टी नोदकं कुर्यादाव्रतस्य समापनात् ।
समाप्ते तूदकं कुर्यात्त्रिरात्रमशुचिर्भवेत् ॥

आदिष्टी ब्रह्मचारी ॥ ब्रह्मचारिणः उदकदानप्रतिषेधः मातापित्रादिव्यतिरेकेण ॥ तद्विषये विशेषं वक्ष्यामो दाहाधिकारिनिर्णयप्रकरणे ॥ [४५२] आचार्यपित्रुपाध्यायानित्यत्र असपिंडानामपि उदकदानमुक्तं वसिष्ठेन ॥ एवं मातामहाचार्यप्रेतानामुदकक्रियेति ॥

कामोदकं सखा प्रत्ताः स्वस्रीयः श्वशुरर्त्विजः ।

सखा मित्रं प्रत्ताः परिणीताः दुहितृभगिन्यादयः स्वस्रीयो भागिनेयः श्वशुरः ऋत्विजश्च ॥ कामोदकं काम इच्छा ॥ एतेषामिच्छयोदकदानं कार्यं ॥ प्रेताभ्युदयकामनया उदकंदेयं ॥ असत्यां न देयं ॥ इत्यकरणे प्रत्यवायो नास्तीत्यर्थः ॥ उदकक्रिया कार्येति इत्युक्तं गरुडपुराणात् ॥

अश्रुपातं न कुर्वीत दत्वा दायजलाञ्जलीन् ।
श्लेष्माश्रु बान्धवैर्मुक्तं तदा प्रेतोयमश्नुते इति ॥

## इत्युदकदाननिर्णयः

---

## अथ सञ्चयनं निर्णीयते ॥

[४५३] दाहस्यानन्तरं तत्र कृत्वा सञ्चयनक्रियाम् ।
प्रेतपिंडं प्रदद्याच्च दाहार्तिशमनं खग ॥
केचिद्दुग्धेन सिञ्चन्ति चितास्थानं खगेश्वरेति ॥

गरुडपुराणे संवर्तोऽपि —

प्रथमेऽन्हि द्वितीये वा सप्तमे नवमेऽपि वा ।
अस्थिसञ्चयनं कार्यं दिने तद्गोत्रजैः सह ॥

कचिद्द्वितीयेऽस्थिसञ्चय इति मिताक्षरायां ॥ अपरपक्षे सञ्चित्यायुग्मासु रात्रिष्विति शाङ्खायनः ॥ कृष्णपक्षे दशम्या ऊर्ध्वमाश्वलायनः ॥ काण्वः अमावास्यायां ॥ कात्यायनः मैत्रसूत्रे च चतुर्थदिवसे ॥ तथा वैष्णवे चतुर्थदिवसे अस्थिसञ्चयनं । तेषां गङ्गांभसि प्रक्षेप इति ॥ अतोऽन्यस्मिन्दिवसे स्वगृह्योक्तविधिना सञ्चयनं कार्यमिति ॥ चण्डुस्मृतौ ॥

तथान्नपानमादाय संस्कृतं विधिवच्छुचिः ।
गत्वा पितृवनं तत्र क्षीरेणाभ्युक्षयेच्च तत् ॥
यज्ञियस्य च वृक्षस्य शाखामादाय यत्नतः ।
अस्थीन्युत्तमगात्रेभ्यो नवे भाण्डे निधापयेत् ॥

प्रचेतसा विशेष उक्तः ॥

[४५४]अस्थिसञ्चयने यागो देवानां परिकीर्तितः ।
जातं प्रेतं समुद्दिश्य यःशुचिर्न करोति च ॥
देवतानां तु यजनं तं शपन्त्यथ देवताः ।

देवताश्चात्र श्मशानवासिन इति ॥ सञ्चयने कृते मनुष्यलोकात्प्रेतलोकं गच्छतः आमेन पाथेयश्राद्धमेकोद्दिष्टविधानेन कार्यमिति स्मृत्यर्थसारे

इति सञ्चयनं ॥

---

## अथ प्रेतपिंडेषु द्रव्यनियमं ॥

शुनःशेपो दर्शयति ॥

शालिना सक्तुभिर्वापि शाकैर्वाप्यथ निर्वपेत् ।
प्रथमेऽहनि यद्द्यात्तद्द्यादुत्तरेऽहनि ॥

तथा–गृहद्वारे श्मशाने वा तीर्थे देवालयेऽपि वा ।
यत्राद्यो दीयते पिंडस्तत्र सर्वान्समापयेत् ॥
[४६५] तथा–असगोत्रः सगोत्रो वा यदि स्त्री यदि वा पुमान् ।
प्रथमेऽहनि यो दद्यात्स दशाहं समापयेत् ॥

इति कर्तृनियमोऽपि गृह्यशिष्टात् मिताक्षरायां॥ पुत्रासन्निधाने येनासगोत्रादिना सदाहसंस्कारः कृतस्तेनैव आदशाहात्प्रेतकर्म कर्तव्यं ॥

तथा–अन्यगोत्रोऽन्यगोत्रस्य प्रेतस्याग्निं ददाति यः ।
उदकं पिंडदानं च स दशाहं समापयेत् ॥

इति स्मृतिचन्द्रिका ॥

तथा–अन्यगोत्रोऽन्यगोत्रस्य आचार्यादेरन्त्येष्टिं करोति तदा दशरात्रमाशौचं ॥ तदुक्तं मिताक्षरायां

गुरोःप्रेतस्य शिष्यस्तु पितृमेधं समाचरेत् ।
प्रेताहारैः समं तत्र दशरात्रेण शुध्यति ॥

मनुस्मरणात् चण्डुनापि व्याख्यातं ॥ यथा ॥ शिष्यग्रहणात् पुत्राभावे एवाधिक्रियते ॥ स यदि अंत्येष्टिं करोति तदा दशरात्रं ॥ अथ न करोति तदा त्रिरात्रं ॥ आचार्ये संस्थिते सति त्रिरात्रमिति वचनात् ॥ तथा ॥ प्रेतस्पर्शिनो दशरात्राशौचं॥ पूर्वाशौचात्पश्चिमाशौचे उपरतेऽपीति दशकभाष्ये ॥ पिंडदानविधिर्मरीचिना दर्शितः ॥ पितृयज्ञक्रियया प्राचीनावीतित्वादिरूपया प्रेताय पिंडरूपमन्नं तूष्णीं क्षितौ देयमिति ॥

[४६६] तथा–तूष्णीं प्रसेकं पुष्पं च धूपं दीपं तथैव च ।

भूमौ माल्यं पिंडं पानीयं पाषाणे वा दद्यादिति ॥

तथा–अमंत्रं कारयेच्छ्राद्धं दशाहं नामगोत्रतः ।

श्राद्धं कृतं तु यैर्वस्त्रैस्तानि त्यक्त्वा गृहे वसेत् । इति॥

विष्णुः–गर्तं पिंडं दशाहं च दातव्यं स्याद्दिने दिने ।

इति गरुडवचनात् प्रचेताः–

दिने दिनेऽञ्जलीन्पूर्णान् प्रदद्यात्प्रेतकारणात् ।

तावद्वृद्धिः प्रकर्तव्या यावत्पिंडः समाप्यत इति ॥

यावद्दशमः समाप्यते तावत्प्रतिदिनं अञ्जलीनां वृद्धिः कार्येति ॥ मिताक्षरायां ॥

नवभिर्दिवसैर्दद्यान्नवपिंडान्समाहितः ।

दशमं पिंडमुत्सृज्य रात्रिशेषे शुचिर्भवेत् ॥

इति स्मृत्यन्तरवचनात् ॥ ४६७ यत्तु योगीश्वरेण–

क्रीतलब्धाशना भूमौ स्वपेयुस्ते पृथक् पृथक् ।

पिंडयज्ञावृता देयं प्रेतायान्नं दिनत्रयमिति ॥

पिंडत्रयमभिहितं ॥ एवमनयोर्गुरुलघुकल्पनयोरन्यतरानुष्ठानेनापि शास्त्रार्थसिद्धौ सत्यामपिक्लेशबहुत्वेन दशपिंडगुरुतरकल्पे यद्यप्यप्रवृत्तिशंका ॥

तथापि–प्रेतस्य नवभिः पिंडैः कुटी निष्पद्यते ध्रुवम् ।

तथा–प्रथमेऽहनि यः पिंडस्तेन मूर्धा प्रजायते ॥

इत्यादिस्मृतिपुराणवाक्यैः प्रेतस्य शरीरावयव निष्पत्तिरूपोपकारातिशयार्थं शिष्टैर्दशपिंडरूपो गुरुतरकल्पाम्नाय आश्रितः ॥ इति योगीश्वरोक्तमिदं पिंडत्रयाभिधानमनादृतं ॥

अनशनादिनाऽशौच ह्रासेऽपि दशपिंडान्दद्यादिति॥ शातातपः

आशौचस्य तु ह्रासेऽपि पिंडान्दद्याद्दशैव तु ।

यन्मरीचिवचनं ॥

प्रेतापिंडं बहिर्दद्याद्दर्भमंत्रविवर्जितम् ।

प्रागुदीच्यां चरुं कृत्वा स्नातः प्रयतमानस इति ॥

तादिदं दर्भवर्जिताभिधानमनुपनीतविषयं ॥ असंस्कृतानां च भूमौ पिंडं दद्यात् ॥ संस्कृतानां तु कुशेष्विति प्रचेताः॥

इति दशाहपिंडनिर्णयः ॥

---

[४६८] अथ दशाहमध्ये पिंडव्यतिरिक्तानि नवश्राद्धाभिधानानि श्राद्धानि निर्णीयन्ते॥ मरणादारभ्य प्रथमादिविषमदिनेषु यच्छ्राद्धं तन्नवश्राद्धमुच्यते ॥ तदुक्तं ॥

आद्यादशाहं मरणाद्विषमेषु दिनेषु यत् ।

नव श्राद्धान्यनुतिष्ठेदेकोद्दिष्टाविधानतः ॥

प्रेतैकोद्दिष्टविधिनेति शेषः ॥ यमोऽपि—

तृतीये पञ्चमे चैव नवमैकादशे ऽहनि ।

यदत्र दीयते जन्तोस्तन्नवश्राद्धमुच्यते ॥

अङ्गिराः—प्रथमेऽन्हि तृतीयेऽन्हि पञ्चमे सप्तमे तथा ।

एकादशे नवमेस्युर्नवश्राद्धानि षट् तथा ॥

केचन पञ्च नवश्राद्धान्याहुः अन्ये षडिति ॥ तदुक्तं शिवस्वामिना

नवश्राद्धानि पञ्चाहुराश्वलायनशाखिनः ।

आपस्तंबाः षडित्याहुर्विभाषा चेतरे जनाः ॥

नवश्राद्धोपक्रमे वर्णविषये व्यवस्था प्रतिपादिता ॥

४६९ भविष्योत्तरे—

नव सप्त विशां राज्ञां नव श्राद्धान्यनुक्रमात् ।
आद्यन्तयोर्वर्णयोस्तु षडित्याहुर्महर्षय इति ॥

विशां नव । सप्त राज्ञां । इत्यनुक्रमः । विप्रशूद्रयोः षडिति॥

व्यासः—प्रथमे सप्तमे चैव नवमैकादशेऽहनि ।
यत्तु वै दीयते जन्तोस्तन्नवश्राद्धमुच्यते ॥

तथा—केचित्पञ्चैव नवमं भवेदन्तरितं यदि ।
एकादशेऽन्हि तत्कुर्यादिति स्मृतिकृतो विदुः ॥

काण्वः—नवश्राद्धे मासिके च यद्यदन्तरितं भवेत् ।
तदुत्तरेण सातंत्र्यादनुष्ठेयं प्रचक्षते ॥

सातंत्र्यं समानतंत्रत्वं ॥ कालादर्शेऽपि—

दैवादन्तरितं पूर्वमुत्तरेण सहाचरेत् ।

दैवादित्युपलक्षणं ॥ दैवान्मानुषाद्वापराधादन्तरितमननुष्ठितं ॥

अत्रिः—प्रेतार्थं सूतकान्ते तु ब्राह्मणान्भोजयेद्दश ।
नवश्राद्धनिमित्तं तु एवमेकादशेऽहनि ॥ इति ॥

स्मृत्यर्थसारे तु नवश्राद्धगणनमुक्त्वा एतन्नवश्राद्धमेकादशेऽन्हि वा कार्यमित्युक्तं ॥

## इति नवश्राद्धनिर्णयः ॥

---

४७० अथोपक्रान्ते दशाहपिंडेऽन्तरादर्शपाते दशाहपिंडसमाप्तिः कार्येत्ययं पक्षः प्रदर्श्यते ॥

तावत्कालादर्शात्—चन्द्रक्षये बलिर्नैव देयः प्रेतस्य शान्तये ।

यदि दद्याद्विचन्द्रं तु दातुः कुलविनाशनम् ॥

पैठीनसिरपि—आद्येन्दावेव कर्तव्याः प्रेतपिंडोदकक्रियाः ।

द्विरैन्दवेऽपि कुर्वाणः पुनः शावं समश्नुत इति ॥

स एव चन्द्रोऽदर्शनानन्तरं दृश्यमानो द्वितीय इति ॥

अमुमेवार्थं ऋष्यशृङ्गोऽप्याह—

अशौचमन्तरा दर्शो यदि स्यात्सर्ववर्णिनाम् ।

समाप्तिं प्रेततंत्रस्य कुर्यादित्याह गौतमः ॥

भविष्यत्पुराणेऽपि—प्रवृत्ताशौचतंत्रे तु यदि दर्शः प्रपद्यते ।

समाप्य चोदकं पिंडं स्नानमात्रं समाचरेत् ॥

पिंडदानादि समाप्याशौचपर्यन्तं स्नानमात्रं कुर्यादिति ॥

एतन्मातापितृव्यतिरिक्तविषयं ॥

तद्विषये विशेष उक्तो गालवेन

पित्रोराशौचमध्येऽपि यदिदर्शः समाप्यते ।

तावतैवोत्तरं तंत्रं पर्यवस्येत्त्र्यहात्परामिति ॥

गालववचनदर्शनात् मातापित्रोर्मृतौ त्रिरात्रादुत्तरत्रदर्शपाते दशाहपिंडानां समापनमुक्तं ॥ इतरविषये यदा कदा वा दर्शपाते पिंडादेः तंत्रस्य समापनमितिप्रतिपादितं कालादर्शे॥

४७१ तथा तत्रैव—त्र्यन्तर्दशाहे दर्शश्चेत्तत्र सर्वं समापयेत् ।

पित्रोस्तु यावदाशौचं दद्यात्पिंडं जलाञ्जलीन् ॥

इतीदं गौतमवचनं ॥ मातापित्रोर्दशाहपिंडाद्यसमाप्त्यभिधानपरमपि त्र्यहादूर्ध्वं दर्शपाते पिंडादिसमाप्तिपरं ॥ त्र्यहात्पूर्वं दर्शपाते यावदाशौचं तावत्पिंडादि कुर्यात् ॥ एवं गालववचनेन समानार्थता यथा तथा व्याख्यातं कालादर्शे ॥

इदमयुक्तं वचनस्य प्रकटार्थाभ्युपगमनात् संकोचे मानाभावाच्च ॥ [४७२] निर्णयामृते तु ॥ एतत्सर्वं विस्तरमनूद्याङ्गीकृत्य च दशाहान्तरा दर्शापातेऽपि मातापितृविषये पिंडादिसमापनलक्षणविषये शिष्टाचारदर्शनेन गालवगौतमवचनयोर्देशाचारभेदेन व्यवस्था कृता॥ यस्मिन्देशे व्यहारपरं दर्शापाते उत्तरतंत्रस्य समापनाचारस्तद्विषयं गालववचनं ॥ यत्र देशे दर्शापातेऽपि दशाहपर्यन्तं पिंडादि क्रियते तद्विषयं गौतमवचनमिति व्यवस्था ॥ एवंपूर्वोक्तं न निन्दितं नाङ्गीकृतं ॥ पारिजाते त्विदं पिंडादिसमापनं क्षेत्रजदत्तादिपुत्राणां समापनकालाश्रयेण निर्गुणमातापितृविषयमुत्युक्तमथवेतिग्रन्थेन ॥ एवमितरविषये यदा कदा वा दर्शापाते समापनाभिधानमपि निर्गुणविजातीयविषयं ज्ञेयं ॥ [४७३] विज्ञानेश्वरेण त्वन्तरादर्शापाते पिंडादि असमाप्तेश्चिरंतनवृद्धसंप्रदायानुष्ठितत्वादयं पिंडादिसमाप्त्यभिधायकवचनगणो लोकाचारविरुद्ध इति मिताक्षरादौ नोपात्तः ॥ तेनेदं प्रकटीकृतं सर्वविषयेऽप्यन्तरापिंडादिसमापनं लोकाचारविरुद्धमिति ॥

अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्न तु ।

तथा—न शास्त्रदृष्ट्या विदुषा कदाचि—

दुल्लङ्घनीयाः कुलदेशधर्मा इति च ॥

यत्तु कालादर्शादावेतत्पिंडादिसमापनपक्षोद्भावनं कृतं ॥ तत्सत्तामात्रं दर्शितं ॥ दृष्टं च श्रुतावप्यनादृतपक्षाणामुद्भावनं ॥ यथा ॥ सुराग्रहे गोपश्वालंभनादीनामिति तद्वत् ॥ तस्मादन्तरा पिंडादिसमापनमिति ॥ इत्यन्तरा दर्शापाते पि-

डानिर्णयः ॥

[४७४] अथ नवकश्राद्धविधौ विशेषः ॥

यदुक्तं–नवश्राद्धान्यनुतिष्टेदेकोद्दिष्टविधानतः ।
इति नवमिश्रेषु ॥

नवश्राद्धममंत्रं च पिंडोदकविवर्जितम् ।

पिंडोदकं पिंडे उदकाञ्जलिरहितं न पात्रमालभ्य जपति ॥ नाशिषः प्रतिगृण्हीयात् । नान्नं विकिरेत् । पित्र्यमंत्रवर्ज्यं ॥ तथा प्रेतकल्पात्

आशिषो द्विगुणा दर्भाः स्वस्त्यस्तु प्रणवस्तथा ।
अग्नौ करणमुच्छिष्टं श्राद्धं वै वैश्वदेविकम् ॥
विकिरं न स्वधा रम्यं पितृशब्दो न विद्यते ।
अनुशब्दं न कुर्वीत नावाहनमथोल्मुकम् ॥
आसीमान्तं न कुर्वीत नमस्कारं प्रदक्षिणाम् ।
अष्टादशैव वस्तूनि प्रेतश्राद्धेषु वर्जयेत् ॥

रम्यं अभिरम्यतामिति उच्छिष्टं दर्भमार्जनम् ॥

इति प्रेतश्राद्धविधिः ॥

[४७५] अथ पित्रादिश्राद्धकर्मण्यधिकारिणो निर्णीयन्ते ॥

अविभक्तेषुभ्रातृषु श्राद्धादिधर्म एक एव स्यात् ॥

तदुक्तं मरीचिना- सर्वैरनुमतिं कृत्वा ज्येष्ठेनैव तु यत्कृतम् ।
द्रव्येण चाविभक्तेन सर्वैरेव कृतं भवेत् ॥

स्मृतिसारेऽपि–अविभक्तेषु संसृष्टेष्वेकेनापि कृतं तु यत् ।

देवयज्ञादि सर्वार्थं लौकिकाग्नौ कृतं च यत् ॥

तथा—भ्रातॄणामविभक्तानामेको धर्मः प्रवर्तते ।

विभागे सति धर्मोऽपि भवेत्तेषां पृथक् पृथक्॥ इति॥

याज्ञवल्क्योऽपि—

एकेनैवाविभक्तेषु कृते सर्वैस्तु तत्कृतम् ।

विभक्तास्तु पृथक्कुर्युः प्रतिसंवत्सरादिकमिति ॥

अमुमेवार्थं गरुडपुराणमप्याह ॥

विभक्तैश्च पृथक्कार्या क्रिया सांवत्सरादिका ।

एकैकेन प्रकर्तव्या पुत्रेणाथ स्वयं स्वयम् ॥

इत्येवं विभक्तभ्रातॄणां पृथक्श्राद्धाद्यनुष्ठानविधानेऽप्यौर्ध्वदेहिके विशेष उक्तः प्रेतकल्पात्—

[४७६] बहवोऽपि यदा पुत्राविधिमेकः समाचरेत् ।

नवश्राद्धं सपिंडं च श्राद्धान्यपि च षोडश ॥

एकेनैव तु कार्याणि संविभक्तधनेष्वपि ।

अन्त्येष्टिं कुरुते ह्येक ऋषिभिः समुदाहृतम् ॥

इत्यादिवचनेभ्यो विभक्तमप्यौर्ध्वदैहिककर्मोपयोगी द्रव्यमविभक्तामिव संपाद्य सर्वानुमत्या ज्येष्ठ एव सपिंडीकरणान्तं कुर्यात् ॥ तेन कृतं सर्वैरेव कृतं भवतीति स्मृत्यर्थसारादिषु उक्तं ॥ श्रुतावपि एकस्मिन्कर्मणि कर्तृबहुत्वं श्रूयते॥ यथा ॥ गृहपतिसप्तदशाः सत्रमासीरन्नित्यत्र सप्तदशानां स्वांशदानैर्यागसाधनं द्रव्यं साधारणीकृत्य सर्वेषां त्यागकरणेन सहकर्तृकत्वं तद्वत्सर्वेषां कर्तृत्वमिति ॥ तथा स्मृत्यर्थसारे॥ दाहाद्युपक्रम्य एकादशाहादौ ज्येष्ठादियोग्यः कुर्यात् ॥ नवश्राद्धानि

षोडशश्राद्धानि च विभक्तो वाविभक्तो वा एवं कुर्यात् ॥ सपिंडीकरणं विभक्ताः पुत्राः सधनाश्चेदेकस्मिन्दिने वृद्धिकामाश्चेत्पृथक्कुर्युः नान्यथा॥सपिंडनपृथग्विधानं देशान्तरवसतां पुत्राणां कृतसापिंडनस्यानिश्चयाभिप्रायेण ॥ मिताक्षरायां तु प्रेतश्राद्धसहितं सपिंडीकरणं संविभक्तधनेषु बहुषु भ्रातृषु सत्स्वप्येकेनैव कृतेनालं न सर्वैः कर्तव्यमित्युक्तं ॥ अतऊर्ध्वं सर्वं पृथगेव कुर्युः ॥ सर्वत्र गोत्राज्ञाने नाम्नैव कार्यमिति ॥

४७७ अथ पुत्रप्रभृत्यधिकारिणः ॥ सुमन्तुः ॥

मातुः पितुश्च कुर्वीत मृतयोरौरसः सुतः ।
पैतृमेधिकसंस्कारं मंत्रपूर्वकमादृतः ॥ इति ॥

औरसो धर्मपत्नीज इति ॥ औरसाद्यपविद्धपर्यन्तं पुत्रा वक्ष्यन्ते ॥

तथा—पुत्रः पौत्रश्च तत्पुत्रः पुत्रिकापुत्र एव चेति ।

तथा—पितुः सहोदरो भ्राता तदभावे तु तत्सुतः ।
ततस्त्वसोदरो भ्राता तदभावे तु तत्सुतः ॥

शङ्खः—पुत्राभावे तु पत्नी स्यात्तदभावे तु सोदर इति ।

तथा—पुत्रः कुर्यात्पितुः श्राद्धं पत्नी च तदसन्निधौ ।
धनहार्यथ दौहित्रस्ततो भ्राता च तत्सुत इति ॥

तथा—भ्रातृजेन तु कर्तव्यं यस्य नास्ति सहोदर ॥ इति स्मृत्यन्तरात् ॥ तथा—

उत्सन्नबान्धवं प्रेतं पिता भ्राता तथाग्रजः ।
जननी वापि संस्कुर्यान्महदेनोऽन्यथा भवेत् ॥

४७८ ननु—न च माता न च पिता कुर्यात्पुत्रस्य पैतृकम् ।

नाग्रजश्च तथा भ्राता भ्रातॄणां च कनीयसाम् ॥

इत्यादिवाक्यैर्मातापित्रोः पुत्रस्योर्ध्वदैहिकनिषेधात् ॥ तथा अग्रजस्यकनीयसां संस्कारे निषेधात् ॥ कथमधिकारस्तेषामिति चेत् निषेधस्य पुत्राद्यधिकारिसद्भावविषयत्वं स्नेहविहीनविषयत्वं वा ततश्च पौत्रस्य कनिष्ठभ्रातुः भ्रातृपुत्रस्य च सद्भावे ज्येष्ठभ्रातुः मातापित्रोश्च नाधिकारः ॥ कनिष्ठभ्रातृभ्रातृपुत्रयोः पुत्रत्वेन संस्तवात् ॥ पौत्रस्य स्वसन्ततित्वात् ॥

भ्रातॄणामेकजातानामेकश्चेत्पुत्रवान्भवेत् ।
सर्वे ते तेन पुत्रेण पुत्रिणो मनुरब्रवीत् ॥
पत्नीनामेकजातीनामेका चेत्पुत्रिणी भवेत् ।
सर्वास्तास्तेन पुत्रेण पुत्रिण्यो मनुरब्रवीत् ॥

एवं पुत्राभावे पौत्रस्य तदभावे लघुभ्रातुः तदभावे भ्रातृपुत्रस्य तदभावे ज्येष्ठभ्रातुस्तदभावे मातापित्रोरधिकारः ॥ एतदर्थाशयेनाह

४७९ बौद्धायनः—यदि स्नेहेन कुर्यात्तां सपिंडीकरणं विना ।
गङ्गायां तु विशेषेण ज्यायानपि समाचरेत् ॥

स्नेहवशात् मातापितरौ ज्येष्ठोऽपि दद्युरिति ॥ कात्यायनोऽप्याह—

अनुजा अग्रजा वापि भ्रातुः कुर्वीत सत्क्रियाम् ।
ततस्त्वसोदरास्तद्वत्क्रमेण तनयास्तयोरिति ॥

संग्रहेऽपि—पत्नी भ्राता च तज्जश्च पिता माता स्नुषा तथा ।
भगिनी भागिनेयश्च सपिंडः सोदकस्तथा ॥
असन्निधाने पूर्वेषामितरे पिंडदाः स्मृताः ॥

विष्णुपुराणे तु—

पुत्रः पौत्रः प्रपौत्रश्च तदूर्ध्वं भ्रातृसन्ततिः ।
सपिंडसन्ततिर्वापि क्रियावान्नृप जायते ॥
तेषामभावे सर्वेषां समानोदकसन्ततिः ।

श्रीमार्कण्डेयोऽपि—सख्युरुच्छिन्नबन्धोश्च सखापि श्वशुरस्य च ।
जामाता स्नेहतः कुर्यादखिलं पितृमेधकमिति ॥
सर्वाभावे तु नृपतिः कारयेत्तस्य रिक्थतः ।
तज्जातीयैर्नरैः सम्यक् दाहाद्याः सकलाः क्रियाः ॥

४८० स्कन्दपुराणेऽपि—

सर्वाभावे स्त्रियः कुर्युः स्वभर्तृणाममंत्रकम् ।
पित्रोरनुपनीतोऽपि विदध्यादौरसः सुतः ॥
ऊर्ध्वदैहिकमध्ये तु संस्कृताः श्राद्धकारिणः ।

औरसः सुतः अनुपनीतोऽपि पित्रोर्मातापित्रोरूर्ध्वदेहिकं कुर्यात् ॥ कात्यायनः—

असंस्कृतेन पत्न्या च ह्यग्निदानं समंत्रकम् ।
कर्तव्यमितरत्सर्वं कारयेदन्यमेवहि ॥

शङ्खोऽपि—भार्यापिंडं पतिर्दद्याद्भर्तुर्भार्या तथैव च ।
श्वश्र्वादेश्चस्नुषा चैव तदभावे तु सोदर इति ॥

पुत्राभावे मिथो दंपती सपत्न्यश्चेति स्मृत्यर्थसारात् ॥

अपुत्रायां मृतायां च पतिः कुर्यात्सापिंडनम् । इति गरुडपुराणं ॥ तथा—

विदध्यादौरसः पुत्रो जनन्या ऊर्ध्वदैहिकम् ।
तदभावे सपत्नीजः क्षेत्रजाद्यास्तथाहृता इति

कात्यायनः ॥ तथा—

बह्वीनामेकपत्नीनामेकाचेत्पुत्रिणी भवेत्
सर्वास्तास्तेन पुत्रेण पुत्रिण्यो मनुरब्रवीत् ।

पुत्रपौत्राप्रपौत्रोणामभावे अन्येषामधिकार सति । पुत्रे निषेध उक्तो ऋष्यशृङ्गेण—

[४८१] पुत्रेषु विद्यमानेषु नान्यं वै कारयेत्स्वधाम् ।
अनुकल्पो ह्यपुत्रस्य भ्रातुः कुर्यात्सनाभिकः ॥ इति ॥

तथा स्मृत्यन्तरे—

अपुत्रस्य पितृव्यस्य तत्पुत्रोवाग्रजो भवेत् ।
स एव तस्य कुर्वीत पिंडदानोदकक्रियाः ॥
पार्वणं तेन कर्तव्यं पुत्रवद्भ्रातृजेन तु ।
पितृस्थाने तु तं कृत्वा शेषं पूर्ववदाचरेत् ॥

पार्वणं संन्यासिविषयं । धनगृहीता वा पिंडादि कुर्यात् ॥ तदुक्तं स्कन्दपुराणे—

मलमेतन्मनुष्याणां द्रविणं परिकीर्तितम् ।
तद्गृण्हन्मलमादत्ते दुर्विधा ज्ञानिनामपि ॥
ऋषिभिस्तस्य निर्दिष्टा निष्कृतिः पावनी परा ।
आदेहपतनात्तस्य कुर्यात्पिंडोदकक्रियामिति ॥

अदायहरोऽपि पुत्रीकृतोऽपि दुहितुः सुतः मातामहस्योत्तराक्रियां कुर्यात् मातामहशाखया इत्युक्तं प्राक् ॥ तदुक्तं पाराशरेण—दौहित्रैर्वा नरश्रेष्ठ कार्यास्तत्तनयैर्यथेति ॥

[४८२] तथा स्मृत्यर्थसारे ॥ दौहित्रमातामहौ परस्परं दत्तः ॥ इत्याद्याधिकारिणो ज्ञेयाः ॥ तथा उपनयनव्रतोपयुक्तो ब्रह्मचार्य-

पि मातापित्रुपाध्यायाचार्याणामौर्ध्वदैहिकं कुर्यात् ॥ तेनोपनयनव्रतान्न भ्रश्यते ॥ तदाह याज्ञवल्क्यः—

आचार्यपित्रुपाध्यायान्निर्हृत्यापि व्रती व्रती ।
सकटान्नं च नाश्नीयान्न च तैः सह संवसेत् ॥

उपनयनमात्रं कृत्वा साङ्गवेदाध्यापयिताचार्यः वेदैकदेशाध्यापयिता उपाध्यायः कटान्नं सूतकान्नं । व्रती ब्रह्मचारी व्रत्येव ॥ उपनयननिमित्तभिक्षाचरणादिव्रतान्न भ्रश्यते भ्रष्टो न भवति ॥ व्रतसमाप्त्यनन्तरमाशौचविधिरिति मिताक्षरायां ॥ तथा मातामहस्याप्युक्तं कालादर्शे—

मातापित्रोरुपाध्यायाचार्ययोरूर्ध्वदैहिकम् ।
कुर्यान्मातामहस्यापि व्रती न भ्रश्यते व्रतात् ॥ इति॥

४८३ वसिष्ठोऽपि ॥ ब्रह्मचारिणः कटाह कर्मणो व्रतान्निवृत्तिरन्यत्रमातापित्रोरिति ॥ अत एव स्मृत्यर्थसारे ॥ मातापित्रादिव्यतिरिक्तप्रेतकर्मणः करणे पुनरुपनयनं कार्यं ॥ भविष्यत्पुराणे तु—

व्रतस्थोऽपि यथा पुत्रः पितुः कुर्यात्क्रियां नृप ।
तथामातामहस्यापि दौहित्रः कर्तुमर्हतीति ॥

मातापित्रादिव्यतिरिक्तविषये तु ब्रह्मचारी न कुर्यात्॥ तदुक्तं—न ब्रह्मचारिणः कुर्यु रुदकं पतिता न च । इति ॥ उदकमिति पिंडदानस्याप्युपलक्षणं ॥ तथा वृद्धवसिष्ठः—

क्लीबाद्या नोदकं कुर्युस्तेना व्रात्यादिधर्मिणः ।
गर्भभर्तृद्रुहश्चैव सुराप्यश्चैव योषितः ॥ इत्यादि

निन्दिता निषिद्धाः—

इत्यधिकारिनिर्णयः ॥

## [४८४] अथाशौचवतां पुत्रादीनां कर्तव्यताविधिः

रात्रिमृतस्य रात्रावेव दाहः कार्यो वपनं प्रातः कुर्यात् ।

तदुक्तं स्मृतिसंग्रहे—

रात्रौ दग्ध्वा च पिंडान्तं कृत्वा वपनवर्जितम् ।

वपनं नेष्यते रात्रौ श्वस्तस्य वपनक्रिया ॥

यजुर्निगमवचनं—संध्यायां वा तथा रात्रौ दाहः पाथेयकर्म च ।

नवश्राद्धं च नो कुर्यात्कृते निष्फलतां व्रजेत् ॥

एतत्तु दिनमृतस्य आलस्यादिना रात्रौ दाहो न कार्य इत्येवंपरं ॥ प्रथमादारभ्य प्रतिदिनं यच्छ्राद्धं तन्नवश्राद्धमुच्यत इत्युक्तं चण्डुनिबन्धे ॥ तदभिप्रायेण रात्रौ दशाहपिंडो नारंभणीय इति ॥ तथा रात्रिमृतस्य आलस्येन दिवा दाहो न कार्यः ॥ शवं पर्युषितं नैव कुर्यादिति ॥ शवं रात्र्युषितं चेत्त्रीन्कृच्छ्रान्कृत्वा दहेच्छवमिति स्मृत्यन्तरं ॥ तथा गुरौ मृते उपवसेयुः पत्नीपुत्राश्चेति ॥

[४८५] स्मृत्यन्तरे—महागुरुनिपाते तु आर्द्रवस्त्रोपवाससौ ।

महागुरुः पिता—

### अथ वपनकालः ॥

गङ्गायां भास्करक्षेत्रे मातापित्रोर्गुरौ मृते ।

आधाने सोमपाने च वपनं सप्तसु स्मृतम् ॥

अत्र महागुरुः पिता मंत्रोपदेष्टा विद्योपदेष्टा च ॥

तथा च—द्वितीयेऽहनि कर्तव्यं क्षुरकर्म प्रयत्नतः ॥

तृतीये पञ्चमे वापि सप्तमे वा प्रदानतः ॥ इति ॥

अत्र द्वितीयाहादिविकल्पः आचारतिलके—

चतुर्विधं तु यत्पापं केशमाश्रित्य तिष्ठति ।
तावच्च सूतकी ज्ञेयो यावत्केशान्न मुञ्चतीति ॥

आपस्तम्बस्तु ॥ अनुभाविनां च परिवपनमिति ॥ अनुभाविनोऽल्पवयसःसपिंडाः पुत्राश्चेति पारिजाते ॥ मिताक्षरायां तु ॥ क्षौरं तदनुभाविनां ॥ शावं दुःखं अनुभवन्तीति अनुभाविनः सपिंडाः ॥ अथवा—

अनु पश्चाद्भवन्तीत्यनुभाविनोऽल्पवयसः ॥ अनुभाविनः पुत्रा इति केचित् ॥ तेषां वपनमिति ॥ तथा देवलः—

दशमेऽहनि संप्राप्ते स्नानं ग्रामाद्बहिर्व्रजेत् ।
तत्र त्याज्यानि वासांसि केशश्मश्रुनखानि च ॥

तथा स्मृत्यन्तरे ॥ अन्ते च वाससां त्याग इत्युक्तं ॥ अनेन वचनेन वपनस्य द्विरावृत्तिर्न ॥ किंतु विकल्पः ॥ सप्तमे वा प्रदानत इति एकादशाहात्पूर्वमित्यर्थः ॥ [४८६] स्मृत्यर्थसारेऽपि ॥ वपनं पुत्राणां प्रथमेऽन्हि कार्यं दशमे वा ॥ श्राद्धादर्वाक्कस्मिंश्चिद्दिने वा ग्रामाद्बहिः कार्यं ॥ नखनिकृन्तनं च ॥ मिताक्षरायां दशमेऽहनीति वाक्यमुदाहृत्य द्वितीयेऽहनीति वाक्यमुदाहृतं तेनावृत्तिर्निरस्ता ॥ तथा मनुनात्र विशेषोऽप्युक्तः

अक्षारलवणान्नाः स्युर्निमज्जेयुश्च तेऽन्वहम् ।
मांसाशनं च नाश्नीयुः शयीरंश्च पृथक् क्षितौ ॥इति॥

याज्ञवल्क्यः—क्रीतलब्धाशनाभूमौ स्वपेयुस्ते पृथक्पृथगिति ॥

क्रीतं अयाचितं वा अशनं येषां ते क्रीतलब्धाशना भवेयुरिति ॥ अयाचितालाभे अनशनमर्थादुक्तं भवति इति मिताक्षरायां ॥ क्रीतलब्धादिनियमो दिनत्रयपर्यन्तं स्मृत्यर्थ-

सारे ॥ अयाचितान्नेन वा अन्यगृहपक्केन हविष्येन वर्तेरन् ॥ न स्वगृहपक्केन क्षारलवणमाषमांसापूपपायसवर्जं ॥ तथाधः- शायिनो ब्रह्मचारिण इति वसिष्ठः ॥ प्रस्तरे त्र्यहमनश्नन्त आसीरन् ॥ अनश्नन्त इति क्रीतलब्धाशना इत्यर्थः ॥ शय- नार्थं तृणमयः प्रस्तर इति स्मृत्यर्थसारे ॥ [४८७] प्रेतकृत्यं कुर्वतः सञ्चयनादर्वाक् स्त्रीसङ्गमे चान्द्रायणं कार्यं ॥ अन्येषां प्रेताशौचिनां पूर्वं त्रिरात्रं पश्चादुपवास इति मिताक्षरायां ॥

प्रारब्धे प्रेतपिंडे तु मध्ये चेज्जननं भवेत् ।
तथैवाशौचपिंडांस्तु शेषान्दद्याद्यथाविधीति ॥

तथा शावाशौचयोः सन्निपातेऽपि प्रेतकृत्यं कार्यं ॥

अन्तर्दशाहे जननात्पश्चात्स्यान्मरणं यदि ।
प्रेतमुद्दिश्य कर्तव्यं पिंडदानं स्वबन्धुभिरिति ॥

तत्रैवोक्तं ॥ अन्ये नियमाः स्मृत्यन्तरतोऽवगन्तव्या इति ॥

## इति आशौचिनां नियमानिर्णयः ॥

---

## अथ एकादशाह द्वादशाहनिर्णयः ॥

एकादशाहे द्वादशाहे क्रियमाणानां मासिकानां श्राद्धा- नां वृषोत्सर्गस्य च निर्णयः प्रस्तूयते ॥ सपिंडीकरणेन प्रेत- स्य पितृत्वप्राप्तिर्जायते इति ॥ ततः प्राक् षोडशश्राद्धप्रति- पादनमाह वृद्धवसिष्ठः—

श्राद्धानि षोडशादत्वा न तु कुर्यात्सपिंडताम् ।
श्राद्धानि षोडशापाद्य विदधीत सपिंडतामिति ॥

तानि षोडशमासिकाभिधानानीत्युक्त्वा उक्तं मिताक्षरायां—

सपिंडीकरणादर्वाक् कुर्याच्छ्राद्धानि षोडश ।

एकोद्दिष्टविधानेन कुर्यात्सर्वाणि तानि तु ॥ इति ॥

प्रेतैकोद्दिष्टविधानेनेति शेषः ॥ द्वादश प्रतिमास्यानि द्वादशाहे त्रैपक्षिकं ऊनषण्मासिकमूनाब्दिकं चेति ॥

४८८ तदाह व्यासः—

द्वादशाहे त्रिपक्षे च षण्मासे मासिकाब्दिके ।

श्राद्धानि षोडशैतानि संस्मृतानि मनीषिभिरिति ॥

द्वादशाहे विहितं ऊनमासिकं द्वादशाहेऽपि किंचिदूनो मास इति ॥ तथा च गालवः—

ऊनषण्मासिकं षष्ठे मास्यूने ह्यूनमासिकम् ।

त्रैपक्षिकं त्रिपक्षे स्यादूनाब्दं द्वादशे तथेति ॥

गोभिलः—मरणाद्द्वादशेऽन्हिस्यान्मास्यूने ह्यूनमासिकमिति ।

कुत्रचित्तु ऊनषण्मासिकोनाब्दिके रिक्तसंज्ञिके श्राद्धे इति ॥ एतान्येव षोडशश्राद्धानि ॥ जातूकर्ण्योऽपि—

द्वादश प्रतिमास्यानि आद्यं षाण्मासिकं तथा ।

त्रैपक्षिकाब्दिके चेति श्राद्धान्येतानि षोडश ॥

एकादशान्हिकेनाद्येन सहद्वादश प्रतिमास्यानि ॥ आद्यशब्दः ऊनपरः ॥

याज्ञवल्क्यः—मृतेऽहनि तु कर्तव्यं प्रतिमासं तु वत्सरम् ।

प्रतिसंवत्सरं चैवमाद्यमेकादशेऽहनि ॥

आद्यं सर्वैकोद्दिष्टप्रकृतिभूतमेकादशेऽहनि ॥ ४८९ स्मृत्यर्थसारे प्रतिमासं मृताहे संवत्सरविहितानि द्वादश ॥ तथा

द्वादशाहे त्रिपक्षे ऊनषण्मासिके ऊनाब्दिके चेति चत्वारि ॥ एवं षोडश ॥ तत्राद्यमेकादशेऽन्हि उत्कृष्यते ॥ ननु अत्र केचन मृतेऽहनि आद्यमासिकं आद्यमेकादशेऽहनीति । एकादशेऽन्हि यच्छ्राद्धं तदन्यदेव॥ प्रेतविमुक्त्यर्थं श्राद्धान्तरं नतु मासिकं । आद्यशब्दोऽपि कर्तव्यश्राद्धानां आदित्वादुपपद्यत एवेत्याहुः तन्नयुक्तं संख्याविरोधात् ॥

द्वादश प्रतिमास्यानि आद्यं षाण्मासिकं तथा ।
त्रैपक्षिकाब्दिके चेति श्राद्धान्येतानि षोडश ॥

इति संख्याविरोधात् ॥ किं च ॥ आद्यश्राद्धस्य श्राद्धान्तरत्वे मासिकव्यपदेशो न स्यात् अस्ति च सः॥ तस्मात्सूक्तमाद्यमेकादशेऽहनीति ॥ आद्यश्राद्धमेकादशेऽन्हि कुर्यादित्यर्थः ॥ ४५० अथ शुचिना कर्म कर्तव्यमिति विरोधात् ॥ दशाहाशौचिनो ब्राह्मणस्य आद्यश्राद्धं भवतु एकादशाहे ॥ परंतु क्षत्रे द्वादश विशां विंशतिस्त्रिंशत्तु शूद्रे क्रमादिति वचनेभ्यः सूतकाहाधिकवतां क्षत्रियादीनामशुचित्वेन कथमाद्यमेकादशाहे स्यादत आद्यमेकादशेऽहनीति स्वस्वाशौचनिवृत्तिकालोपलक्षणमिति वक्तव्यं ॥ इत्याशंकां परिजिहीर्षुः पैठीनासिराह—

एकादशेऽन्हि यच्छ्राद्धं तत्सामान्यमुदाहृतम् ।
चतुर्णामपि वर्णानां सूतकं तु पृथक्पृथक् ॥

सूतकेऽपि कुर्यादित्याशयः अथाशौचापगम इति सामान्येनोपक्रम्यएकोद्दिष्टविधायकं विष्णुवचनपि दशाहाशौचाविषयमपि घटते ॥ न क्षत्रियादीनां आशौचकालनिवृत्त्युपलक्ष-

कमिति मिताक्षरायां ॥ तथा ॥ आद्यमेकादशेऽह्नीत्यनेनाद्योद्देशेनैकादशाहः कालत्वेन विधीयते ॥ तत्र न विधौ परशब्दार्थ इति न्यायेनापि एकादशाहशब्दस्य सूतकनिवृत्त्युपलक्षकत्वं न शक्यते वक्तुं ॥

एकादशेऽन्हि यच्छ्राद्धं तत्सामान्यमुदाहृतम् ॥

इत्यनेन च एकादशाहकालिकमेवाद्यं ॥ चातुर्वर्ण्यसाधारण्येन विहितमाद्यश्राद्धं शुद्धो वाशुद्धो वापि कुर्यादिति॥ [४५१] अथैकादशाहे दीर्घाशौचवतः क्षत्रियादेः कथं शुद्धत्वं विप्रस्य कथमशुद्धत्वमिति तत्प्रदर्श्यते स्मृतिवचनैः ॥

सर्वेषामेव वर्णानां सूतके मृतके तथा ।

दशाहाच्छुद्धिरथवा मुनिः शातातपोऽब्रवीत् ॥

इत्यङ्गिरसो वचनात् दशाहाश्रयेण क्षत्रादेः शुद्धत्वं ॥ तथा शूद्राणां सपिंडीकरणं द्वादशेऽन्हि कार्यमिति मिताक्षरोदाहृतं विष्णुवचनं सूतकनिवृत्तौ लिङ्गं च ॥ तथा विप्रविषये मातरि पूर्वमृतायां तन्निमित्ताशौचमध्ये पितृमरणे पितुः शेषेण शुद्धिः स्यात् ॥ तदुक्तं मिताक्षरायां—

मातर्यग्रे प्रतीतायामशुध्धौ म्रियते पिता ।

पितुःशेषेणशुध्धिः स्यान्मातुः कुर्यात्तु पक्षिणीम् ॥

इत्येवं विधे विषये विप्रोऽप्येकादशाहे अशौचवान् एतत्सर्वं मनसि कृत्याद्यश्राध्धावश्यकर्तव्यतां शङ्खलौगाक्षी आहतुः ॥

आद्यश्राध्धमशुध्धोऽपि कुर्यादेकादशेऽहनि ।

कर्तुस्तात्कालिकी शुध्धिरशुध्धः पुनरेव सः ॥

सूतके मृतके कर्मैकाहिकद्वादशाहिकम् ।

शुध्धो वाप्यथवाशुध्धः कुर्यादेवाविचारयन् ॥

[४८२] तथा कालादर्शे—नवश्राध्धमशुध्धोऽपि कुर्यादेकादशेऽहनि।
कर्तुस्तात्कालिकी शुध्धिरशुध्धः पुनरेव सः ॥

तस्मात्सर्ववर्णैराद्यश्राध्धमेकादशेऽन्हि कर्तव्यमिति सि-
ध्धं ॥ तदाद्यश्राध्धस्य वृषोत्सर्गपूर्वकत्वात्पूर्वं वृषोत्सर्ग इति ॥
तदुक्तं गरुडपुराणे—अकृत्वा तु वृषोत्सर्गं कुरुते पिंडपातनम्।
नोपतिष्ठति तच्छ्रेयो दातुः प्रेतस्य निष्फलम् ॥
पिंडपातनं आद्यश्राध्धपिंडं ॥ तथा—

एकादशाहे प्रेतस्य यस्य नोत्सृज्यते वृषः ।
प्रेतत्वं सुस्थितं तस्य दत्तैः श्राध्धशतैरपि ॥

तथा तत्रैव—पुत्रेषु विद्यमानेषु नान्यं वै कारयेद्वृषम् ।
तथा—पुत्रो वापि पिता वापि पौत्रो वा बन्धुजस्तथा ।
य ऋणस्यार्थभागी च मृते कुर्याद्वृषोत्सवमिति ॥
सोऽपि षोडशश्राध्धपूर्वकः क्रियते ॥ तानि तु

अन्यषोडशकं मध्ये द्वितीयं तार्क्ष्य मे शृणु ।
ब्रह्मविष्णुशिवाद्यं च तथान्यश्राध्धपञ्चकमिति ॥

विधिर्विष्णुकल्पतो ज्ञेय इति ॥ वृषोत्सर्गविधिः स्वगृह्या-
दिति ॥ [४८३] अथाद्यश्राध्धविधिरुच्यते ॥

नवभिर्दिवसैर्दद्यान्नवपिंडान्समाहितः ।
दशमं पिंडमुत्सृज्य रात्रिशेषे शुचिर्भवेत् ॥

शुचित्ववचनमपरेद्युः क्रियमाणश्राध्धार्थब्राह्मणनिमंत्र-
णाभिप्रायेणेति मिताक्षरायां ॥
आत्रिः—प्रेतार्थं सूतकान्ते तु ब्राह्मणान्भोजयेद्दश ।

आद्यश्राध्धनिमित्तं तु चैकमेकादशेऽहनि ॥

एकादशेऽहनि आद्यश्राध्धनिमित्तेन प्रेतमुद्दिश्य दशब्राह्मणान् एकं च ब्राह्मणं एवमेकादश ब्राह्मणान् भोजयेदित्यर्थः॥ तथा स्मृत्यन्तरात्—

एकादशसु विप्रेषु प्रेतमावाह्य भोजयेत् ।
तत्राद्याय च शय्यादि दद्यादाद्यमिति स्मृतम् ॥

तेषां मध्ये आद्याय प्रथमं प्रक्षालितपादाय शय्यादि प्रेतशय्यादि दद्यात् ॥ आदिशब्दात् वासोहिरण्यदास्युपानहछत्रदक्षिणोदकुंभानामुपसंग्रह इत्येवमाद्यं स्मृतं ॥
अत्रैव विशेषः—आद्यश्राद्धं द्विजेऽग्नौ वा कुर्यात्पुनरपि द्विजे।

आद्यश्राद्धं द्विजे कुर्यात् ॥ द्विजमावाहनीयकं कृत्वा कुर्यात् ॥ अग्नौ वा आद्यं कुर्यात् ॥ अग्नौ प्रेतमुद्दिश्य जुहुयादित्यर्थः॥

ब्राह्मणं भोजयित्वाग्नौ हुत्वा पुनरपि द्विजे ।
पुनरपि सपिंडीकरणादूर्ध्वं एवं च द्विरावृत्तिरिति ॥
४८४ मत्स्यः—एकादशेऽहनि तथा विप्रानेकादशैव तु ।
क्षत्रादेः सूतकान्ते तु भोजयेदयुजो द्विजान् ॥
द्वितीयेऽन्हि पुनस्तद्वदेकोद्दिष्टं समाचरेत् ।

इति स्मृत्यर्थसारे ॥ एकादशेऽन्हि एकादशब्राह्मणभोजनं॥ प्रेतोद्देशेन रुद्ररूपप्रेतोद्देशेन वा कार्यमित्यादिविधिः॥
गोभिलः—ब्राह्मणं भोजयेदाद्ये होतव्यमनलेऽथवा ।
पुनश्च भोजयेद्विप्रं द्विरावृत्तिर्भवेदिति ॥

अथ अनशनादिना वैधमरणे निर्णयः ॥ विधिना अ-

नशनादिना मृतानाद्यश्राद्धं चतुर्थेऽन्हि कुर्यात् ॥ तदुक्तं शातातपेन—वृद्धः शौचक्रियालुप्तः प्रत्याख्यातभिषक् क्रियः ।

आत्मानं घातयेद्यस्तु भृग्वग्न्यनशनांबुभिः ॥
तस्य त्रिरात्रमाशौचं द्वितीयेत्वस्थिसञ्चयः ।
तृतीये तूदकं दत्वा चतुर्थे श्राध्धमाचरेत् ॥

श्राध्धमैकादशाहिकं ॥ आद्यमेकोद्दिष्टं ॥ प्रेतकल्पेऽपि—

आशौचं यावदेव स्यात्तावत्पिंडोदकक्रिया ।
यत्र त्रिरात्रमाशौचं तत्रादौ त्रीन्प्रदापयेत् ॥
चतुरस्तु द्वितीयेऽन्हि तृतीये त्रींस्तथैव च
एकोद्दिष्टं तु वै श्राध्धं चतुर्थेऽहनि कारयेत् ॥

अनशनाद्युपक्रम्य अग्निपुराणेऽपि—

त्रिरात्रं तत्र चाशौचं द्वितीये त्वस्थिसञ्चयः ।
तृतीये तूदकं कार्यं चतुर्थे श्राध्धमाचरेत् ॥

[४९५] एभिर्वचनैरुत्सर्गापवादन्यायेन सामान्यविशेषन्यायेन च एकादशाहविहितमाद्यमेकोद्दिष्टं श्राध्धं अनशनादिवैधमृतानां चतुर्थेऽन्हि विधीयते ॥ अत एवाशौचापगम इति सामान्येनोपक्रम्य विष्णुना विहितमेकोद्दिष्टमस्मिन्विषयेऽप्युप्युपपद्यते सामान्येनोक्तत्वात् ॥ तद्विध्यपकृष्टं श्राध्धं तस्य वृषोत्सर्गपूर्वकत्वात् तदन्तन्यायेन वृषोत्सर्गमपकृष्यति॥ तदन्तन्यायो यथा ॥ अग्नीषोमीये पशौ प्रकृतितो हविरासादनोत्तरकाले प्रयाजानुष्ठान प्राप्तावपकर्षः ॥ तिष्ठन्तं पशुं यजन्तीति ॥
[४९६] अथवा स्वल्पद्वादश्यां भुज्यपकर्षे प्रातर्मध्यान्हिकयोः कर्मणोरपकर्षः ॥ तद्वदिति ॥ एवं स सकलमेकादशाहे विहितं

कर्म चतुर्थेऽन्हि कुर्यादिति सिध्धं ॥

द्वितीयेऽन्हि पुनस्तद्वदेकोद्दिष्टं समाचरेत् ।

इति मत्स्यवचनमत्राप्यनुसन्धेयं ॥ यत्तु शङ्खवचनं ॥

सद्यः शौचेऽपि दातव्यं प्रेतस्यैकादशेऽहनि ।

स एव दिवसस्तस्य श्राध्धशय्यासनादिषु ॥

तत्तु दौहित्रस्वीकृतभ्रात्रादीनां मुख्याधिकार्यभावे अनुकल्पादागतैर्मातामहसंस्कृतभ्रातृमित्रादिभिः क्रियमाणमौर्ध्वदैहिकं कर्म सद्यः शौचत्वेऽपि वृषोत्सर्गाद्यश्राध्धमेकादशेऽन्हि कार्यमेवं परं संभाव्यते ॥ अन्यथा अस्य वैधानशनादिमृतप्रेतविषयत्वे चतुर्थदिवसे प्रेतश्राद्धविधायकानि स्मृतिवचनानि पुराणवाक्यान्यप्रमाणानि स्युः ॥ [४५७] संभवत्यस्य वाक्यस्य विषयान्तरत्वे तानि बहूनि कथमप्रमाणानि भवेयुः ॥ यत्तु कैश्चित् प्रायोऽनशनादिविहितमार्गेण मृतानां सद्यः शौचेऽप्याद्यमेकादशे एवान्हि कुर्यादिति विलिख्य शङ्खवचनं लिखितं ॥

सद्यः शौचेऽपि दातव्यं प्रेतस्यैकादशेऽहनि । इत्यादि॥

तत्तु शिष्टाचाराभावात् ॥ तथा शास्त्रविरुद्धत्वाच्च श्रुतिस्मृत्युक्त शुद्धमार्गाचरणपरैरानन्दपुरीयैर्द्विजवरैर्विगीतं ॥ तस्मादनशनादिविहितमार्गेण मृतानां चतुर्थेऽन्ह्येवाद्यश्राद्धमिति निर्णयः ॥ अथ पुत्रः पौत्रः प्रपौत्र इत्यादयः श्राद्धाधिकारिणो निरूपिताः दाहाधिकारिनिर्णये ॥ तत्र दौहित्राद्यसगोत्राधिकारिगतं किञ्चिद्विशेषाभिधानमुच्यते ॥

यथाह वसिष्ठः—अपुत्र पौत्र सन्ताने दौहित्रा धनमाप्नुयुः ।

पूर्वेषां तु स्वधाकारे पौत्र दौहित्रका मताः ॥

[४५८] स्कन्दपुराणे—श्राद्धं मातामहानां तु अवश्यं धनहारिणा।
दौहित्रेणाथ निष्कृत्यै कर्तव्यं पूर्वमुत्तरमिति ॥

पूर्वं दाहादिसपिंडनान्तं उत्तरं प्रत्याब्दिकदर्शादिकं ॥ अत्र पूर्वमुत्तरमिति भेदद्वयाभिधानात् ॥ पूर्वमुत्तरं च भिन्नभिन्नधर्मकं ॥ उत्तरं दौहित्रादिना स्वशाखाविधिना कार्यं ॥ पूर्वं दाहादिसपिंडनान्तं दौहित्राद्यसगोत्राधिकारिभिः प्रेतस्य मातामहादेर्योवेदस्तद्वेदविधिना कार्यं ॥ अस्मिन्नर्थे स्मृतिवचनानि ॥ द्विजानामौर्ध्वदेहिके त्वसगोत्राधिकारीकर्तृगतो विशेषः ॥ गर्भाधानादिसंस्कारक्रिया गुरुणा स्ववेदविहिता कार्या इति वचनात् ॥ गुरुलक्षणमाह याज्ञवल्क्यः—

स गुरुर्यः क्रियां कृत्वा वेदमस्मै प्रयच्छति ।
उपनीय ददेद्वेद आचार्यः स उदाहृतः ॥

योऽसौ गर्भाधानाद्या उपनयनपर्यंताः क्रिया यथाविधिं कृत्वा वेदमस्मै प्रयच्छति स गुरुः ॥ अत्र गर्भाधानादिकर्तृत्वं पितुरेव घटते ॥ अत एव मुख्यो गुरुः पिता ॥ उपनयनपूर्वकवेदाध्यापक आचार्यः ॥ वेदैकदेशाध्यापकः उपाध्याय इति ॥ [४५९] अथ द्विजत्वे हेतुरुच्यते ॥

मातुर्यदग्रे जायन्ते द्वितीयं मौञ्जिबन्धनात् ।
ब्राह्मणः क्षत्रियो वैश्यस्तस्मादेते द्विजाः स्मृताः ॥

मातुः सकाशात्प्रथमं जन्म मौञ्जिबन्धनात् द्वितीयं जन्मेति ॥ चण्डुनिबन्धात्—

यच्छाखीयैस्तु संस्कारैर्ब्राह्मणः संस्कृतो भवेत् ।

तच्छाखाध्ययनं कुर्यात् शाखाभङ्गोऽन्यथा भवेत् ॥

तत्र दोषः-यः स्वशाखां परित्यज्य पारक्यामधिगच्छति।

स शूद्रवद्वहिः कार्यो हव्यकव्येषु वर्जित इति ॥

मिताक्षरायां तु-

ब्रह्मक्षत्रियविट्शूद्रा वर्णास्त्वाद्यास्त्रयो द्विजाः।

निषेकाद्याः श्मशानान्तास्तेषां वै मंत्रतः क्रियाः।

निषेको गर्भाधानं निषेक आद्यो यासां ताः ॥ श्मशानं तत्सबन्धि और्ध्वदैहिकं कर्म सपिंडनपर्यन्तं तत् अन्तो यासां ताः ॥ क्रियाः मंत्रतइति मंत्रैर्भवन्ति गृह्योक्तैस्त्रयाणां वर्णानां न शूद्रस्य ॥ अत्र निषेकाद्याः श्मशानान्ता इत्याद्यन्त शब्दवचनेनैकवाक्योपादानेनैकवेदविधानाः नभिन्नवेदमंत्रैर्विधीयन्ते ॥ वै निश्चये ॥ ५०० ननु फलस्य नाम्नश्चैकरूपत्वात्सर्वशाखास्वेकं कर्म इति विचारात् यया कया चिच्छाखया संस्कारक्रियाः कार्या इति केचन आहुः॥ तदुत्तरं ॥ तथा सति सर्वाणि संस्कारादीनि कर्माण्यनवस्थानि स्युः ॥ तस्मादुदितहोमानुदितहोमपक्षये।रिवोपक्रान्तपक्षेण निषेकाद्याः श्मशानसपिंडकार्यान्ता एकवेदविधाः कार्या अधिकारिभिरिति॥ अन्यथा दोषदर्शनात् स्त्रीविषये चात्र विशदं वचनं दृश्यते ॥

यद्वेदेन विवाहाग्नौ संस्कृता वनिता भवेत्।

तद्वेदसंस्कृता कार्या सपिंडान्ताधिकारिभिः ॥

सपिंडीकरणपर्यन्ता तद्वेदेन संस्क्रियते इति ॥ स्त्रीणां तु विवाहात्प्राक् जातकर्मादिक्रियास्तूष्णीं विनैव मंत्रैः कार्याः विवाहः पुनः समंत्रकः ॥ तदुक्तं-

तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समंत्रकः ।

उपनयनस्थानीयो विवाहः स्त्रीणां ॥

वैवाहिको विधिः स्त्रीणामौपनायनिकः स्मृतः ।

अत ऊर्ध्वं गर्भाधानादिक्रिया मंत्रैरिति ॥ [५०१] ऋतुकाले गर्भाधानं ॥ तृतीये मासि गर्भचलनात्पुरा वा पुंसवनं ॥ षष्ठे अष्टमे वा सीमन्तोन्नयनमिति ॥ याज्ञवल्क्यः ॥ चतुर्थे मासि गर्भरक्षणं सप्तमे मासि सीमन्तोन्नयनमिति ॥ शाङ्खायनः ॥ एते क्षेत्रसंस्कारकर्मत्वात् सकृत्कार्या न प्रतिगर्भं ॥ यथा देवलः—सकृच्च संस्कृता नारी सर्वगर्भेषु संस्कृतेति ।

गर्भकोशादागते कुमारे जातकर्मनामकर्मादि कुमारस्येति॥

तत्र—ऊनो वाप्यधिको वापि यःस्वशाखोत्थितो विधिः ।

तेन सन्तनुयाद्यज्ञं न कुर्यात्पारशाखिकमिति ॥

स्वशाखोक्तं यज्ञं यजनलक्षणं कर्म कुर्यात् ॥ आशौचमाद्यश्राद्धं वा अनाहिताग्नेर्मरणादिनादारभ्य कुर्यात् ॥ आहिताग्नेर्दहनदिनादारभ्य कुर्यात् ॥ आहिताग्नेर्दहनदिनादारभ्य कुर्यात् ॥

यदाहशङ्खः—मरणादेव कर्तव्यं संयोगो यस्य नाग्निभिः ।

दाहादूर्ध्वं तु कर्तव्यं यस्य वैतानिको विधिः ॥

मिताक्षरायां ॥ आशौचमाहिताग्नेरुपरमे संस्कारदिवसप्रभृति कर्तव्यं ॥ अनाहिताग्नेस्तु मरणदिवसप्रभृति सञ्चयनं तूभयोरपि संस्कारदिवसप्रभृति ॥ [५०२] यथाह अङ्गिराः—

अनग्निमत उत्क्रान्तेः साग्नेः संस्कारकर्मणः ।

शुद्धिः सञ्चयनं दाहान्मृताहस्तु यथातिथि ॥ इति ॥

साग्निराहिताग्निरिति चोक्तं स्मृत्यर्थसारे ॥ अनाहिताग्नेर्मरणाहात् प्रेतकार्यं मृताहश्राद्धं च ॥ तथा हि कालादर्शे॥ साग्नेर्दाहादिरिष्टाकटकृतिरिति रहस्यप्रमाणादेवेति ॥ चण्डुनिबन्धे ॥ एकाग्नियुक्तानामपि उत्क्रान्तिदिवस एवानग्नेरिव कर्तव्यानीत्युक्तं ॥ चण्डुस्मृतौ—

मृताहनि तु कर्तव्यमग्निहीनस्तु योद्विजः ।
संस्कारादेव विज्ञेयस्तस्य वैतानिको विधिः ॥

मासिके विशेषः—त्रिपक्षात्पूर्वतः साग्नेर्भवेत्संस्कारवासरे ।
ऊर्ध्वं मृतदिनेऽनग्नेः सर्वाण्येव मृताहतः ॥

मृताहत इति मृताहे ॥ सप्तम्यर्थे तसिल् ॥ साग्नेराहिताग्नेस्त्रिपक्षात्पूर्वतः पूर्वत्र काले कर्तव्यं ॥ मासिकं द्वितीयमासिकं संस्कारवासरे दाहवासरे भवेत् ॥ इतराणि मृतदिने भवेयुः ॥ अनग्नेरनाहिताग्नेः सर्वाण्येव मृतदिने भवेयुरिति कालादर्शे व्याख्यातं ॥ [५०३] जातूकर्ण्येनाप्युक्तं ॥

ऊर्ध्वं त्रिपक्षाद्यच्छ्राद्धं मृताहन्येव तद्भवेत् ।
अधस्तु कारयेद्दाहादाहिताग्नेर्द्विजन्मन इति ॥

एवं स्मृत्यर्थसारेऽपि ॥ आहिताग्नेः प्रेतकार्यं मृताहश्राद्धंदहनादिकार्यं त्रिपक्षान्तः ॥ तस्मादूर्ध्वं श्राद्धं मृताह एवेति॥ तथा—आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसन्धत्ते सधर्मं वेद नेतरः ॥ इति मनुः ॥

तथा वृद्धयाज्ञवल्क्यः—

आहिताग्निर्यथान्यायं दग्धव्यस्त्रिभिरग्निभिः ।
अनाहिताग्निरेकेन लौकिकेनापरो जनः ॥

अपरो जनः निरग्निः अग्निहीन इति ॥ क आहिताग्निः कोऽनाहिताग्निरिति तत्र मार्कण्डेयः—

आहिताग्निर्द्विजो यस्य विद्यतेऽग्निचतुष्टयम् ।
सोपवासश्चतुर्थ्यां तु शुक्लपक्षस्य फाल्गुने ॥

इत्याद्याहिताग्नेर्व्रतमुक्तं व्रतखण्डे ॥ [५०४] विष्णुधर्मोत्तरे तु—

चत्वार एतेऽग्नय आहिताग्नेः स वासुदेवः कथितश्चतुर्धा ।
यः पूजयेद्ब्राह्मणमाहिताग्निं देवः स तेनाप्यथ पूजितः स्यात् ॥

आहिताग्निः अग्निहोत्री वैतानिक इति ॥ तदग्निचतुष्टयरहितः अनाहिताग्निः आवसथिकः एकाग्निरिति ॥ एतेनैव धर्मेण अनाहिताग्नेः पिण्डपितृयज्ञः ॥ अनाहिताग्निः प्रवत्स्यन्नित्यादि श्रुतिस्मृतिभिरेकाग्निरनाहिताग्निरित्युक्तं ॥ वितानोऽग्नीनां विस्तारः तत्र भवो वैतानिकः निरग्नेः सूतकं मरणाहादिति निर्विवादं ॥ तत्र वचनानि सन्ति बहूनि ॥ इदानीमाहिताग्न्यनाहिताग्निविषयो निर्णीयते ॥

तावदङ्गिरा आह—अनग्निमत उत्क्रान्तेः साग्नेः संस्कारकर्मणः ।
शुद्धिः सञ्चयनं दाहान्मृताहस्तु यथातिथि ॥

[५०५] पैठीनसिरपि—

अनग्निमत उत्क्रान्तेराशौचं हि द्विजातिषु ।
दाहादग्निमतो विद्याद्विदेशस्थे मृते सति ॥ इति ॥

अत्र साग्निरग्निमान् शब्दश्च उभयवाचको मुख्य गौण्या वृत्त्या ॥ गौणमुख्ययोर्मुख्ये कार्यप्रत्यय इति ॥ बह्वग्निमदग्निहोत्र्यपेक्षया एकाग्निमानावसथिको गौणः ॥ तथा सति यत्र विरोधवचनं नास्ति तत्रास्तूभयवाचकः ॥

श्राद्धात्प्रागेव कुर्वीत वैश्वदेवं तु साग्निक इत्यादौ यत्र विरोधवचनसद्भावः मरणात्सूतकं दाहादूर्ध्वमित्यादिकस्तत्र विरुद्धानि कार्याणि न कल्प्यन्ते इति निर्णयानिश्चयानवगतौ साग्नेर्मुख्यार्थावबोधार्थमनग्निमच्छब्दः प्रयुक्तः [५०६] आङ्गिरसा ॥ अत्राल्पार्थेनञ् ॥ अनुदरी कन्येतिवत् ॥ अनग्निमतोऽल्पाग्निमतोऽनाहिताग्नेरुत्क्रान्तेः शुद्धिः ॥ साग्नेर्बह्वग्निमत आहिताग्नेः संस्कारकर्मणः दाहात् शुद्धिः ॥ इतरथा साग्निशब्दस्य द्वयोः प्रवर्तकत्वे निर्णयानिश्चयो न भवेदित्यङ्गिरसोऽभिप्रायं बुध्वा विज्ञानेश्वरेण स्वग्रन्थे मिताक्षरादौ एतद्वचनाभिधानात् ॥ पूर्वं आहिताग्नेः संस्कारदिवस प्रभृति । सूतकं अनाहिताग्नेर्मरणात्सूतकमित्युपक्रान्तं । सञ्चयनं तु उभयोर्दाहात् ॥ स्मृत्यर्थसारविश्वादर्शाशौचदशककालादर्शचण्डुनिबन्धपारिजातनिर्णयामृतादिनिबन्धकर्तृभिरिदमेव निर्णीतं । यथा विज्ञानेश्वरेण ॥ [५०७] स्मृत्यर्थसारे ॥ आहिताग्नेः प्रेतकार्यं मृताहश्राद्धं च दहनादि कार्यं त्रिपक्षान्तः ॥ अनाहिताग्नेर्मरणाद्दादि प्रेतकार्यं मृताहश्राद्धं च ॥ यच्च गृह्य स्मृतिवचनं ॥ य एवाहिताग्नेर्धर्मः स एवौपासनिकस्येति ॥ एव शब्दः प्रकार सूचनार्थः ॥ येन प्रकारेणाहिताग्नेर्दर्शपूर्णमासव्रतपितृयज्ञादेर्धर्मः तेनैवौपासनिकस्येति ॥ अत्र धर्मग्रहणाज्जीवदवस्था सूचिता ॥

यतः—धर्मा धर्मौ प्रकुरुते यावज्जीवति मानवः ।
परलोकगतो जन्तुर्भुङ्क्ते सुकृतदुष्कृते इति ॥

किंच ॥ तत्रापि वैश्वानर्यादौ यत्राहिताग्नेः पुरोडाशस्त-

त्रानाहिताग्नेश्चरव इति तयोर्भिन्नधर्मः। तर्हि मृते किमु वक्त-व्यमित्यलं ॥ दशके तु आहिताग्नेः पुनः संस्कारे दशाहं अ-नाहिताग्नेस्त्रिरात्रमिति वसिष्ठः ॥ इति साग्निकानग्निका-शौचश्राद्धनिर्णयः ॥

५०८ अथ द्वादशाहादौ सपिंडीकरणे सति षोडशश्रा-द्धानां विधानं प्रदर्श्यते ॥

श्राध्धानि षोडशादत्वा नैव कुर्यात्सपिंडताम् इति ॥ गोभिलः ॥ सपिंडनं द्वादशाहे कार्यं ॥ तदाह व्याघ्रः—

आनन्त्यात्कुलधर्माणां पुंसां चैवायुषः क्षयात् ।
आस्थितेश्च शरीरस्य द्वादशाहे प्रशस्यते ॥ इति पैठीनसिः ॥

सपिंडीकरणादर्वाक् कुर्याच्छ्राद्धानि षोडश ।
एकोद्दिष्टविधानेन कुर्यात्सर्वाणि तानि तु ॥

गालवः—अर्वाक् संवत्सराद्यस्य सपिंडीकरणं कृतम् ।
षोडशानां द्विरावृत्तिं कुर्यादित्याह गौतम : ॥

पुनः स्वे स्वे काले कुर्यादेवं द्विरावृत्तिः ॥

तदाह हारीतः—प्रेतसंस्कारकार्याणि यानि श्राद्धानि षोडश ।
यथा काले तु कार्याणि नान्यथा मुच्यते ततः ॥

प्रकृष्टेन इतः प्रेतः मृतः तत्संस्कारकार्याणि अङ्गिर साप्युक्तं ॥

यस्य संवत्सरादर्वाक् सपिंडीकरणं कृतम् ।
मासिकं चोदकुंभं च देयं तस्यापि वत्सरम् ॥

५०९ अत्रविशेषः ॥ अमावास्यादितिथिविशेषे मृतयोः पित्रोः सांवत्सरिकं श्राद्धं पार्वणेन भवेत् केषांचित्कुलक्रमा-

गतं चेति ॥ तेषां पित्रोरनुमासिकश्राद्धे पार्वणविधिशङ्कापरं वचनं मिताक्षरोक्तं ॥

सपिंडीकरणादूर्ध्वं यदा कुर्यात्तदा पुनः ।
प्रत्यब्दं यो यथा कुर्यात्तथा कुर्यात्स तान्यपि ॥

अत्रासपिंडीकरणादूर्ध्वं क्रियमाणान्यनुमासिकानि यदा तदेति काले दा ॥ कृतस्य करणं पुनःकरणं । यथाशब्दवाच्यार्थेष्वत्र योग्यतावाची यथाशब्दः ॥ तथा प्रकारवचने थाल् ॥ पुनः शब्दस्य तथा शब्देन संबन्धः ॥ अपि शब्दः प्रथमान्तेन तच्छब्देन संबध्यते ॥ अस्यार्थः ॥ यः प्रत्यब्दश्राद्धं पार्वणमेकोद्दिष्टं वा योग्यतया कुर्यात् सोऽपि पुनः तान्यनुमासिकानि तथा पूर्वानुष्ठानप्रकारेण कुर्यात् एकोद्दिष्टविधिनेति ॥ अत्र यथा तथा शब्दयोः परस्परं न संबन्धः भिन्नार्थत्वात् अन्यत्सुगमं ॥ ५१० किंच उत्तरपदार्थगतस्तच्छब्दो यच्छब्दं नापेक्षते ॥ यथा—

कातर्यं केवला नीतिः शौर्यं श्वापदचेष्टितम् ।
अतः सिद्धिसमेताभ्यामुभाभ्यामन्वियेष सः ॥

इति शिष्टप्रयोगात् ॥ तथा ॥ कुत्रचिद्यच्छब्दोऽपि तच्छब्दं नापेक्षत इति ॥

साधु चन्द्रमसि पुष्करैः कृतं मीलितं यदभिरास तारके ।

अतः यत्तदोर्न सर्वत्र संबन्ध इति ॥ अपि च विकल्पविप्रतिषेधे भूयसां साधर्म्यमिति श्रुतिः ॥ अनुमासिकश्राद्धे भूयांसि वचनान्येकोद्दिष्टश्राद्धविधिपराणि सन्ति ॥ सापिंडनात्पूर्वं कृतानामपि पुनः स्वकाले करणाभावे प्रेतत्वान्न मुच्यत

इत्युक्तं प्राक् ॥ ५११ मिताक्षरायां—

सपिंडीकरणादूर्ध्वं यदा कुर्यात्तदा पुनः ।
प्रत्यब्दं यो यथा कुर्यात्तथा कुर्यात्स तान्यपि ॥

कात्यायनः—सपिंडीकरणादूर्ध्वं न दद्यात्प्रतिमासिकम् ।
एकोद्दिष्टविधानेन दद्यादित्याह शौनकः ॥

निषेधः पार्वणविधिविषयः ॥ इत्यादिभिर्वचनैः सपिंडी-करणादूर्ध्वमनुमासिकानां कर्तव्यता प्रतिपादिता ॥ एतानि मासिकानी सपिंडीकरणात्पूर्वं अपकृत्य कृतान्यपि वृद्धिश्राद्धे उपस्थिते पुनरप्यपकृष्य क्रियन्त इत्युक्तं ॥ तत्प्रदर्श्य समाधीयते ॥ शाट्यायनः—

सपिंडीकरणादर्वागपकृष्य कृतान्यपि ।
पुनरप्यपकृष्यन्ते वृध्युत्तरनिषेधनादिति ॥

निषेधः कात्यायनेनोक्तः—

निर्वृत्ते वृद्धितंत्रे तु मासिकानि न संत्रयेत् ।
अयातयाममरणं न भवेत्पुनरस्य तु ॥

अयातयामंनवं ॥ शाट्यायनः—

प्रेतश्राद्धानि शिष्टानि सपिंडीकरणं तथा ।
अपकृष्यापि कुर्वीत कर्ता नान्दीमुखं द्विजः ॥

ननु—अन्तरेणैव यो वृद्धिं प्रेतश्राद्धानि कर्षति ।
स श्राध्धी नरके घोरे पितृभिः सह मज्जतीति ॥

अतः सपिंडीकरणोर्ध्वं मासिकानामपकर्षइति न। शृणु ॥ तदाह शाट्यायनः॥ सपिंडीकरणादर्वाक् तथा निवृत्ते वृध्धितंत्रे तथा प्रेतश्राध्धानि शिष्टानि तत्र कात्यायनीये निषेधवचने

मासिकानीत्युक्तं ॥ नानु मासिकानीति सपिंडीकरणात्पश्चा-
दनुष्ठेयान्यनुमासिकानि ततस्तेन नानुमासिकानां निषेधः ॥
[५१२] उत्तरवचनमपि प्रेतश्राद्धानामपकर्षमाह ॥ तस्माच्छाट्या-
यनवचनं यथाकालकरणासंभवे पुनरपकर्षविधायकं करणसं-
भवे तु नापकर्षः ॥ अत एव गरुडपुराणं—

अर्वाक् च वृद्धेः करणस्य तार्क्ष्य सपिंडतां यः प्रकरोति पुत्र ।
तथापि मासं प्रति पिंडमेकमन्नं च कुंभं सलिलं च दद्यादिति॥

वृद्ध्युत्तरमप्यनुमासिकान्याह॥ तस्मान्नापकर्ष इति सि-
द्धं ॥ अथ ऊनमासिकेषु विशेषः ॥ तानि चत्वारि । ऊनमा-
सिकं त्रैपक्षिकं ऊनषण्मासिकं ऊनाब्दिकं चेति ॥

मरणाद्द्वादशाहे स्यान्मास्यूने तूनमासिकम् । इति ॥
त्रैपक्षिकं भवेद्वृत्ते त्रिपक्षे तदनन्तरमिति ॥

भविष्यत्पुराणाद्वृत्ते प्रवृत्ते गरुडपुराणे—

न्यूनषण्मासिकं कार्यं पञ्चभिः सार्धमासिकैः

इति ऊनाब्दं द्वादशे तथेति गालवः॥ उक्तोऽयं पक्षः सर्वसंमतः।
[५१३] अथवा ऊनशब्दश्रवणात् कियता ऊनेनेत्याह गोभिलः—

त्रिभिर्वा दिवसैरूनमेकेन द्वितयेन वा ॥

पक्षान्तरमाह गौतमः—

आद्यादिषु च मासेषु कुर्यादूनाब्दिकं द्विज ॥
एकद्वित्रिदिनैरूने त्रिभागे तून एव वा ।
श्राद्धान्युनाब्दिकादीनि कुर्यादित्याह गौतमः ॥

तृतीयो भागस्त्रिभागः तेन ऊने विंशतिदिनेषु गते-
षु कुर्यादित्यर्थः ॥

अथवा–मासिकान्यपि चान्यानि अष्टाविंशतिमे दिने ॥
अन्यानि ऊनमासिकानि ॥ तदाह कार्ष्णाजिनिः–

न्यूनान्यूनेषु मासेषु विषमाहेषु तानि वै ।
त्रैपाक्षिकं त्रिपक्षे स्यान्मृताहेष्वितराणि तु ॥

तथा मासिकानि आशौचाद्यन्तरितानि उत्तरे मासि कुर्यात्
तदाह ऋष्यशृङ्गः–एकोद्दिष्टे तु संप्राप्ते यदि विघ्नः प्रजायते ।

मासेऽन्यस्मिंस्तिथौ तस्यां कुर्यादन्तरितं च यत् ॥

आशौचाद्यभावे वा कुर्यादिति ॥ अत्रैव विशेषमाह–

त्रिपुष्करे च नन्दासु दर्शे भार्गववासरे ।
चतुर्दश्यां न कुर्वीत ऊनानि त्रीणि वन्हिभे ॥

द्वितीयासप्तमीद्वादशीनां भद्रातिथीनां पुनर्वसूत्तराफाल्गुनीविशाखोत्तराषाढपूर्वभाद्रपदनक्षत्राणां भानुभौमशनैश्चरवासराणां च मेलने त्रिपुष्करमिति कालादर्शे ॥ शेषं सुगमं॥
गार्गिरपि–नन्दायां भार्गवदिने चतुर्दश्यां त्रिपुष्करे ।

न्यूनानि तु न कुर्वीत गृही पुत्रधनक्षयात् ॥ इति ॥

त्रिपुष्करशब्दो द्विपुष्करमपि लक्षयति ॥ द्वयोर्मेलने द्विपुष्करं॥
गुरुवारमेलनेऽपि त्रिपुष्करयोगः ॥
५१४ तदुक्तं रत्नमालायां–

विषमचरणं धिष्ण्यं भद्रातिथिर्यदि जायते ।
सुरगुरुरविक्ष्मापुत्राणां कथञ्चन वासरे ॥
मुनिभिरुदितः संयोगस्त्रिपुष्करसंज्ञकः ।
मृततिथावागतोऽयं योगो न दोषमावहति ॥

तत्र श्राद्धं कुर्यादिति मासिकनिर्णयः ॥ अथ संवत्सरम-

ध्यपतिते मलिम्लुचे एकं मासिकं कृत्वा द्वितीयमासिकं शुद्धे अन्यदधिकं कुर्यात् ॥ तदाह वसिष्ठः—

श्राद्धीयेऽहनि संप्राप्ते अधिमासो भवेद्यदि ।
श्राद्धद्वयं प्रकुर्वीत एवं कुर्वन्न मुह्यति ॥

श्राद्धद्वयमिति प्रेतश्राद्धद्वयं अधिमासोत्तरमासयोरिति वेदितव्यं ॥ विशेषो मलमासप्रकरणे वक्ष्यते ॥

कृतेऽचलद्विवेदेन ग्रन्थे निर्णयदीपके ।
उत्क्रान्तितः समारभ्य मासिकान्तो विनिर्णयः ।

अथ सहगमनप्रसंसावाक्यदर्शनपूर्वकं तदौर्ध्वदैहिकाविषयो निर्णयः प्रस्तूयते ॥

तत्र मनुः—आर्तार्ते मुदिते हृष्टा प्रोषिते मलिना कृशा ।
मृते म्रियेत या नारी सा स्त्री ज्ञेया पतिव्रता ॥

तथा हारीतः—मृते भर्तरि या नारी समारोहेद्धुताशनम् ।
सारुन्धतिसमा ज्ञेया स्वर्गलोके महीयते ॥
ब्रह्मघ्नो वा कृतघ्नो वा मित्रघ्नो वा भवेत्पतिः ।
पुनात्यविधवा नारी तमादाय मृता तु या ॥

आङ्गिराः व्यालग्राही यथा व्यालं बिलादुद्धरते बिलात् ।
तद्वदुध्धृत्य सा नारी तेनैव सह मोदते ॥

प्रेतकल्पे—अग्निर्दहति गात्राणि आत्मानं नैव पीडयेत् ।
दह्यते धम्यमानानां धातूनां च यथामलः ॥
तथा नारी देहदेहं हुताशे ह्यमृतोपमे ।
दिवादौ दिव्यदेहस्तु शुद्धो भवति यः पुमान् ॥
तथा सा पतिसंयुक्ता दह्यते न कदाचनेति ।

[५१५] शङ्खः–दिव्यवर्षप्रमाणेन तिस्रः कोट्योऽर्धकोटयः ।
तावत्कालं वसेत्स्वर्गे भर्तारं यानुगच्छति ॥
तथा–लक्ष्मीं सुतान् परित्यज्य मातापितॄंस्तथैव च ।
मृतं पतिमनुव्रज्य साचिरं सुखमाप्नुयात् ॥
इत्यादि पुराणप्रशंसा श्रूयते ॥ तदकरणे प्रत्यवायवाक्यमपि ॥
एवं न कुरुते नारी धर्मोढा पतिसङ्गमम् ।
प्रतिजन्मनि दुखार्त्ता दुःशीलाप्रियवादिनी ॥
वल्गुली गृहगोधा च गोधा वा द्विमुखी भवेत् ।इति ॥
अत इदं सहगमनं मृते भर्तरि ब्रह्मचर्यं तथा अन्वारोहणं चेति विकल्पितमपि सर्वजातिस्त्रीणां पतिव्रतानां प्रशस्तात्मनो भर्तुश्च सर्वपापक्षयदं मोक्षदं चेति ॥ स्मृत्यर्थसारे तु विशेषः ॥ प्रशस्तत्वादनुष्टेयमेव ॥ सर्वसाधारणोयं धर्म आचाण्डालं यावत् ॥ [५१६] स्मृत्यर्थसारे तु विशेषः ॥ तथान्वारोहणं गर्भिण्या निषिद्धं ॥ ब्राह्मण्या गर्भिण्या ब्रह्महत्यासमं क्षत्रियादिजातिगर्भिण्याः क्षत्रियादिजातिवध एवेत्युक्तं ॥ विष्णुनाप्यन्वारोहणं प्रशस्तं॥
पुत्रपौत्रादिकं त्यक्त्वा स्वपतिं याधिगच्छति ।
स्वर्गं लभेतां तौ चोभौ कुलैस्त्रिभिरलङ्कृतौ ॥
कृत्वा पापान्यनेकानि भर्तृद्रोहमतिः सदा ।
प्रक्षालयति सर्वाणि या स्वं पतिमनुव्रजेत् ॥
अस्यान्वारोहणस्य सर्वस्त्रीसाधारण्येऽपि यद्ब्राह्मण्याः निषेध वचनं ॥
मृतानुगमनं नास्ति ब्राह्मण्या ब्रह्मशासनात् ।

या स्त्री ब्राह्मणजातीया मृतं पतिमनुव्रजेत् ॥
सा स्वर्गमात्मघातेन नात्मानं न पतिं नयेत् ।

इति तदिदं पृथक्चित्यारोहणनिषेधपरं ॥ [५१७] यदाह उशनाः—पृथक्चितिं समारुह्य न विप्रा गन्तुमर्हति ।

अन्यासां चैव नारीणां स्त्रीधर्मोऽयं परः स्मृतः ॥

एतदेवोक्तं स्मृत्यर्थसारे ॥ सवर्णायाः पत्या सह एकचित्यारोहणं कार्यं ब्राह्मण्या एकचित्यारोहणमेव न पृथक्चित्यारोहणं कार्यं ॥ परिजाते तु ॥ ब्राह्मण्या अपि पृथक्चित्यारोहणमुक्तं ॥

तथा—देशान्तरमृते पत्यौ ब्राह्मण्यास्तु तदस्थिभिः ।
भवेत्सहानुगमनमन्यासां पादुकादिभिः ॥ इति ॥

पादुकावस्त्रादीनां अशरीराङ्गत्वेऽपि तद्धृतत्वेन तत्तुल्यत्वात् ॥ तथा स्मृत्यर्थसारे क्षत्रियादिस्त्रिया भर्तरि देशान्तरे मृते पृथक्चित्यारोहणं कार्यं ॥ असवर्णायाः पृथक्चित्यारोहणमेव गरुडपुराणात्—

दूरस्थापि च या नारी मृतं श्रुत्वा तथा पतिम् ।
शनैः स्वभवनं गत्वा प्रतीच्छेच्चादिश्राद्धकम् ॥
ततस्तं पिंडमादाय प्रविशेच्च हुताशनम् ।
तस्याश्च तत्क्षणात्कार्या वृषोत्सर्गादिकाः क्रियाः ॥ इति ॥
अन्तरात्मा मृते तस्मिन्मृतोऽप्येकत्वमागत ॥ इति ॥

तत्रैवोक्तत्वात् ॥

[५१८] तथा—या स्त्री सवर्णा संशुद्धा मृतं पतिमनुव्रजेत् ।
सा मृता स्वर्गमाप्नोति वर्षाणां पूर्वसंख्यया ॥

तिस्रः कोट्य इत्युक्तं प्राक् संशुद्धेति वचनात् रजोदोषदुष्टा चतुर्थे ऽन्हि कुर्यात् ॥

तदुक्तं प्रेतकल्पे—हुताशं या समारूढा चतुर्थेन्हि पतिव्रता ।
तस्या भर्तुर्दिनात्कार्यं वृषोत्सर्गादि सूतकम् ॥ इति ॥

भर्तुः प्राधान्यात् तदर्धशरीरभूतायाः पत्न्या अपि तदैव मरणसंकल्पेन मृतप्रायत्वात् ॥ भर्तृमरणदिनप्रभृत्येव दिनपरिगणनां कुर्यात्पिंडदानादिकर्मणि ॥ तस्मिन्वाक्येद्दूरस्थापि च या नारीत्यत्रापि च द्वादशाहातिक्रमान्वारोहणे विशेषं वक्ष्याम इति ॥ अथ निर्णयः ॥

मृते भर्तरि या नारी प्राणांश्चैव परित्यजेत् ।
भर्त्रैव हि समं तस्या अग्निं कुर्यात्सपिंडनम् ॥

अग्निं चिताग्निं अनेन प्रेतकल्पोक्तेन वचनेनाग्निसपिंडनयोभर्त्रासहैक्याभिधानात् सपिंडनात्पूर्वं विहितानां दशाहपिंडादिश्राद्धानामप्यैक्यकङ्क्षायां अन्वारोहणेन स्त्रियामरणे सति तानि पृथगिति ॥ तत्रैवोक्तं—

पतिपत्न्योः सदैकत्वं हुताशं याधिरोहति ।
पुत्रेणैव पृथक्श्राद्धं सपिंडं पतिना सहेति ॥

एकत्वं तु सपिंडनादुत्तरत्र वेदितव्यं ॥ ततः सपिंडनात्पूर्वं विहितस्यौर्ध्वदैहिकस्य पृथगभिधानात् पृथक्श्राद्धमित्येकवचनमविवक्षितं ॥ गृहं समार्ष्णीतिवत् दशैतानध्वर्युः प्रातःसवने ग्रहान् गृण्हातीति दर्शनात् ॥ तद्वदत्रापीति ॥ ५।१९

एतदुपक्रम्य प्रेतकल्पे—

एकं पाकं प्रकुर्वीत पिंडान्दद्यात् पृथक्पृथक् ।

[margin:] हे- ता- तु

एकादशं वृषोत्सर्गं पृथक्श्राद्धानि षोडश ॥
घटादिपददानानि महादानानि यानि च ।
वर्षं यावत्पृथक्कुर्यात्तृप्तिरेवं तयोरिति ॥

अत एव स्मृत्यर्थसारेऽपि ॥ अन्वारोहणं करिष्यामीति संकल्प्य पतिं नमस्कृत्य चितामारुह्य सर्वप्रयोगं कारयेत् ॥ यद्वा सर्वप्रयोगे कृते दह्यमाने भर्तरि तं नत्वाग्निं प्रविशेत् ॥ इत्युपक्रम्य दाहदिने तु पिंडश्राद्धादौ पाकैक्ये कर्त्रैक्यं चोक्तं॥ पिंडैक्यमिति नोक्तं ॥ सर्वत्र पिंडादिदाने योग्यः पुत्रो दद्यात्॥ तथा ॥ चिताभ्रष्टा नारी मोहाद्वा विप्रचलिता प्राजापत्यं चरेत् ॥ इति चोक्तं ॥ एवमन्वारोहणे सपिंडीकरणपर्यन्तं सर्वं पृथगेवेति सिद्धं ॥ सपिंडनमपि पत्युः सपिंडनं कृत्वा तेन सह सपिंडनं कुर्यात् ॥

मृतं या तु मृता नाथं सा तेन सह पिंडताम् ॥
अर्हति स्वर्गवासं च यावदाभूतसंप्लवमिति ।
पत्या चैक्येन कर्तव्यं सपिंडीकरणं स्त्रियाः ॥

इत्यस्मिन्विषये प्रेतकल्पोक्तत्वात् ॥ ५२० अथान्वारोहणविषये प्रत्याब्दादौ श्राद्धे द्वावपि समस्यैकोदेयः पिंड इति लौगाक्षिणोक्तं ॥

मृतेऽहनि समासेन पिंडनिर्वपणं पृथक् ।
नवश्राद्धं च दम्पत्योरन्वारोहण एव तत् ॥

मृतेऽहनि दम्पत्योरुद्देशेन समासत एक एव पिंडो दीयते ॥ समासेन द्वावपि समस्यैकःपिंडः॥ सकलमपि श्राद्धमिति चन्द्रिका ॥ यथा ॥ अमुकसगोत्रौ अमुकदेविदासुकश-

र्माणावववनेनिज्ञाथाम्॥ ये च युवामत्रानु ॥ एतद्वां पिंडः इति एवमूहनीयं ॥ नवश्राद्धं पृथगित्यन्वयः ॥ एतदन्वारोहण एव भवति ॥ अत्र मृताहग्रहणं सपिंडीकरणोत्तरोपलक्षणं नवश्राद्धग्रहणं सपिंडीकरणान्तोपलक्षणं ॥ अन्यथा मृतेऽहनीति परिसंख्यायां सर्वत्र पृथक्त्वापत्तिरित्यव्यवस्था स्यात् ॥ यथा द्वयोः समासेन पिंडनिर्वपणं तथा बह्वीनामप्येकचित्यारूढानां सवर्णानां द्वित्र्याद्युद्देशेन द्विपितृकश्राद्धवदेक एव पिंडो देयः ॥ सपिंडीकरणोत्तरमिति पूर्ववत् ॥ [५२१] यथा गोत्राः अमुकदेविद्याः अमुकशर्माणः अवनेनिध्वं ये युष्मानत्रानु वः पिंडः ॥ एवं योजनीयं ॥ यत्तु कैश्चिन्मृतेऽहनि समासेन पिंडनिर्वपणं पृथक् ॥

नवश्राद्धं तु दम्पत्योरन्वारोहण एव तु ॥

इति लौगाक्षिवचनमन्वारोहणेन स्त्रिया मरणे सति नवश्राद्धं पृथक् तद्व्यतिरिक्तदशाहादीनां मृताहवत्समासेन पिंडनिर्वपणमित्यभिप्रायेण व्याख्यातं ॥ तथा तत्र लिखितं ॥ अत्र मृतेऽहनीति विशेषोपादानात् तिथिभेदे तु पृथगेवश्राद्धं कुर्यात् न समासेनेति गम्यते ॥ किं च ॥ मृतेऽहनि समासेन कुर्यादिति विशेषाभिधानादेव सांवत्सरिकव्यतिरिक्तनवश्राद्धषोडशश्राद्धसपिंडीकरणगयास्वष्टकादिश्राद्धेषु वचनान्तरैश्च पृथग्विहितेषु पृथक्कर्त्तव्यतायां प्राप्तायां नवश्राध्धं पृथगिति परिसंख्यया नवश्राध्धस्यैव पृथग्विधानात् ॥ [५२२] नवश्राध्धव्यतिरिक्तेषु षोडशश्राध्धादिषु सांवत्सरिकवदेव समासेनैव विधानमिति निरूपितं एतदयुक्तं ॥ यद्यन्वारोहणेन मृतानां सर्वेषा-

मेकस्मिन्नहनि इति विवक्षितं तदा पत्युरन्वारोहणे मरणे न किंतु पूर्वं तन्न असङ्गतं स्यात् ॥ ततस्त्रीणामन्वारोहणे सति पूर्वं मृतस्य पत्युरहनि दंपत्योरित्येतद्युक्तं ॥ अन्वारोहणे सति मृतेऽहनि समासेन पिंडनिर्वपणमित्युक्तौ तिथिभेदेऽपि समासः सिध्यति ॥ वैपरीत्यं कुतः द्वयोर्दम्पत्योर्भेदात् श्राध्दद्वयं प्रसक्तं ॥ तत्र देवतात्वं समस्यते श्राध्दस्वरूपं च समस्यते ॥ अतोऽग्नीषोमीययोरिव सहोद्देशः ॥ सहप्रदानं च ॥ द्विपितृके तु पृथङ्निर्देशः ॥ सहप्रदानं च ॥ एवं देवताभेदे यथा समासस्तथा तिथिभेदेऽपि समासोऽस्मादेव वचनात् ॥ नवश्राध्दं तु प्रेतश्राध्दोपलक्षणं सपिंडनान्तं ॥

५२३ तदाह गरुडपुराणं—

एकपाकं प्रकुर्वीत पिंडान् दद्यात्पृथक्पृथक् ।
एकादशं वृषोत्सर्गं पृथक्श्राध्दानि षोडश ॥

इत्यादिना नवश्राध्दविषयिणी परिसंख्या बाधिता ॥ मृतेऽहनीति सपिंडीकरणोत्तरोपलक्षणं ॥ यतः ॥

पुत्रेणैव पृथक् श्राध्दं सपिंडं पतिना सहेति ।

सपिंडनोत्तरं ॥ पतिपत्न्योः सदैकत्वं त्रिषु स्थानेषु वै पृथक् ।

कन्यादाने तथा यज्ञे पिंडसंयोजने तथा ।

इति विष्णुवचनेन त्रिष्वेव पृथग्विधानादन्यत्र समासेन श्राध्दतर्पणादिकमिति सिध्दं ॥ तस्मात्सपिंडनात्पूर्वं सर्वं पृथगेवेति निर्णयः ॥ अथ भर्तृमरणानन्तरं चिरकालव्यवधानेऽपि अनुगमनेन मृताया अपि पत्न्या विशेषोऽभिधीयते । ब्रह्मपुराणात् ॥

देशान्तरमृते पत्यौ साध्वी तत्पादुकाद्वयम् ।
निधायोरसि संशुध्धा प्रविशेज्जातवेदसम् ।
ऋग्वेदवाक्यात्साध्वी स्त्री न भवेदात्मघातिनी ॥
त्र्यहाशौचे तु निर्वृत्ते श्राध्धं प्राप्नोति शास्त्रवत् ।

तस्यास्त्र्यहाशौचधर्मेण ऊर्ध्वदैहिकं कुर्यात् ॥ शास्त्रवदिति भर्तृसमकालमरणवदेवाब्दिकादीति ॥

[५२४] यत्तु भृगुवचनं—या समारोहणं कुर्याद्भर्तुश्चित्यां पतिव्रता ।
मृतेऽहनि तु संप्राप्ते पृथक् पिंडे नियोजयेत् ॥
प्रत्यब्दं च नवश्राध्धं युगपत्तु समाचरेत् । इति ॥

तदिदं मृतेऽहनि पृथक्पिंडश्राध्धाविधायकं विजातीयस्त्रीविषयं ॥ भर्तुश्चित्यां भर्तुर्मृतेऽहनि इत्यन्वयः ॥ विजातीयत्वेन एकचित्यारोहणानभिधानात् ॥ अथ रजस्वलाया रजोदोषयुक्ताया अपि सहगमनप्रकारः ॥

स्मृत्यन्तरात्—

यदास्त्रियामुदक्यायां पतिः प्राणान् परित्यजेत् ।
द्रोणमेकं तण्डुलानामवहन्याद्विशुध्धये ॥

द्रोणप्रमाणं तु—पलद्वयं तु प्रसृतं द्विगुणं कुडवं स्मृतम् ।
चतुर्भिः कुडवैः प्रस्थः प्रस्थाश्चत्वार आढकः ॥
चतुराढको भवेद्द्रोण एतद्द्रोणस्य लक्षणम् ।
[५२५] मुशलाभिघातैस्तदसृक्स्त्रवते योनिमण्डलात् ॥
विरजस्का मन्यमाना स्वे चित्ते तदसृक्क्षयम् ।
दृष्ट्वा शौचं प्रकुर्वीत पञ्चमृत्तिकया पृथक् ॥
त्रिंशद्विंशद्दश पञ्च गवां दत्वा त्वहः क्रमात् ।

विप्राणां वचनं लब्ध्वा समारोहेध्धुताशनम् ॥
नारीणां सरजस्कानामियं शुध्धिरुदाहृतेति ॥

सरजस्काप्येतदुक्तप्रायश्चित्ताचरणेन तदैव समारोहणं कुर्यात् ॥ अथवा चतुर्थेऽन्हि रजोनिवृत्तौ वा शिष्टाचाराविरुध्धमार्गेण कुर्यादिति ॥

तथा—हुताशं या समारूढा चतुर्थेऽन्हि पतिव्रता ।
तस्या भर्तुर्दिनात्कुर्याद्वृषोत्सर्गादि सूतकमिति ॥

तथा—अन्वष्टकासु यच्छ्राध्धं यच्छ्राध्धं वृध्दिहेतुकम् ।
पितुः पृथक्प्रदातव्यं स्त्रीषु पिंडसपिंडने ॥

इति गरुडपुराणात् ॥

---

## इति सहगमननिर्णयः ॥

५२६ अथ एकस्मिन्नहनि पितृपुत्रादीनां मरणे दहनादौ विशेषः स्मृत्यर्थसारात् ॥ पितापुत्रयोः सवर्णयोः समानधर्मयोः कपालाग्निनादाह्ययोः दाहः सहैव वा उदकादिकं पितृपूर्वं पृथगेव ॥ तथा भ्रातृणां सवर्णानां समानधर्माणां कपालाग्निना दाह्यानां सह वा दाहः उदकपिंडादिकं ज्येष्ठपूर्वं पृथगेव ॥ तथा सपत्नीनां सह दाहः उदकपिंडादि ज्येष्ठपूर्वं पृथगेव ॥ तथा पुंबालानां स्त्रीबालानां च दहने खनने चैवं ॥ तथा भिन्नजातीयानां भ्रातृणां पितापुत्राणां सपत्नीनां च दहनादि सर्वं पृथगेव ॥ तथा तत्रैव स्त्रीपुरुषमरणे एकस्मिन्नहनि दहनकाले प्राप्ते सवर्णानां समानधर्माणां पत्या सह दहनं कृत्वा पतिपिंडादिकं पतिपूर्वं पृथक्कार्यं ॥ सपिंडनं तु पत्युः

पूर्वं कृत्वा पत्या सह सपिंडनं कार्यं ॥ तथा–

एकचित्यां समारूढौ दम्पती निधनं गतौ ।

पृथक्श्राद्धं तयोः कुर्यादोदनं च पृथक्पृथक् ॥

[५२७]निधनं गतौ नान्वारोहणमार्गेण मृतावित्याशयः ॥ ओदनं च पृथगिति नवश्राध्धार्थमन्नमोदनं तत्पृथगिति कुत्र चिदुक्तं प्रेतकल्पे त्वस्योत्तरार्धं तु ॥

एकपाकंप्रकुर्वीत पिंडान्दद्यात्पृथक्पृथगिति ॥

तथा–पाकैकेन पतिस्त्रीणामन्येषां तु विगर्हितम् ।

इति तत्र एकपाकेन भिन्नपाकेन चेति शिष्टाचारः प्रमाणं यत्तु कुत्रचित् अस्मिन् सहदहनविषये अन्वारोहणसमानधर्मत्वं शङ्कितं तदयुक्तं ॥ मृतेऽहनि द्वयोर्दंपत्योः समासेन पिंडनिर्वपणमभिहितं ॥ लौगाक्षिवचनेन अन्वारोहणसमये तिथिभेदेऽपि भर्तुर्मृतेऽहन्येवाब्दिकमिति निरूपितं प्राक् ॥ अत्र न बुद्धिपूर्वकमन्वारोहणधर्मकं सहदहनं ॥ किंतु काकतालीयन्यायेन प्राप्तं ॥ [५२८]तस्मादत्र सह दहने मरणतिथिभेदेऽपि प्रत्याब्दिकं पृथक्पृथगिति अन्वारोहणसमानधर्मकमिति ॥

तथा–पत्या चैकेन कर्तव्यं सपिंडीकरणं स्त्रियाः ।

तथा–भर्त्रादिभिस्त्रिभिः कार्यं सपिंडीकरणं स्त्रियाः ॥

तथा–पितामह्या समं मातुः पितुः सह पितामहैः ।

सपिंडीकरणं कार्यमिति तार्क्ष्य मतं मम ॥

इत्यादिवाक्यैर्विकल्पेन पत्यासह सापिंड्येनापि मृतेऽहनि समासेन पिंडनिर्वपणमिति नाशङ्कनीयं ॥ सहगमनबुद्ध्याम-

रणाभावात् ॥ किंच ॥ मातुः पूर्वमरणे सति सहदहने तत्र किं कर्तव्यं अतोऽपि पृथक्पृथगाब्दिकमिति न पिंडादौ समासोऽर्हतीति ॥ इति संघातमरणे सति दहने निर्णयः ॥ अथ सूतिकाया रजस्वलाया वा मृतिर्भवति तदा शुद्धिं कृत्वा दाहादि संस्कारं कुर्यात् ॥ शुद्धिप्रकारश्चोक्तो मिताक्षरायां—

सूतिकायां मृतायां तु कथं कुर्वन्ति याज्ञिकाः ।
कुंभे सलिलमादाय पञ्चगव्यं ततः क्षिपेत् ।
पुण्यर्ग्भिरभिमंत्र्यापो वाचा शुद्धिं लभेत्ततः ॥
तेनैव स्नापयित्वा तु दाहं कुर्याद्यथाविधि । इति ॥

तथा—अब्लिङ्गापोमंत्रियाभिर्वामदेव्याभिरेव च ॥
अन्यैश्च वारुणैर्मंत्रैः संस्नाप्य विधिना दहेत् ॥

५२९इति स्मृत्यन्तरं ॥ वाचा ब्राह्मणवचनेन तस्य प्रायश्चित्तपूर्वकत्वात् ॥ प्रायश्चित्तं तु त्रिदिनादर्वाक् त्र्यब्दं ऊर्ध्वं तु षट्दिनादर्वाक् अब्दद्वयं । तदूर्ध्वमेकाब्दं ॥ तदुक्तं गोविन्दराजेन स्मृत्यन्तरे—सूतिकाले यदा साध्वी विस्नाता मरणं गता।

त्रिषट् नवदिनादर्वाक् त्रिद्व्येकाब्देन शुध्यति ॥

तत्र वचनानि—सूतिकाले यदा साध्वी विस्नाता मरणं गता ।
त्रिवर्षपरिपर्यन्तं शुध्येत्कृच्छ्रेण सर्वदा ॥

प्राजापत्यं ९० एतत्प्रथमत्र्यहविषयं ॥ तथा—

प्रसूतिका यदा नारी रजसा च परिप्लुता ।
म्रियते तु च नारी द्विवर्षं कृच्छ्रमाचरेत् ॥

प्राजापत्य ६० एतच्चपूर्वत्र्यहादूर्ध्वं षड्दिनविषयं ॥ तथा—

सूतिकाले यदा साध्वी अस्नाता मरणं गता ।

अब्दकृच्छ्रेण शुध्येत व्यासस्य वचनं यथा ॥
प्राजापत्य ३० एतत्षट्दिनोर्ध्वं दशाहपर्यन्तं ॥
तथा दशाहादूर्ध्वं तु—

प्रसूतिका यदा नारी प्राणांश्चैव परित्यजेत् ।
मासमेकावधिश्चैव त्रिभिः कृच्छ्रैर्विशुध्यतीति॥ प्राजापत्य ३.

इति सूतिकामरणेनिर्णयः ॥

---

[५३०] अथ रजस्वलायास्तु विशेषः ॥ पञ्चभिः कलशैः पृथक्पृथक्पञ्चगव्यं क्षिप्त्वा स्नापयेत् ॥ वस्त्रान्तरावृतां दहेत् ॥
तदुक्तं बृहद्यमेन—

पञ्चभिः स्नापयित्वा तु गव्यैः प्रेतां रजस्वलाम् ।
वस्त्रान्तरावृतां कृत्वा दाहयेद्विधिपूर्वकम् । इति ॥

अत्रापि ब्राह्मणवचनं कार्यमित्याहुः ॥ प्रायश्चित्तं तु ॥

प्रेतीभूता यदा नारी त्रिंशत्कृच्छ्रैर्विशुध्यतीति ।
प्राजापत्यानि षट्त्रिंशच्छुद्धिरुक्ता मनीषिभिः ॥

इति स्मृत्यर्थसारे ॥ रजस्वलां मृतां प्रक्षाल्य पञ्चगव्यैः स्नापयित्वा वस्त्रान्तरावृतां दहेत् ॥ ब्राह्मणवचनं लब्ध्वेति ॥ यद्वा सूतिकां रजस्वलां प्रक्षाल्य स्नापयित्वा काष्ठवद्दग्ध्वा ब्राह्मणवचनं लब्ध्वा आस्थिविधिना दहेत् ॥

इति रजस्वलामृतौ दाहनिर्णयः ॥

---

[५३१] अथ गर्भस्रावे विशेषः ॥

चतुर्थे मासि गर्भस्रावे तदवस्थायां निवृत्तायां दाहार्थं

रजस्वलावच्छुध्दिः कार्या ॥ गर्भस्य द्रवरूपत्वेन रजोविकारत्वात् ॥ पञ्चमासादिगर्भपाते सति निवृत्तायां दाहयोग्यतार्थं सूतिकावच्छुध्दिः ॥ गर्भस्य कठिनत्वेन प्रसवविकारत्वात् ॥ पाते सूतकविधानात् प्रसवविकारः ॥ तदुक्तं—

आचतुर्थाद्भवेत्स्रावः पातः पञ्चमषष्ठयोः ।
अत ऊर्ध्वं प्रसूतिः स्याद्गर्भनाशो भवेद्यदि ॥ इति ॥

तथा—पाते मातुर्यथामासं पित्रादीनां त्रिरात्रकमिति ॥

अथ सगर्भामरणे दाहविधिरुच्यते गोविन्दराजनिबन्धे—

गुर्विणीमरणे कुक्षिं भित्वा शल्यं समुध्धरेत् ।
ततः शल्यं पृथक्कृत्वा निक्षिपेद्वसुधातले ॥

तथा— सशल्याया मृतायास्तु कुक्षिं भित्वा समुध्धरेत् ।
उद्धृते च ततः शल्ये प्रायश्चित्तं समाचरेत् ॥

तथा—यदा गर्भवती नारी सशल्या संस्थिता यदि ।
कुक्षिं भित्वा ततः शल्यं निर्हरेद्यदि जीवति ॥

शल्यं गर्भः । संस्थिता मृता ॥

प्रमीतं निक्षिपेत्तं तु प्रायश्चित्तं ततः परम् ।
त्रयस्त्रिंशता कृच्छ्रैस्तु मुच्यते शल्यदोषतः ॥ इति ॥

५३२ सगर्भादहने तु दाहं कुर्वतां प्रायश्चित्तमुक्तं स्वायंभुवमनुना—सगर्भादहने तद्वद्वर्णजं वधपातकम् ।

प्रायश्चित्तं चरित्वा तु शुध्यन्ति पापकर्मणः ॥
भ्रूणहत्यां पतिश्चैव मनुः स्वायंभुवोऽब्रवीत् ।
तथा—अन्तर्गर्भमृतस्त्रीणां पृथग्गर्भेण निष्कृतिः ।

दग्ध्वा तु गर्भसंयुक्तां त्रिरब्दं कृच्छ्रमाचरेत् ॥ प्रायश्चित्तं ॥

इति सगर्भामरणे दाहनिर्णयः ॥

अथ निन्दितमार्गप्रवृत्तानां पाखण्डप्रभृतीनां दाहविषयो विचारः प्रस्तूयते ॥ पाखण्डप्रभृतीनां पुत्राद्यधिकारिभिरपि तदानीं दाहोदकदानादि न कार्यं ॥ तदाह याज्ञवल्क्यः—

पाखण्ड्यनाश्रिताःस्तेना भर्तृघ्न्यः कामगादिकाः ।
सुराप्य आत्मघातिन्यो नाशौचोदकभाजनाः ॥

पाखण्डी वेदबाह्यलिङ्गधारी। अनाश्रिताः सत्यधिकारे अनाश्रमिणः। कामगाः कुलटाः॥ आदिग्रहणात् स्वगर्भ ब्राह्मणघातिन्यो गृह्यन्ते ॥ सुराप्य इति लिङ्गमविवक्षितं ॥ अनुपादेयगतत्वात् शेषं सुगमं ॥ आशौचाद्यौर्ध्वदैहिकस्य भाजना न भवन्ति ॥ तेषां दाहादि न कार्यमित्येवं परं ॥ प्रायश्चित्तं कृत्वा कार्यमिति वक्ष्यति ॥ [५३३] तथा मृत्युविशेषात् अद्याशौचादिनिषेधमाह अङ्गिराः—

चण्डालादुदकात्सर्पाद्ब्राह्मणाद्वैद्युतादपि ।
दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्मणाम् ॥
उदकं पिंडदानं च प्रेतेभ्यो यत्प्रदीयते ।
नोपतिष्ठति तत्सर्वमन्तरिक्षे विनश्यति ।

अयं पिंडदानादिनिषेधः यो दर्पादिना चण्डालादीन् हन्तुं गतस्तैर्मारितः तद्विषयः ॥ अबुध्धिपूर्वं चण्डालोदकादिभ्यो मरणे तु तदैव दाहादिविधानं वक्ष्यते ॥

मनुरपि—वृथा सङ्करजातानां प्रव्रज्यासु च तिष्ठताम् ।
आत्मनस्त्यागिनां चैव निवर्तेतोदकक्रियेति ॥

आत्मनस्त्यागिनामिति विषोद्बन्धनादिभिरविहितमार्गेण ये आत्मानं व्यापादयन्ति ते आत्मत्यागिनः तेषामाशौ-

चं न कर्तव्यं ॥ [५३४] तदुक्तं मिताक्षरायां—

हतानां नृप गोविप्रैरन्वक्षं चात्मघातिनां ।

गोग्रहणं शृङ्गिदंष्ट्र्याद्युपलक्षणं ॥ विप्र इति कैमुत्येनान्त्यजोपलक्षणं ॥ आत्मघातिग्रहणं पाखण्डयादिपतितमात्रोपलक्षणं ॥ तेषामन्वक्षमनुगतं सद्यः शाचं न पुनर्दाहादिकं ॥ एतेषां पाखण्डयादीनां शरीरं गङ्गातोये क्षिपेत् ॥

आत्मनस्त्यागिनां नास्ति पतितानां तथा क्रिया ।
तेषामपि तथा गङ्गातोये संस्थापनं हितम् ॥

इति स्मरणात् ॥ एतेषां निषिद्धमपि दाहोदकदानादिकं संवत्सरादूर्ध्वं अनुज्ञातं षट्त्रिंशन्मते ॥

गोब्राह्मणहतानां च पतितानां तथैव च ।
ऊर्ध्वं संवत्सरात्कुर्यात्सर्वमेवौर्ध्वदैहिकम् ॥

तदपि विष्णुबालिपूर्वकंकुर्यात्॥तदुक्तं याज्ञवल्क्यछागलेयाभ्यां—

नारायणबालिः कार्यो लोकगर्हाभयान्नरैः ।
तथा तेषां भवेच्छौचं नान्यथेत्यब्रवीद्यमः ॥

एतदेतेषां पाखण्डयादीनां कालान्तरदाहोदकदानादिविधानमभक्तप्रायश्चित्तासमर्थपुत्राद्यधिकारिविषयं ॥ अथ तेषामति विरक्ता भक्ताः प्रायश्चित्तसमर्थाः पुत्राद्यधिकारिणः सन्ति चेत्तदानीमेव कुर्युरिति स्मृत्यर्थसारे स्पष्टमेवोक्तं ॥ [५३५] प्रायश्चित्तं तु चान्द्रायणद्वयं ॥ तप्तकृच्छ्र चतुष्कं च कृत्वा यद्वात्रिंशत्कृच्छ्राणि कृत्वायद्वा योग्यसर्वप्रायश्चित्तं कृत्वा तदैव दहनाद्यौर्ध्वदैहिकं कुर्युः ॥ एत द्विधिपूर्वदर्पादिना मरणविषयं ॥ यदाहगौतमः ॥ प्रायोऽनाशकशस्त्रा-

ग्निविषोदकोद्बन्धनप्रपतनैर्नैच्छतामिति ॥ प्रायो महाप्रस्थानं । प्रपतनं गिरिवृक्षादिभ्यः । नेच्छतामिति विशेषणोपादानात् अबुद्धिपूर्वकं विषशस्त्रादिभ्यो मृतानां बलात्कारेण वा चाण्डालाद्यैर्मारितानां च तदानीमेवाशौचादिकं दुर्मरणदोषोनास्तीत्युक्तमङ्गिरसा—

अथ कश्चित्प्रमादेन म्रियते ह्युदकादिभिः ।
तस्याशौचं विधातव्यं कर्तव्या चोदकाक्रियेति ॥

अस्पर्शस्पर्शादि अवैधमरणनिमित्तं प्रायश्चित्तं कृत्वेति शेषः ॥ प्रायश्चित्तं तु ॥ जलाग्न्युद्बन्धनैश्चैव विषशस्त्राहिवृश्चिकैः ।
एषु षट्सु निमित्तेषु त्रिंशत्कृच्छ्रं विशोधनमिति॥

[५३९] गोविन्दराजनिबन्धात् ॥स्मृत्यर्थसारे तु चाण्डालगोब्राह्मणपशुदंष्ट्रिसर्पाग्न्युदकादिभिः प्रमादान्मरणे तु चान्द्रं तप्तकृच्छ्रद्वयं च कृत्वा यद्वा पञ्चदश कृच्छ्रान्कृत्वा विधिना दहनाद्याशौचं सर्वं कार्यमेव ॥ अत्रैव स्मृत्यन्तरे विशेषः ॥

चाण्डालेन हता ये च अग्निदाहविवर्जिताः ।
अलभ्ये च शरीरे तु कारयेत्प्रातिमां कुशैः ॥
विद्यमाने शरीरे च अस्थीनि विधिना दहेत् ।
अस्पर्शे कृतदाहा ये प्रायश्चित्तविधिं शृणु ॥
चान्द्रायणद्वयं चैतत्तप्तकृच्छ्रद्वयं तथा ।
सांतपनं तथा कृच्छ्रं चत्वार्येव प्रकल्पयेदिति ॥
अष्टौ चान्द्रायणे कार्याः षट्कार्यास्तप्तकृच्छ्रके ।
द्वौ तु सांतपने कार्यौ प्रत्याम्नाया उदीरिताः ॥
कार्याः प्राजापत्याः ॥

इति चाण्डालादिहते दाहनिर्णयः ॥

अथानुष्ठानासमर्थजीर्णवानप्रस्थादीनां विधितोऽभ्युदकादिमरणे फलविशेषः प्रतिपादितो विष्णुना—

समाःसहस्राणि च सप्त वै जले दशैकमग्नौ पतने च षोडश। महाहवे षष्टिरशीतिगोग्रहे अनाशके भारत चाक्षया गतिः ॥

[५३७] तथा शातातपः—

वृद्धःशौचक्रियालुप्तः प्रत्याख्यातभिषक्क्रियः ।
आत्मानं घातयेद्यस्तु भृग्वग्न्यनशनांबुभिः॥

इत्यादि ॥ एतेषामूर्ध्वदैहिकविषयो विचारो निरूपितो मासिकप्रकरणे ॥ अथ आहिताग्नेर्निषिद्धविप्रादिहस्तमरणे विशेषः ॥ यथा ननु—

नाशौचं नोदकं नाश्रु न दाहाद्यन्तकर्म च ।
ब्रह्मदण्डहतानां च न कुर्यात्कटधारणम् ॥

ब्रह्मदण्डहताः ब्राह्मणादिहताः ॥ यमस्मृत्युक्तोऽयं दाहनिषेध आहिताग्निविषयो न भवेत् ॥ कुतः आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्चेत्येतत् श्रुतिविहिताग्नियज्ञपात्रादिप्रतिपत्तिलोपप्रसङ्गात्॥ श्रुतिस्मृत्योर्विरोधे श्रुतेः प्राबल्याच्च सत्यं ॥

वैतानं प्रक्षिपेदप्सु आवसथ्यं चतुष्पथे ।
पात्राणि तु दहेदग्नौ यजमाने वृथा मृते ॥

[५३८] इत्यनेनाङ्गिरः स्मृतिवचनेन वृथा मृते वृथानाम वैदिकमार्गं परित्यज्यान्यमार्गाश्रयणान्मृते अतश्चाण्डालादिहताहिताग्निसंबन्धिनां यज्ञपात्राणामप्सुप्रक्षेपादिलक्षणप्रतिपत्यन्तर विधानादयं स्मार्तोऽपि दाहादिनिषेधश्चाण्डालादिहताहिताग्नि विषये न प्रवर्तते इति नाशङ्कनीयं अथवा क्षत्रियाद्याहिता-

ग्नौ पापकर्मणि स्मार्तो दाहनिषेधः ॥ ब्राह्मणाहिताग्निदुर्मृति विषये श्रुतेश्चरितार्थत्वं ॥ अतो ब्राह्मणं यथा कथञ्चित्स्वाग्निभिर्दहेदित्याशयेनाह पाराशरः—

चाण्डालेन श्वपाकेन गोभिर्विप्रैर्हतो यदि ।
आहिताग्निर्मृतो विप्रो विशेषेणात्मघाततः ॥
दहेत्तं ब्राह्मणं प्रेतं लोकाग्नौ मंत्रवर्जितम् ।
दग्ध्वास्थीनि गृहीत्वा च क्षीरेण क्षालयेत्ततः ॥
स्वाग्निभिः स्वस्वविधिना पृथगेतत्पुनर्दहेत् । इति ॥

एतत्पुनर्दाहविधानमत्यन्तनिषिद्धाचरणोपेतमिति विषयाभिप्रायं ॥ [५३९] यद्वाग्निसन्निधानागमनाशक्यात् दूरदेशान्तरमृतविषयं॥ अग्नीनां सान्निध्ये तु दुर्मरणयोग्यं प्रायश्चित्तं कृत्वा स्वाग्निभिरेव दहनं कार्यं स्वशाखाविधिना ॥ स्मृत्यर्थसारे ॥ शक्तो भक्तः पुत्रः पित्रादेः पापिनः सर्वात्मना शुद्धिमिच्छेच्चेत् प्रायश्चित्तप्रकरणोक्तप्रायश्चित्तानामन्यतमं योग्यं कृत्वा तदानीं शुद्धिं संपाद्य दहनादिकं कुर्यात् ॥ इति निर्णयः ॥ तथा—प्रवासस्थमृतानां तु प्रायश्चित्तं कथं भवेत् ।

प्राजापत्यास्तु षट्त्रिंशत् शुद्धिरुक्ता मनीषिभिः ॥इति॥

अथ यद्यपि सर्वसापिंडविषयमाशौचं पृथगग्रे निर्णेष्यते ॥ तथापि संवत्सरेऽतीतेऽपि पित्रोराशौचं पुत्राणां स्यादिति प्रतिपादनार्थमब्देऽतीते सपिंडमृतिश्रवणे तन्निमित्ताशौचं सपिंडानां न स्यात् ॥ [५४०] तदाह वृद्धवसिष्ठः—

मासत्रये त्रिरात्रं स्यात्षण्मासे पक्षिणी तथा ।
अहस्तु नवमादर्वाक् पूर्णे दत्वोदकं शुचिः ॥

इदं सपिंडानामतीताशौचं स्वाशौचकालादूर्ध्वं ब्राह्मणादीनां सर्वेषां वर्णानां उपनयनादूर्ध्वं स्त्रीशूद्राणां विवाहादूर्ध्वं भवतीति स्मृत्यर्थसारे ॥ मनुरपि—

संवत्सरे व्यतीते तु स्पृष्ट्वैवापो विशुध्यति ।

संवत्सरे पूर्णे यदि प्रोषितसपिंडमरणमवगतं स्यात्तदा सर्वो ब्राह्मणादिवर्णः स्नात्वोदकं दत्वा शुचिः स्यात् ॥ एतच्च शुचित्वाभिधानं मातापितृव्यतिरिक्तविषयं ॥ तद्विषये श्रवणमात्रादेवाशौचं स्यात् ॥ तदुक्तं पैठीनसिना—

पितरौ चेन्मृतौ स्यातां दूरस्थोऽपि हि पुत्रकः ।

श्रुत्वा तद्दिनमारभ्य दशाहं सूतकी भवेत् ॥ तथा स्मृत्यन्तरेऽपि—महागुरुनिपाते तु आर्द्रवस्त्रोपवासिना ।

अतीतेऽब्देऽपि कर्तव्यं प्रेतकार्यं यथाविधि ॥

महागुरुः पिता ॥ तदानीं प्रेतकार्यं कर्तुमारभेत् ॥ यथाविधीति यद्यनेन केनाप्यधिकारिणा विधिवद्दहनादि न कृतं तदा अस्थ्यादिदाहपूर्वकं कुर्यात् ॥ कृते त्वार्द्रवस्त्रोपवासमात्रमिति ॥ पितृपत्न्यामपि मातृव्यतिरिक्तायां स्मृत्यन्तरे विशेषो दर्शितः ॥

पितृपत्न्यामपेतायां मातृवर्ज्यं द्विजोत्तमः ।

संवत्सरे व्यतीते तु त्रिरात्रमशुचिर्भवेत् ॥ इति ॥

[५४१] एवमेवोक्तं स्मृत्यर्थसारेऽपि ॥ मातापितृमरणे दशाहादूर्ध्वमपि दूरदेशे संवत्सरादूर्ध्वमपि पुत्रः श्रुत्वा मरणश्रवणदिनमारभ्य दशाहादिकं यथावर्णमाशौचं कुर्यात् ॥ उदकपिंडादिकं च महागुरुमरणे दूरदेशे अतीतेऽब्देऽपि आर्द्रवस्त्रो-

षवासिना तथैवाशौचादिकं कार्यं ॥ स्त्रीपुरुषयोः परस्परं चैवं सवर्णोत्तमवर्णसपत्नीषु चैवं ॥ देशान्तरे कालान्तरे च हीनवर्णाया मातुः सपत्न्या मरणे पुत्रस्य त्रिरात्रं ॥ हीनवर्णसपत्नीषु चैवं ॥ संवत्सरेऽतीतेऽपि सपत्न्योः परस्परं चैवं ॥ इदं चाशौचं सर्ववर्णसमं ॥

तथा ॥ देशान्तरमृतानां सपिंडानामाशौचकालादूर्ध्वं श्रुते सत्याशौचं न भवति ॥ तदुक्तं—

देशान्तरमृतं श्रुत्वा क्लीबे वैखानसे यतौ ।
मृते स्नानेन शुध्यन्ति गर्भस्रावे च गोत्रिण इति ॥

मनुरपि—बाले देशान्तरस्थे च पृथक्पिंडे च संस्थिते ।
सवासा जलमाप्लुत्य सद्य एव विशुध्यतीति ॥

[५४२] तद्देशान्तरमनेकधोक्तं ॥ देशान्तरलक्षणं बृहस्पतिनोक्तं—

महानद्यन्तरं यत्र गिरिर्वा व्यवधायकः ।
वाचो यत्र विभिद्यन्ते तद्देशान्तरमुच्यते ॥
देशान्तरं वदन्त्येके षष्टियोजनमायतम् ।
चत्वारिंशद्वदन्त्यन्ये त्रिंशदन्ये तथैव च ॥

स्मृत्यर्थसारे तु स्मृतिपुराणतीर्थकल्पोक्तानेकप्रकारदेशान्तरनिरूपणावसरे अनयोर्महानद्यन्तरं यत्रेत्यादिवचनयोरप्यर्थो निरूपितः ॥ मासाशौचिनः शूद्रस्य षष्टियोजने देशान्तरं । वैश्यस्य त्रिंशद्योजने क्षत्रियस्य चतुर्विंशतियोजने ब्राह्मणस्य विंशतियोजने इति पक्षान्तरं चोक्तं ॥ [५४३] एतानि योग्यतया व्यवस्थितानीति केचित् ॥ देशकालदुर्गमार्ग पर्यालोचनया सर्वेषां अविशेषेण भवतीत्यनेन आशौचे यथापक्षान्तरे-

णाविशेष इति ॥ तथा भाषाभेदविशेषः महागिरिव्यवधानं महानदीव्यवधानमिति द्वादशाष्टचतुर्योजनानि त्रीणि देशान्तराणि तानि सामान्यान्युक्तानि ॥ तानि त्रिरात्रादिविषयाण्यपि भवन्ति ॥ विषयश्चोक्तस्तत्रैव अस्माद्ग्रन्थात्पूर्वतरग्रन्थे ॥ तद्देशं त्रिधा विभज्य आद्ये समीपभागे त्रिरात्रं ॥ ततो दूर भागे पक्षिणी ततो दूरभागे त्वेकाहं स्यात् ॥ एवं देशकालादिपर्यालोचनया यत्राल्पाशौचं तदेव ग्राह्यं ॥ अद्याहानि न वर्धयेत् ॥ नाद्याहानि वर्धयेयुरिति ह स्माह कौषीतकिरिति शाङ्खायनश्रौतसूत्रे ॥ भाषाभेदमात्रगिरिव्यवधाननदीव्यवधानानि च त्रीणि देशान्तराणि स्मृतानि ॥ एवं न्यूनान्यपि देशान्तराण्युक्तानि तानि त्रिरात्रविषयाणि भवन्ति पूर्ववत् ॥ एवं देशान्तरस्थे मृते त्वाशौचकालादूर्ध्वं श्रूयते ॥ सर्वेषां सपिंडानां सचैलस्नानं नत्रिरात्रादीति निरुपितं स्मृत्यर्थसारे ॥ इदं सर्ववर्णसमं ॥ [५४४]अथ देशान्तरात्सपिंडमरणदेशसमागतः सपिंडमृतिं शृणोति तदा देशान्तरस्थितेन मृतिश्रुतेरश्रवणात् ॥ मासत्रये त्रिरात्रं स्यात्षण्मासे पक्षिणी तथा । इत्यादि सूतकं भवेत् ॥ अन्यथा—

गृहस्थे प्रोषिते यच्च क्वचिच्चेन्म्रियते गृहे ।
प्रत्यागतश्चेज्जानाति तच्च वृत्तं गृही तदा ॥
आशौचं गृहिणस्तस्य न द्रव्यादेस्तदा भवेत् ।
तथा—अतिक्रान्ते दशाहे तु पश्चाज्जानाति चेद्गृही ॥
त्रिरात्रं सूतकं तस्य न तद्द्रव्यस्य कर्हिचित् ॥

इत्यादिस्मृतिवचनान्यसंगतानि स्युः ॥ योजनप्रमाणमुक्तं—

पुराणान्तरे—तिर्यग्यवोदराण्यष्टावूर्ध्वा वा व्रीहयस्त्रयः ।
प्रमाणमङ्गुलस्योक्तं वितस्तिर्द्वादशाङ्गुला ॥
वितस्तिर्द्विगुणाऽरत्निस्ततः किष्कुस्ततो धनुः ।
धनुः सहस्रे द्वे क्रोशश्चतुःक्रोशं तु योजनम् ।

इति पित्रोराशौचनिर्णयः ॥

---

[५४५] अथास्थि प्रक्षिपेदित्युक्तं ॥ तद्विधिः स्मृत्यन्तरात्—
स्नात्वा ततः पञ्चगव्येन सिक्त्वा हिरण्यमध्वाज्यतिलैश्च योज्य।
ततस्तु मृत्पिंडपुटे निधाय पश्यन्दिशं प्रेतगणोपगूढाम् ॥
नमोस्तुधर्माय वदन्प्रविश्य जलं स मे प्रीत इति क्षिपेच्च ।
उत्थाय भास्वन्तमवेक्ष्य सूर्यं सदक्षिणां विप्रमुख्याय दद्यात्।इति॥
मंत्रान्तरं—यावदस्थीनि त्वदीयान्यस्मिंस्तीर्थे वसन्ति हि ।
तावत्कल्पसहस्राणि वैकुण्ठे वस भो मृतेति ॥

---

अथ पुनः संस्कारार्थं कालादिकं निरूप्यते ॥

तत्र संवत्सरादूर्ध्वं उत्तरायणकालः श्रेयान् तत्रापि नन्दां त्रयोदशीं चतुर्दशीं दिनक्षयं च वर्जयेत् ॥ शुक्रशनैश्चरवारौ वर्ज्यौ ॥ नक्षत्रेषु भरणी कृत्तिकाऽश्लेषा मघा मूलं धनिष्ठादिपञ्चकं त्रिपुष्कराणि सर्वथा वर्ज्यानि व्यतीपाते वैधृते परिघे च योगे विष्टिकरणे चतुर्थाष्टमद्वादशस्थे चन्द्रे चातिदोषः॥ रोहिणीपुनर्वसुपूर्वोत्तराचित्राविशाखाऽनुराधापूर्वाषाढोत्तराषाढा निषिद्धत्रिपुष्कराणि च ईषद्दुष्टानि संभवे वर्ज्यानि शिष्टा-

नि ग्राह्याणि ॥ [५४६] सर्वथा दिनशुध्यभावे अतिदुष्टं न ग्राह्यं॥ युगादिमन्वादि संक्रांत्यमावास्यासु प्रेतकार्यं किंचिदपि नैव शोध्यमिति स्मृत्यर्थसारे ॥ तथा आशौचदिनमध्ये पुनः संस्कारे तु दुष्टवारनक्षत्रादि संभवे शोध्यं ॥ साक्षादेकादशाहे किंचिदपि नैव शोध्यं प्रेतकार्ये॥ पुनः संस्कारविधिस्तावन्मिताक्षरायां ॥ यदा तु प्रोषितमरणे शरीरं न लभ्यते तदास्थिभिः प्रतिकृतिं कृत्वा तेषामप्यलाभे पर्णशरैः शौनकादिगृह्योक्तमार्गेण प्रतिकृतिं कृत्वा संस्कारः कार्यः ॥

स्मृत्यन्तरात्—अस्थीनि चेन्न लभ्यन्ते प्रोषितस्याग्निहोत्रिणः।

पालाशं चैव वृन्तानां षष्ठ्यधिकशतत्रयम् ।

तान्यस्थिस्थानानि कृत्वेति शेषः॥ तथा शाङ्खायनः॥ शरीरेष्वदृश्यमानेषु त्रीणिषष्टिशतानि पलाशवृन्तानि तेषामावापस्थानं ॥ चत्वारिंशच्छिरसि । ग्रीवायां दश । अंसयोर्बाह्वोः शतं । उरसि त्रिंशत् । जठरे विंशतिः । षट् वृषणयोः । शिश्ने चत्वारि । ऊर्वोः शतम् । त्रिंशत् जानुजङ्घाष्ठीवतोः । पादाङ्गुलिषु विंशतिः । एवं त्रीणि शतानि षष्टिश्च भवन्ति ॥ पुरुषाकृतिं कृत्वोर्णासूत्रैः परिवेष्ट्य यवचूर्णैः प्रलिप्य सर्पिषाभ्यज्याग्निभिः संस्कुर्वन्ति इति॥ [५४७] आशौचं चात्र दशाहिकमेव ॥ आहिताग्निश्चेत्प्रवसन्म्रियेत पुनः संस्कारं कृत्वा शववच्छौचमिति वसिष्ठस्मरणात् ॥ स्मृत्यर्थसारेऽपि आहिताग्निश्चेत्प्रवसन्म्रियेत पुनः संस्कारे प्रत्यक्षशववद्दाहादिकं संपूर्णाशौचं यथावर्णं कार्यं ॥

तथा दाहादूर्ध्वं प्रकर्तव्यमेषवैतानिको विधिरिति ।

शङ्खस्मरणात् ॥ आहिताग्निविषये तस्मिन्दशाहं स्वाद्यमिति दशकं ॥ तस्मादाहिताग्नेराशौचं आद्यश्राद्धं च दाहप्रभृतीति निर्णयः ॥ अनाहिताग्नेः प्रतिकृति विधानमेतदेव॥ सूतकादौ विशेषः ॥ अनाहिताग्नेः पुनः संस्कारे त्रिरात्रमिति वसिष्ठः—सुपिष्टैर्जलसंमिश्रैर्दग्धव्यश्च तथाग्निना ।

असौ स्वर्गायलोकाय स्वाहेत्युक्त्वा सबान्धवैः ॥
एवं पर्णशरं दग्ध्वा त्रिरात्रमशुचिर्भवेत् ।

५४८ स्मृत्यर्थसारे ॥ अनाहिताग्नेः पुनः संस्कारस्तत्सूतकमध्ये कृतस्तत्सूतकशेषेणैव शुद्धिः ॥ अतीते सूतके पुनः संस्कारे तु पूर्वमगृहीताशौचस्य पुत्रस्य पत्न्याश्च दशाहाशौचं ॥ गृहीताशौचस्य पत्न्याश्च त्रिरात्रं ॥ पत्नी पुनः संस्कारे पुत्युश्चैवं सपत्न्योर्मिथश्चैवं ॥ अगृहीताशौचानां सपिंडानां त्रिरात्रं ॥ गृहीताशौचानां सपिंडानां पुनराशौचं नास्ति ॥ त्रिरात्राशौचे पिंडोदकदानप्रकारो निरूपित आद्य श्राद्धप्रकरणे॥

इति पुनः संस्कारनिर्णयः ॥

---

## ५४९ अथ पुनर्दाहे प्रायश्चित्तं ॥

प्रत्यक्षशवसंस्कारे कर्तव्ये ऊर्ध्वोच्छिष्टाधरोच्छिष्टास्पृश्यस्पृष्टमरणखट्वामरणबद्धमरणादिषु सत्सु त्रीन्कृच्छ्रान् षट् कृच्छ्रान् द्वादशकृच्छ्रान् प्रायश्चितं निमित्तानुसारेण कृत्वा दहेत् ॥ विप्रवचनं गृहीत्वेति॥ तथा किंश्चिद्दहनकर्ता आत्मनः शुद्धिं कुर्यात् ॥ प्रेतस्यात्मनश्च शुद्धिमनुत्पाद्य कृतं नोपति-

ष्ठति ॥ उभयोर्नरकं ध्रुवमिति स्मृत्यर्थसारे ॥ तथा—

प्रवासस्थमृतानां तु प्रायश्चित्तं कथं भवेत् ।

प्राजापत्यास्तु षट्त्रिंशच्छुद्धिरुक्ता मनीषिभिः ॥

दुर्मरणनिमित्तं प्रायश्चित्तमकृत्वा स्नेहादिना चेदौर्ध्व-दैहिकं कुर्यात्तदा कर्तुर्दोषः ॥ तदुक्तमाम्नाये—

कृत्वाग्निमुदकं स्नानं स्पर्शनोद्वहनक्रियाम् ।

रज्जुच्छेदाश्रुपातं च तप्तकृच्छ्रेण शुध्यति ॥

अबुद्धिपूर्वेऽपि संवर्तः—

एषामन्यतमं प्रेतं यो वहेत दहेत वा ।

कटोदकक्रियां कृत्वा कृच्छ्रं सान्तपनं चरेत् ॥

एषामात्मघातमृतानामिति ॥ अतस्तेषां प्रायश्चित्तं कृत्वा शुद्धिं दाह कार्यः ॥

## इति दुर्मरणे दाहनिर्णयः ॥

---

## [५५०]अथ साग्नेः सूतकविचारः ॥

आहिताग्नेर्दाहात्सूतकमुक्तं ॥

मरणादेव कर्तव्यं संयोगो यस्य नाग्निभिः ।

दाहादूर्ध्वं प्रकर्तव्यमेष वैतानिको विधिः ॥

तथा सति साग्नेर्देशान्तरेमरणादेव कर्तव्यावरोधेन कालान्तरेणाग्निप्राप्तौ सत्यां दाहे सति सन्निधाने स्थितानां पुत्रादिसपिंडानां मरणनिमित्तं सूतकं भवेन्न भवेद्वेति विचार्यते॥

विगतं तु विदेशस्थं शृणुयाद्यो ह्यनिर्दशम् ।

यच्छेषं दशरात्रस्य तावदेवाशुचिर्भवेत् ॥

तथा—प्रोषिते कालशेषः स्यादशेषे त्र्यहमेव तु ।

अशेषे दशाहातिक्रान्ते मासत्रये त्रिरात्रं स्यादित्यनेन समानार्थं ॥ [५५१] एतेन देशान्तरमृते तत्पुत्रादीनामासंस्कारात् सन्ध्यादिकर्मलोपोनास्ति ॥ तदिदं विधिवद्दहनाभावेन उदककदानस्यापि योग्यताभावात् उत्क्रान्तिदशाहातिक्रमाच्च ॥ विधिवत्संस्कारार्थं अस्थिप्रतीक्षापरं ॥ यत्तु पितृमरणश्रवणादेव प्रेतकार्यं कर्तव्यमिति वचनं तदस्थिप्रतीक्षारहितविषयं ॥

अनग्निमत उत्क्रान्तेराशौचं हि द्विजातिषु ।

दाहादग्निमतो विद्याद्विदेशस्थे मृते सतीति ॥

विदेशस्थे मृते आहिताग्नौ त्रेताग्निसन्निधानाभावे न वैधदहनाभावे सति सन्निहितास्थितैः पुत्रभ्रातृसापिंडैरुत्क्रान्तिदशाहमध्ये मातृभ्रातृपितृव्यकादीनामागतं प्रत्याब्दिकं कर्तव्यं वा न वेति ॥ अथवा सन्निधानस्थितैरन्यैस्ते पितृक्षयाहादिश्राद्धे उपवेशनीया न वेति ॥ उपवेशनं तु लोकविगीतत्वान्नादरणीयं ॥ यद्यप्यविगीतं ॥ तथापि मधुपर्के पश्वालंभनवत् लोकविद्विष्टत्वात् नानुष्ठेयं ॥ मनुः—

[५५२] अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्न तु ।

किं च ॥ इदमाशौचं मरणनिमित्तं दाहनिमित्तं वा ॥ दाहनिमित्ते तु साग्नौ मृते आशौचं दाहादिति अद्य पितृक्षयाहः ब्राह्मणभोजनकालपर्यन्तं दाहो न कार्य इति कश्चिद्वदेत् इत्यादि लोके उपहासता स्यात् ॥ मरणनिमित्तं चेत् उत्क्रान्तिदशाहे प्राप्तं तस्मादुत्क्रान्तिदशाहापहारेण साग्निकनि-

मित्तत्वेनाधिकाशौचविधानमिति॥अतोऽनग्निमत उत्क्रान्तेः ॥ साग्नेः संस्कारकर्मणः शुद्धिरित्येतद्यथा कथञ्चिदधिकाशौच-विधिपरं व्याख्येयमिति निर्णयः ॥ ५५४ अथ देशान्तरमृते, साग्नौ अस्थ्यनागते पत्नीमरणे निर्णयः प्रस्तूयते ॥

देशान्तरगते प्रेते यजमाने श्रुते सति ।
दाहार्थं रक्षिते वन्हौ पत्नी यदि गृहे मृता ॥
तदा सुतेन कर्तव्या तयोर्दाहे तु का गतिः ।

अत्रोच्यते ॥ यजमानास्थ्नां दाहार्थे रक्षितेऽग्नौ यदि गृहे पत्नीमरणं तदाग्नयो रक्षणीया उत तैः पत्नीं दहेदिति संशये जैमिनिः—

विरोधिन्युत्तरोत्पन्ने पूर्वोत्पन्नं तु दुर्बलम् ।
जैमिनिर्मुनिराहैवं न्यायशास्त्रसमन्वितम् ॥

उत्तरोत्पन्नं पत्नीमरणं पूर्वोत्पन्नास्थिदाहविरोधि ॥ अतः प्रबलत्वादुत्तरं स्यादिति ॥ तथा ॥ पौर्वापर्ये पूर्वदौर्बल्यमिति द्वादशाध्यायीसूत्रे उत्तरं प्रबलमिति प्रतिपादितं शबरस्वामिभिः ॥ ५५५ न्याये तूत्तरत्र मणिमंत्रादि बाधकसन्निधाने पूर्वाग्नेर्दाहकशक्तिर्बाध्यत इति ॥ ननु ॥ ये पुरोदंचो दर्भास्तान्दक्षिणाग्रांस्तृणीयात्॥तथा अधस्तात्समिधं धारयन्नुपरि हि देवेभ्यो धारयति ॥ इत्यादि प्रोषितमृताग्निहोत्रहोमविधिना होमे क्रियमाणे सति यजमानसंबन्धिनोऽग्नयःसंपन्ना इति पत्न्या अपरोधशङ्का ॥ तत्रोत्तरं ॥

प्रवासमृतविधिना क्रियमाणेऽग्निहोमके ।
तत्रापि पत्निसविधे स्यादनालंभुका विना ॥

यतः—उभयोरसमक्षं चेध्दुतमप्यहुतं भवेत् ॥

इति वचनात् सविधं सन्निधानं ॥ सविधसमीपेति पाणिनिस्मरणात् ॥ अनालंभुकां रजस्वलां ॥ तथा च मिताक्षरायां ॥ यस्य व्रतेऽहनि पत्न्यनालंभुका स्यात्तामपरुध्य यजेतेति ॥

[५५५] किं च—नोपवासः प्रवासे स्यात्पत्नी धारयते व्रतम् ।
तथा ॥ पत्नी सीमामतिक्रामेद्यजमानो गृहे यदि ।
आहोमाद्यदि नागच्छेत् पुनराधानमर्हति ॥

तथा ॥ आदधीयातामिति द्विवचनदर्शनादित्यादिश्रुतिस्मृतिवचनपर्यालोचनया पत्नीयजमानयोराधानाग्निषु तुल्योऽधिकार इति गम्यते ॥ तथा सति पत्नीमरणसमये यद्यस्थीनि पितुरागच्छेयुस्तदा सहदाह इति ॥ अथ काण्वशाखायां ॥मुमुक्षुः पुनरादधाति ॥ तैः शरीरं संस्कृत्य अस्थीन्युध्धृत्य प्रथमाधानाग्निभिः पात्रैश्च यथावत्पुनःसंस्कार इति ॥ एतच्च गृहेऽग्निहोत्रसद्भावविषयं ॥ पत्न्या सह अग्निहोत्रे दग्धे पश्चादागतान्यस्थीनि पुनः संस्कारविधिना लोकाग्निना दहेत् ॥ अनन्यगतिकत्वात्॥ तथा ॥ अथ यत्स्वैरग्निभिर्यजमानं संस्थापयन्ति देवरथो वा अग्नय इत्यादिश्रुतिः यजमानमिति दंपत्योर्ध्यासज्यकर्तृत्वाभिप्रायेणैकवचनं ॥ [५५६] यथा अग्नीषोमयोर्देवतात्वं ॥ अतः पूर्वमृतां पत्नीं अग्निभिर्दहेदिति श्रुतिस्मृतिसिद्धं॥ अग्नयो यजमानस्यापि देवरथत्वं कुर्वन्ति ॥ अग्निहोत्राकर्मजनितापूर्वस्य विद्यमानत्वात् ॥ सर्वं कर्मापूर्वं कर्तारं तिष्ठति॥ तेनापूर्वेण शरीरान्तरे स्वर्गः स्यात् ॥ तथा च कौषीतकिः ॥

सएतेन देवरथेन स्वर्गं लोकमेति ॥ सुकृतां यत्रलोक इति ॥
सुकृतां पुण्यवतां लोकः स्वर्गः निरन्तरं सुखं ॥ तदुक्तं ॥

यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् ।
अभिलाषोपनीतं च सुखं स्वर्गपदास्पदम् ॥

स्वर्गार्थमग्निहोत्रं स्वर्गाग्निहोत्रं तादर्थ्यतात् षष्ठी ॥ एवमात्मार्थं मुक्त्यर्थं च अग्निहोत्रं त्रिविधं अधिकारिभेदेन ॥ अग्निहोत्रकर्मनामधेयं ॥ यावज्जीवमग्निहोत्रं जुहुयादिति ॥ सायं प्रातः कालेन संकोच्यते ॥ वसन्ते ब्राह्मण आदधीतेति आधानानन्तरमग्निहोत्राकर्म क्षौमे वसानावादधीयातामिति दंपत्योर्व्यासज्य कर्तृत्वं ॥

[५५७]यथा—न गृहं गृहमित्याहुर्गृहणी गृहमुच्यते ।
वृक्षमूलेऽपि दयिता यत्र तिष्ठति तद्गृहमिति ॥

गृहस्थस्य गृहिण्या सहाग्निहोत्रं गृहीत्य ग्रहस्थधर्मः॥ तथा स्वर्गकाम आदधीत ॥ ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादिवाक्यैः पापक्षयद्वारा स्वर्गः फलं ॥ अग्निहोत्रादिकर्मणा अस्य रस एनं जाया भूत्वा स्वर्गलोके भाग्यशेरत इति श्रुतिः ॥

यतः—सहाया यादृशा यत्र फलं तत्रापि तादृशम् ।
श्रद्धादिसामग्र्याधिक्यात् स्वर्गफलभोगाधिक्यं तत्र ॥

यथैव कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयत इति भगवद्गीतायां ॥ क्षीणे पुण्ये मर्त्यलोकं विशन्ति ॥ तथा—

स्वर्गच्युतानामिहजीवलोके चत्वारि चिन्हानि वसन्ति देहे ।

दानप्रसङ्गो मधुरा च वाणी देवार्चनं ब्राह्मणतर्पणं च ॥

तथा ॥ वेदोक्तानि कर्माणि कुर्वन्ति ते धूममभिसंभवन्ति ॥ धूमाद्रात्रिमित्यादिक्रमेण पुनरेव इमं लोकं प्रतिपद्यन्ते इति यास्कः ॥ [५५४] एतत्स्वर्गोऽग्निहोत्रफलं मोक्षः ॥ स्वधर्मकर्म भावेन क्रियमाणं ॥ स्वेषु स्वेषु दारेषु सदा रतानां जितेन्द्रियाणां गृहेऽपि मोक्षः ॥ मृतभार्यस्य

दाहयित्वाग्निहोत्रेण स्त्रियं वृतवतीं पतिः ।
आहरेद्विधिवद्दारानग्नींश्चैवाविलम्बयन् ॥
अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः ।इति दक्षः॥
पत्नीसंपत्त्यभावे वा अग्निहोत्रं न तत्त्यजेत् ।
ईजे दाशरथी रामः कृत्वा पत्नीं हिरण्मयीम् ॥
पत्न्यभावे कुशमयी पत्नी स्यादिति केचन ।
अपत्नीकोऽप्यग्निहोत्रं श्रद्धापत्नीसमन्वितः ॥
जुहुयात्सत्यधर्मस्थ इत्युवाचाश्वलायनः ।
अपत्नीके हविः श्राप्यो अग्नावाहवनीयके ॥
इति केचन आहुः स्म कात्यादीनां न तन्मतम् ।
यौक्तं न स्यात्पत्न्यभावात्कुर्यादाज्यावलोकनम् ॥
अध्वर्युरिति शिष्टोक्तिः स्वभाष्ये तैर्निरूपितम् ।
आश्वलायनः ॥ [५५५] आधानाभावेऽभयं प्रदर्श्य आदधीतेत्युक्त्वोक्तं ॥

यजेत सौत्रामण्यामप्यपत्नीकोऽप्यसोमपः ।
कर्मणि त्विह संसिद्धिमास्थिता जनकादयः ॥

अपत्नीको गृहस्थाश्रममधितिष्ठन् आत्मसाधनार्थं आ-

त्मज्ञानसाधनार्थं च अग्निहोत्रं जुहुयात्॥ यमनियमासनप्राणायामप्रत्याहारध्यानधारणासमाध्यष्टविधयोगेन जपाद्यन्यतमयोगेन वा आत्मसाधनं कुर्यात्॥ यद्यन्तरा योगाद्भ्रश्येत तर्हि

शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ।
योगे पुनः प्रवर्तेत मुच्यते कर्मबन्धनात् ॥

उक्तं च—जन्मजन्मनि चाभ्यस्तं दानमध्ययनं तपः ।
तेनैवाभ्यस्तयोगेन तत्रैवाभ्यसते पुनः ॥

इत्यात्माग्निहोत्रं ॥ एवं ब्रह्मज्ञानान्मुक्तिः ॥

श्राद्धकृत्सत्यवादी च गृहस्थोऽपि हि मुच्यते ।

[५१०] तथा—

जितेन्द्रियाणामतिथिप्रियाणां गृहेऽपि मोक्षः पुरुषोत्तमानाम् ।

अथवा अपरं यतीनां मुक्त्यर्थमान्तरमग्निहोत्रं ॥ तत्र सर्वं मानसं ॥ उक्तं च ॥ अथातः संयमनं प्रातर्दनमान्तरमग्निहोत्रमित्याचक्षते ॥

आत्माग्निहोत्र एतेषां ब्रह्मविद्यासहायिनाम् ।
ब्रह्मज्ञानात्मको धर्मस्तत्स्वरूपस्य चिन्तनम् ॥
प्राणवाचां परस्परं होमः संपद्यते सदा ।
अजपाजपवत्पार्थज्ञानेऽत्र फलमश्नुते ॥

अत्र श्रुतिः ॥ यावद्वै पुरुषो भाषते न तावत्प्राणितुं शक्नोति वाचं तदा प्राणे जुहोति ॥ यावद्वै पुरुषः प्राणिति न तावद्भाषितुं शक्नोति प्राणं तदावाचि जुहोति । एते अनन्ते अमृते आहुती जाग्रच्च स्वप्नांश्च सततं जुहोति ॥ अन्या आहुतयोऽन्तवत्यस्ताः कर्ममय्यो भवन्ति ॥ [५११] तद्यथैतत्पूर्वे

विद्वांसोऽग्निहोत्रं न जुहवांचक्रुः ॥ एतद्वाह्यमग्निसाध्यमग्निहोत्रं पूर्वविद्वांसो ज्ञानवन्तः सनकादयः ॥

हंसमुच्चरति प्राणी उच्छ्वसन्सन्नहर्निशम् ।
अजपाजप एवायं संकल्पादजपाफलम् ॥

हंसः परमात्मा ॥ सूर्यमण्डलस्थः पुरुषो वा विनिर्गच्छति हंसशब्दात् विशत्यन्तः ॥

हंसं जपति च प्राणी मूढात्मातो न विन्दति ।
षट्शतैरधिका प्रोक्ता सहस्राण्येकविंशतिः ॥
अहोरात्रं श्वसन्प्राणी अजपां जपति ध्रुवम् ।

चतस्रो गार्हपत्ये चतस्रोऽन्वाहार्यपचने द्वे आहनीये एताः कर्ममय्यः ॥ [५६२] इत्यग्निहोत्रं आश्वलायनब्राह्मणे ॥ तदाहु रपत्नीकोऽग्निहोत्रमाहरेत् ॥ नाहरेदिति ॥ आहरेदित्याहुर्यदि नाहरेदनद्धा पुरुषः कोनद्धा पुरुष इति न देवान्न पितॄन्न मनुष्यानिति ॥ तस्मादपत्नीकोऽग्निं वचनाच्छ्रुतेरिति ॥ तस्मात्सौम्यं याजयेदिति निर्णयः ॥ अत्र विशेषः ॥ मातृमृताशौचमध्ये पूर्वं श्रुतानि पितुरस्थीन्यागच्छेयुस्तदा मातुराशौचान्ते सपिंडनात्प्राक् पितुर्दाहादिसपिंडनान्तं कृत्वा मातुः सपिंडनं कुर्यात् ॥ अथ नूतनं मरणं चेच्छ्रूयते तदा पितुराशौचस्य प्रबलत्वात् तदानीं पितुः पुनर्दाहादि कुर्यात् ॥ पिंडोदकदानं तु पितृपूर्वं अत्र वचनं लौगाक्षिराह—

पितर्युपरते पुत्रो मातुः श्राद्धान्निवर्तते ।

विशेषस्तु संघातमरणे और्ध्वदैहिकनिर्णये वक्ष्यते ॥ इति

निर्णयः ॥ [५६३] अथ कालान्तरमृतायां पत्न्यां दहने विशेषः ॥ कारिकायां—पत्नी चेद्विधवा भूत्वा प्रम्रियेत कदाचन ।
तदाश्रौताग्निशून्यत्वान्निर्मन्थेनैव दह्यति ॥
निर्मन्थः किंचिद्रक्षितेनारणिकाष्ठेनेति शेषः ॥ पुरुषस्य तु संन्यासादिगत्या दहनाभावः संभाव्यते ॥

इति पत्नीदहनविधिः ॥

---

## अथ गर्भादारभ्य जननपर्यन्तं सूतकं विचार्यते॥

तदाशौचं द्विविधं ॥ मृतकं सूतकं च ॥ सूतिनिमित्तं सूतकं मृतिनिमित्तं मृतकं शावमपि ॥ आशौचेन तु उभयमुच्यते ॥ सूतकाधिकारिणः सपिंडाः समानोदकाश्च ॥ यतः प्रभृति सन्तानविश्लेषः स कूटस्थस्तमारभ्य गणिताः सप्त पुरुषाः सपिंडाः । ऊर्ध्वं समानोदकाः ॥ तदाह बृहन्मनुः—सपिंडत्वं तु पुरुषे सप्तमे विनिवर्तते । सप्तमेऽतिक्रान्ते इत्यर्थः ॥

समानोदकभावस्तु निवर्तेताचतुर्दशात् ।
जन्मनाम्नोः स्मृतेरेके तत्परं गोत्रमुच्यते ॥

मनु—दशाहं शावमाशौचं सपिंडेषु विधीयते ।
जननेऽप्येवमेव स्यान्निपुण शुद्धिमिच्छतेति ॥

शावं शवनिमित्तं ॥ यत्र सपिंडानां दशाहं तत्र समानोदकानां त्र्यहं ॥ जननेऽप्येवमेव ॥ [५६४] मिताक्षरायां ॥ गर्भस्रावे यावन्तो गर्भग्रहणमासास्तावत्संख्यानिशाः शुद्धेः कार-

णं ॥ एतच्च स्त्रिया एव ॥ गर्भस्रावे मासतुल्या रात्रयः स्त्रीणां स्नानमात्रमेव ॥ पुरुषस्य तु वसिष्ठस्मरणात्—

आचतुर्थाद्भवेत्स्रावः पातः पञ्चमषष्ठयोः ।

अत ऊर्ध्वं प्रसूतिः स्याद्दशाहं सूतकं भवेत् ॥

इति स्मृत्यर्थसारात् ॥ मरीचिः—

स्रावे मातुस्त्रिरात्रं स्यात्सापिंडाशौचवर्जितम् ।

पाते मातुर्यथामासं पित्रादीनां दिनत्रयम् ॥

इति पित्रादिसपिंडानां त्रिरात्रं ॥ गर्भनाशप्रयुक्ताशौचं सर्ववर्णसमं ॥ वसिष्ठः ॥ ऊनद्विवार्षिके प्रेते गर्भपतने वा सपिंडानां त्रिरात्राशौचमिति॥ यत्तुगर्भपाते सद्यः शौचविधानं—

सद्यः शौचं सपिंडानां गर्भस्य पतने सति ।

इति वचनं—तच्चतुर्मासाभ्यन्तरे द्रवरूपगर्भपतने वेदितव्यमिति विज्ञानेश्वरेण व्याख्यातं ॥ पितुः प्रथममासात्स्नानं भवति ॥ अतः षण्मासादूर्ध्वं सूतकविधिर्दशरात्रमेव ॥ ५६५ मिताक्षरायां ॥ सप्तममासप्रभृति जातमृते मृतजाते वा सपिंडानां जननिमित्तं परिपूर्णां शौचं जातमृते मृतजाते वा सपिंडानां दशाहमिति हारीतस्मरणात् ॥ मृतजाते तु पारस्कारः—गर्भे यदि विपत्तिः स्याद्दशाहं सूतकं भवेत् ।

सपिंडानां प्रसवनिमित्तस्य विद्यमानत्वात् प्रसवनिमित्तं दशाहं सपिंडानां ॥ समानोदकानां त्रिरात्रं ॥ जननिमित्तमस्पृश्यत्वं मातुरेव न पितुः ॥ तस्य स्नानं तदनन्तरमस्पृश्यत्वं नास्ति ॥ जाते पुत्रे पितुः स्नानं सचैलं तु विधीयते ।

माता शुध्येद्दशाहेन स्नात्वा तु स्पर्शनं पितुः ॥

इति मनुस्मरणात् ॥ स्नानमपि शीतजलेनेति ॥ यद्वि-
ष्णुवचनं जातमृते मृतजाते वा कुलस्य सद्यः शौचमि-
ति तच्छिशुमरणनिमित्तस्नानाच्छुद्धिपरं ॥ प्रसवनिमित्ता-
शौचं भवत्येव ॥ यच्च—

जीवन्जातो यदि प्रेयात्सद्य एव विशुध्यतीति ॥

तत्प्रेताशौचाभिप्रायं ॥ यज्जैमिनिवचनं—

यावन्नोच्छिद्यते नालं तावन्नाप्नोति सूतकम् ।
छिन्ने नाले ततः पश्चात्सूतकं तु विधीयते ॥ इति ॥

५६६ अस्यायमर्थः ॥ नालच्छेदादूर्ध्वं शिशुमरणे सूतकं द-
शाहं नालछेदात्पूर्वं शिशुमरणे त्रिरात्रं तदुक्तं स्मृत्यर्थसारे ॥
नालछेदात्पूर्वं शिशुमरणे तु जनननिमित्तमाशौचं सर्वेषां पि-
त्रादिसपिंडानां त्रिरात्रं॥मरणनिमित्ते सद्यः शुद्धिः॥बृहन्मनुः—

जीवन्जातो यदि मृतस्ततः सूतकमेव तु ।
सूतकं सकलं मातुः पित्रादीनां त्रिरात्रकमिति ॥

यच्च बृहत्प्रचेतोवचनं—

मुहूर्तं जीवितो बालः पञ्चत्वं यदि गच्छति ।
मातुः शुद्धिर्दशाहेन सद्यः शौचास्तु गोत्रिणः ॥

मुहूर्तमिति कालाध्वनोरिति द्वितीया ॥ मुहूर्तमध्ये मृते
त्रिरात्रं ॥ ऊर्ध्वं तु दशरात्रं प्राकृतं ॥ एतदनुरोधेन नालच्छेद-
नकालोऽपि मुहूर्तमध्य एव ॥ नालस्य गर्भक्लेदनपक्षोपनिपातात् ॥
मुहूर्तादूर्ध्वंछिन्नेऽछिन्नेऽपि दशरात्रं ॥ गोत्रिणां सद्यः शुद्धिरग्नि-
होत्रहोमार्थं ॥ तत्रेयं व्यवस्था मिताक्षरायां कृता ॥ जनना-
नन्तरं नाभिवर्धनात्प्राङ् मृते पित्रादीनां जनननिमित्तमाशौचं

दिनत्रयं ॥ सद्यः शौचं तु अग्निहोत्रार्थं ॥ अग्निहोत्रार्थं स्नानोपस्पर्शनात्तत्कालं शौचमिति शङ्खस्मरणात् ॥ [५६७] ततोऽन्तर्दशाहमरणे पारस्करः ॥ अतः सूतकं चेदुत्थानादाशौचं सूतकवदिति ॥ उत्थानात्सूतिकाया दशरात्रमितियावत् ॥ सूतकवदिति मरणनिमित्तोदकदानरहितं ॥ बृहन्मनुः—

दशाहाभ्यन्तरे बाले प्रमीते तस्य बान्धवैः ।
शावाशौचं न कर्तव्यं सूत्याशौचं विधीयते ॥

अन्तर्दशाहोपरतस्य सूतकाहोभिरेवाशौचमिति स्मृत्यन्तरात् ॥ अन्तर्दशाहे यदि शिशूपरमः स्यात्तदा न प्रेताशौचं यदि तत्र सपिंडजननं तदा सूतकमपि न कार्यं ॥ किंतु पूर्वाशौचेनैव शुद्धिरिति ॥ यत्तूक्तं माता शुध्येद्दशाहेनेति तत्संव्यवहारयोग्यतामात्रं ॥ अदृष्टार्थे कर्मणि पैंग्यः सूतिकां पुत्रवतीं विंशतिरात्रेण मासेन स्त्रीजननीमिति ॥ एतद्विंशतिरात्र्याद्यभिधानं सूतिदशाहातिरिक्तं ॥ यतः पैठीनसिः । अस्पर्शानि दशदिनानि स्पर्शानि विंशतिदिनानि ॥ [५६८] अत एव दशकं ॥ मासं पुत्रप्रसवे तु मातुरपरत्रैतद्दशाहाधिकमिति ॥ लोकेऽपि मासिकं स्नानं सूतिकाया इति प्रसिद्धं ॥ तथा अपरत्र कन्याजन्मनि एतन्मासलक्षणं दशाहाधिकं चत्वारिंशद्दिनानीति ॥ व्यासः

प्रथमे दिवसे षष्ठे दशमे चैव सर्वदा ।
त्रिष्वेतेषु न कुर्वीत सूतकं पुत्रजन्मनि ॥ इति ॥

यस्मिन्दिने कुमारजन्म तदहर्न दुष्येत ॥ तत्र तन्निमित्तहेमश्राद्धादि कुर्यादिति ॥

इति जन्मदशाहसूतकनिर्णयः ॥

## ॥ अथोपनयन पर्यन्तसूतकादिनिर्णयः ॥

अथ बालस्य जातमात्रादारभ्य उपनयनपर्यन्तं मृते संस्कारविधिः सूतकं च निर्णीयते ॥ नाम्नः प्राक् तदपैति सूतकवशात् ॥ एकादशेऽहनि नामेति योगीश्वरः ॥ ततः प्राक् दशाहमध्ये जन्मसूतकवशान्मरणानिमित्तं शावं गच्छति ॥ तदाह बृहन्मनुः—

दशाहाभ्यन्तरे बाले प्रमीते तस्य बान्धवैः ।
शावाशौचं न कर्तव्यं सूत्याशौचं विधीयते ॥

प्राङ्नामकरणान्मृते सद्यः शौचमेव ॥ ५५९ तदाह शङ्खः ॥ प्राङ्नामकरणात्सद्यः शौचमिति ॥ सद्यइति मातापितृव्यातिरिक्तविषयं ॥ तयोस्तु दशाहं ॥ यदाह पैंग्यः—

ऊनद्विवर्ष उभयोः सूतकं मातुरेव हि ।

अस्पृश्यत्वं मातुरेव दशाहमध्ये ॥ ततो दशरात्रमुभयोरित्यर्थः ॥ पारस्करः ऊनद्विवर्षे प्रेते मातापित्रोराशौचं ॥ शौचमेवेतरेषामेकरात्रं त्रिरात्रं चेति ॥ अतः सूतके चेन्मृतिरुत्थानादाशौचं सूतकवदिति ॥ अत्र उत्थानादिति दशरात्रं सूतकवदिति उदकदानरहितमिति मिताक्षरायां व्याख्यातं ॥ संग्रहविषये तु—अदन्तजातमरणे पित्रोरेकाहमिष्यते ।

दन्तजाते त्रिरात्रं स्याद्यदि स्यातां तु निर्गुणौ ॥

इति वचनात् त्रिरात्रं ॥ तदाह काश्यपः ॥ बालानामदन्तजातानां त्रिरात्रेण शुद्धिरिति ॥

तथा—निरस्य तु पुमान् शुक्रमुपस्पृश्य विशुध्यति ।
बैजिकादभिसंबन्धादनुरुध्यादघं त्र्यहमिति ।

बैजिकादपि संबन्धादित्युक्तं तेन बीजसंबन्धे ॥ अत एव निर्गुणयोर्मातापित्रोरुपनयनपर्यन्तं त्रिरात्रमेव ॥ [५७०] तथा चानौरसपुत्रविषये प्रजापतिनापि पितुस्त्रिरात्रमुक्तं ॥

अन्याश्रितेषु दारेषु परपत्नीसुतेषु च ।
गोत्रिणः स्नानशुद्धाः स्युस्त्रिरात्रेणैव तत्पिता इति ॥

चण्डुनिबन्धे तु—

अनौरसेषु पुत्रेषु जातेषु च मृतेषु चेति ।

त्रिरात्रमिति विलिख्य बैजिकादभिसंबन्धादिति वाक्यं लिखितं ॥ स्वैरिण्यादिपुत्रविषये त्रिरात्रं स्थापितं च ॥ तस्मात्परिणीतस्त्रीपुत्रे संस्थिते पैंग्योक्तं दशरात्रं पित्रोः सोदराणां च स्यादेवेति सिद्धं ॥ मिताक्षरायामपि त्रिरात्राशौचपक्ष उपाधिसंबन्धितया योजितः न मुख्यधर्मपत्नीजापत्यसंबन्धितयेति ॥ तत्रोक्तं निपुणतया विलोकनीयं ॥ सपिंडानां तु नामकरणादनन्तरं दन्तजननात् प्राक् अकृतेऽग्निसंस्कारे सद्यः शुद्धिः ॥ कृतेऽग्निसंस्कारे एकरात्रं ।

[५७१] तदुक्तं स्मृत्यन्तरे—

अदन्तजाते तनये शिशौ गर्भच्युते तथा ।
सपिंडानां तु सर्वेषामेकरात्रमशौचकमिति ॥

अदन्तजात इत्यल्पार्थे नञ् अल्पदन्तजात इत्यर्थः ॥

याज्ञवल्क्योऽपि—

आदन्तजन्मनः सद्य आचौलान्नैशिकी स्मृता ।
त्रिरात्रमाव्रतादेशाद्दशरात्रमतः परमिति ॥

कृतेऽग्निसंस्कारे ऊनद्विवर्षादूर्ध्वं त्रिरात्रं ॥

यद्यप्यकृतचूडो वै जातदन्तस्तु संस्थितः ।

दाहयित्वा ततश्चैनमाशौचं त्र्यहमाचरेदिति वचनात् ॥

यत्तु—विप्रे न्यूनत्रिवर्षे तु मृते शुद्धिस्तु नैशिकी ।

इति तेनैवाभिहितं ॥ न हि न्यूनात्रिवर्षस्य दन्तानुत्पत्तिसंभवमिति तस्माद्दाहादाहाभ्यां व्यवस्था ॥ दाहे त्र्यहमिति पूर्ववाक्येन स्पष्टमेवोक्तं ॥ तथा स्मृत्यर्थसारे ॥ दन्तजननादूर्ध्वं त्रिवर्षपर्यन्तं अकृतचौलस्य मरणे खननं वा कार्यं॥ खनने एकाहमाशौचं दहने त्रिरात्रं ॥ त्रैवार्षिकचूडाकालादूर्ध्वं असंस्कारेऽपि त्रिरात्रं चूडाशब्देन सर्वत्र तृतीयवार्षिककालावधेर्लक्षणात् ॥ [५७२] यत्तु ऊनद्विवर्षस्य संस्काराभावेऽपि त्रिरात्रमुक्तं ॥

अरण्ये काष्ठवत्त्यक्त्वा क्षिपेत्तु त्र्यहमेव तु इति ॥

तद्येषां कुले प्रथमवर्षे एवातीते चूडानियमः तेषां दैवाच्चूडाकालातिक्रमे बोद्धव्यं ॥ चूडाकालः प्रथमे वर्षे अतीते तृतीये पञ्चमे वा वर्षे स्मृतिषु उक्तः ॥ नामकरणादूर्ध्वमग्निदाहादिकमपि विकल्पेन कुर्यात् ॥ तदाह मनुः—

ना त्रिवर्षस्य कर्तव्या बान्धवैरुदकक्रिया ।

दन्तजातस्य वा कुर्यान्नाम्नि वापि कृते सतीति ॥

अत्रोदकदानस्याग्निदानपूर्वकत्वादग्निदानस्याप्युपलक्षणं ॥

तूष्णीमेवोदकं कुर्यात्तूष्णीं संस्कारमेवचेति ॥

लौगाक्षिरिति ॥ ऊनद्विवार्षिकस्य निखननमेवोक्तं मनुना—

ऊनद्विवार्षिकं प्रेतं घृताक्तं निखनेद्भुवि ।

यमगाथां गायमानो यमसूक्तमनुस्मरन् ॥

[५७३] तथा—ऊनद्विवर्षं निखनेन्न कुर्यादुदकं ततः ।

ऊने अपरिपूर्णे द्वे वर्षे यस्य स ऊनद्विवर्षः ॥ तं प्रेतं निखनेत् ॥ भूमाववटं कृत्वा निदध्यान्न पुनर्दहेदित्यर्थः ॥ तथा प्रथमवर्षे त्वकृतचूडस्याग्निसंस्कारे सत्यहोरात्रं ॥ विष्णुः ॥ दन्तजातेऽप्यकृतचूडेऽप्यहोरात्रेण शुद्धिरिति ॥ अकृतचूडस्योनद्विवर्षस्य दाहो न श्रेयान् ॥ ऊर्ध्वं श्रेयान् ॥

अनतीतद्विवर्षस्तु प्रेतो यत्रापि दह्यते ।
अतिमोहाभिभूतैश्च देशसाधर्म्यमार्दवात् ॥

इति वचनात् कृतचूडस्य संस्कारस्त्रिरात्रं च सर्वदा नियतं ॥ अत एव प्रथमवर्षे कृतचूडस्य चूडाकरणानन्तरं अग्निसंस्कारस्यावश्यकत्वात्त्रिरात्रमेव ॥ ऊनद्विवर्षे प्रेते गर्भपतने वा सपिंडानां त्रिरात्रमेवेति वासिष्ठस्मरणात् ॥ वर्षत्रयादूर्ध्वं अकृतचूडस्यापि संस्कारनियमत्वात् त्रिरात्रमाशौचं ॥ उपनयनादूर्ध्वं सर्वेषां ब्राह्मणादीनां दशरात्रादिकमिति ॥ [५७४] तथा मरीचिः—

आमौञ्जीबन्धनाद्विप्रः क्षत्रियश्चाधनुर्धरात् ।
आप्रतोदग्रहाद्वैश्यः शूद्रो वस्त्रद्वयग्रहादिति ॥

मौञ्जीबन्धनधनुर्धरणाद्यनन्तरं ब्राह्मणादिवर्णः आशौचमौर्ध्वदैहिकं च पूर्णं कुर्यादिति वयोवस्थाकृताशौचं ॥ अथ स्त्रीषु वयोवस्थाशौचमुच्यते ॥ अकृतचूडायां कन्यायां सद्यः शौचं विधीयते इत्यापस्तम्बः ॥ कन्यास्वाप्लुतिराक्षौरादित्ति दशकं ॥ चूडाकर्मात्र कुलाचारतो गृह्यते ॥ चूडाकर्मकालोर्ध्वं वाग्दानादर्वागहोरात्रं ॥

अहस्त्वदत्तकान्यासु बालेषु च विशोधनमिति ।

याज्ञवल्क्यवचनात् ॥ कृतचूडायास्तु वाग्दानात्प्राक् अहोरात्रं शुद्धिकारणं सपिंडानां ॥ मातापित्रोस्तु पैंग्योक्तं दशरात्रं ॥ पैंग्यवाक्यस्यापत्यमात्रे प्रवृत्तत्वात् ॥ अप्रत्तानां कन्यानां सापिंडयं त्रिपुरुषपर्यन्तमेव ॥ अप्रत्तानां तु कन्यानां त्रिपुरुषी विज्ञायते इति वासिष्ठस्मरणात् ॥ [५७५] पूरयतीति पूरुषः ॥ पूरणं तु अपत्यमात्रेण भवति ॥ अत्र समाहारे द्विगुसमासे सति ङीप् ॥ त्रिपुरुषी ॥ एवं सति पूरणत्वापरित्यागेन स्त्रीशब्दविषयिणी स्फूर्तिर्भवति ॥ अतः कन्याप्रसूतौ कन्यापितामहसन्ततेः सपिंडता ॥ अत ऊर्ध्वं समानोदकता इति वसिष्ठवचनार्थः ॥ स्मरणमपीष्यते ॥

आत्मपुत्रपितृभ्रातृपितृव्या स्त्री प्रसूयते ।
दशाहं सूतकं तेषामिति कात्यायनोऽब्रवीत् ॥

वाचादत्तायामविवाहितायां पतिपितृपक्षयोः उभयोः त्रिरात्रं ॥ यदाह मरीचिः—

वाचा दत्ता तु या कन्या न चैव प्रतिपादिता ।
असंस्कृता तु सा ज्ञेया त्रिरात्रमुभयोः स्मृतमिति ॥

अत एव दशकं ॥ दाने त्र्यहं चोभयोरिति ॥ वाग्दाने सत्यपि पुत्र्यामविवाहितायामित्यर्थः ॥ दशवर्षादूर्ध्वं रजस्वलेत्युच्यते ॥ [५७६] तदवस्थायामविवाहितायां मृतायां पितृकुलस्य स्वजातिविहितं परिपूर्णं सूतकं ॥ यथा ॥

अष्टवर्षा भवेद्गौरी नववर्षा तु नग्निका ।
दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला ।

जात्युक्तं ऋतुसंभवे पितृकुलस्येति दशकं ॥ विवाहादूर्ध्वं विष्णुना विशेषो दर्शितः ॥ संस्कृतासु स्त्रीषु नाशौचं पितृपक्षे ॥ तत्प्रसवमरणे चेत्पितृगृहे स्यातां तदैकरात्रं त्रिरात्रं चेति प्रसवे एकाहः मरणे त्रिरात्रं ॥ स्मृत्यर्थसारे ॥ मातापितृगृहे व्यूढायाः पुत्र्याः प्रसवे मातापित्रादिकानामेकाहाशौचं ॥ तत्र तस्या मरणे तेषां त्रिरात्रं गृहान्तरमरणे तेषां त्रिरात्रं मातापित्रोरेव ग्रामान्तरमरणे पक्षिणी ॥ तथा मातापितृमरणे व्यूढपुत्र्यास्त्रिरात्रं ॥ उक्तं च ॥

पित्रोरुपरमे स्त्रीणामूढानां तु कथं भवेत् ।
त्रिरात्रेणैव शुद्धिः स्यादित्याह भगवान्यमः ॥

बौधायनः ॥ ऊढस्त्रीणां पित्रोरुपरमे त्रिरात्रं ॥ ५७७ विश्वादर्शे तु ॥ परिणीतस्त्रीणां पितृमातृमरणे त्रिरात्रमाशौचमिति ॥ इदं च वयोऽवस्थाशौचं सर्ववर्णसाधारणं ॥ यथा पिंडयज्ञावृतादेयमिति ॥ इति सपिंडोदकदानविधिः ॥ समानोदकाशौचं इत्यादि वर्णविशेषानुक्तत्वात्साधारणं ॥ तथा—अविशेषेण वर्णानामर्वाक् संस्कारकर्मणः ।

त्रिरात्रात्तु भवेच्छुद्धिः कन्यास्वन्हा विधीयते ॥

इत्यङ्गिरसोवचनस्यायमर्थः ॥ संस्कारकर्म उपनयनं ॥ ततोऽर्वागविशेषेण आदन्तजननात्सद्य इत्यादिविशेषव्यतिरेकेण त्र्यहाच्छुद्धिः ॥ कन्यासु विवाहादर्वाक् अन्हा दिवसेन शुद्धिः ॥ यत उक्तं—

वैवाहिको विधिः स्त्रीणामौपनायनिकः स्मृतः । इति ॥
अत्रापि चूडाकरणादर्वाक् सद्यः ॥ वाग्दाने त्र्यहं ॥

इत्यादिविशेषव्यतिरेकेण एषा शुद्धिः सपिंडानां ॥ पितृभ्रातृविषयं पैंग्योक्तं दशरात्रमिति निर्णयः ॥ ५७८ अथ समानोदकानामाशौचकालविधिर्निरूप्यते ॥ मूलावधितः सप्तपुरुषपर्यन्तः सपिंडाः ॥ ऊर्ध्वं समानोदका इति प्रागुक्तं ॥

सपिंडता तु पुरुषे सप्तमे विनिवर्तते । इति ॥

सप्तमे अतिक्रान्ते ॥ गौतमः ॥ पिंडनिवृत्तिः सप्तमे पञ्चमे चेति ॥ सप्तमे पितृकुले पिंडनिवृत्तिः ॥ पञ्चमे मातृकुले इति वक्तव्यं ॥

त्रिरात्रं दशरात्रं वा शावमाशौचमिष्यते । इति ॥

यथाशौचं तथा जननाशौचमपि त्रिरात्रं दशरात्रं चेति मन्वादिभिरुक्तं ॥ तत्सपिंडसमानोदकरूपभेददर्शनार्थं ॥ तथा—हि जन्मन्येकोदकानां च त्रिरात्राच्छुद्धिरिष्यते ।

शावस्पृशो विशुध्यन्ति त्र्यहात्तूदकदायिनः ॥

इत्यादिना वचनेन त्रिरात्रदशरात्रयोः समानोदकसपिंडविषयत्वेन व्यवस्था कृता ॥ जनने मरणे वाशौचे सपिंडानां दशाहं ॥ समानोदकानां त्र्यहमिति ॥

५७९ तथा—दशाहं शावमाशौचं सपिंडेषु विधीयते ।

अर्वाक् सञ्चयनादस्थ्नां त्र्यहमेकाहमेव चेति ॥

दशाहसंबन्धिनां न्यूनन्यूनतरभेदचतुष्टयदर्शनात्समानोदकानामपि न्यूनन्यूनतराशौचभेदा वक्तव्याः ॥ तथाहि ॥ यस्य सपिंडविषये दशाहेन शुद्धिः तस्य समानोदकविषये त्र्यहेण शुद्धिः ॥ आत्र्यहात्तूदकदायिन इति वचनात् ॥ चतुरहसंबन्धेन पक्षिण्या शुद्धिः ॥ पक्षिणी असपिंडे योनिसंबन्धे

इति गौतमवचनात् ॥ एकाहसंबन्धेन सद्यः शौचं ॥
यथा—बाले देशान्तरस्थे च पृथक्पिंडे च संस्थिते ।

सवासा जलमाप्लुत्य सद्य एव विशुध्यतीति ॥

मनुवचनात् ॥ त्र्यहः संबन्धेन एकाहेन शुद्धिरित्येतद्वाक्यमस्ति ॥ दशाहसंबन्धिनां भेदचतुष्टयदर्शनादेतद्भेदवाक्यमत्र द्रष्टव्यं ॥ ५८० अत एव मिताक्षरायां ॥ समानोदकविषयाश्च संकुचिताशौचकल्पाः पक्षिण्येकाह सद्यःशौचरूपाः स्मृत्यन्तरे दृष्टा इति ॥ इयं च व्यवस्था समानोदकोपरमे द्रष्टव्या ॥ दशके तु विशेष उक्तो विज्ञानेश्वरेण—

उत्पन्ने त्रिदिनं मृतेऽप्युपनयादूर्ध्वं समानोदके ।

इति समानोदके उत्पन्ने जाते त्रिदिनं ॥ उपनयनादूर्ध्वं मृते त्रिदिनमिति वदतैतत्सूचितं ॥ यथा ॥ सपिंडानामादन्तजननात्सद्य इति ॥ अनेन दन्तजननात्प्राक् सद्यःशुद्धिः ॥ तथा समानोदकानां मौञ्जीव्रतात्पूर्वं सद्य इति ॥

जातमात्रः शिशुस्तावद्यावदष्टौ समा धृतः ।
स तु गर्भसमो ज्ञेयो व्यक्तिमात्रप्रदर्शकः ॥

इति वचनाच्च मौञ्जीबंधनात्पूर्वं मृते ॥

यद्यप्यकृतचूडो वै जातदन्तस्तु संस्थितः ।
दाहयित्वा ततश्चैनमाशौचं त्र्यहमाचरेदिति ॥

सपिंडविषये त्र्यहसंबन्धे सति समानोदकविषये आशौचाभावप्रतिपादनात् अतिक्रान्ताशौचं कुतः समानोदकानामिति ॥ एवं च ॥ अनशनादिना मृतिविषये सपिंडैस्त्र्यहाशौचे क्रियमाणे सति समानोदकेनैकाहः कार्यः ॥ ५८१ यथा ॥

सपिंडविषये त्र्यहसंबन्धेन त्र्यहादूर्ध्वमेकाहेन शुद्धिरित्युक्तं स्मृतिकरण्डिकायां ॥ तथा स्मृत्यन्तरे—

यत्र शुद्धिः सपिंडानां त्रिरात्रान्मृतिजन्मनोः ।
समानोदकभावानामहोरात्रेण सा भवेत् ॥

तद्वदिति ॥ जन्मनि सपिंडानां अतिक्रान्ताशौचं नास्ति ॥

नाशुद्धिः प्रसवाशौचे व्यतीतेषु दिनेष्वपीति ॥

देवलवचनात् ॥ निर्दशेऽपि पुत्रजनने श्रुते पितुः स्नानमस्त्येव ॥ श्रुत्वा पुत्रस्य जन्मचेति वचनात् ॥ तथा अनुपनीतोपरमे एव अतिकालजं अतिक्रान्ताशौचं न भवतीति व्याघ्रः ॥ जननाशौचमनुपनीतमृताशौचं वा अतिक्रान्ताशौचं नास्तीत्युक्तं मिताक्षरायाम् ॥

इति समानोदकविषयाशौचनिर्णयः ॥

---

## ॥ अथानुपनीत प्रेतविधिः ॥

५८२ अथानुपनीते मृते कृत्यमुच्यते प्रेतकल्पात्—

गर्भे नष्टे क्रिया नास्ति दुग्धं देयं शिशौ मृते
पुटं च पायसं क्षीरं दद्याद्बालविपत्तितः ॥
यच्चोपजीवितं बालैस्तद्विप्राय प्रदीयते ।
किञ्चित्समानवयसे सकृद्दानं यथाविधि ॥
भक्ष्यं भोज्यं च दातव्यं तथा च सुखभाक्षिका ।
तद्वस्त्राणि च देयानि सोपानत्कानि तत्समे ॥ इति ॥
शिशुरादन्तजननाद्बालःस्याद्यावदाशिखः ।
कथ्यते सर्वशास्त्रेषु कुमारो मौञ्जीबन्धनात् ॥

ततः पूर्वमिति ॥ तथा च विशेषः स्मृतिसारे—

चूडाकर्मणि संजाते विपत्तिस्तु यदा भवेत् ।
तत्र दाहः प्रकर्तव्य उदकं तत्र निश्चयः ॥
सूतकान्ते प्रकर्तव्यं वृषस्योत्सर्जनं बुधैः ।
श्राद्धषोडशकं दत्वा सपिंडीकरणं विना । इति ॥

प्रथमे वर्षे एव कृतचूडस्य दाहः ॥ तद्विषय आशौचनिर्णयश्च निरूपितः प्राक् ॥ ५८३ वालसंस्कारनिर्णये वृषोत्सर्गादिकं तु पञ्चवर्षात्पूर्वं न भवेत् ॥ यतः उक्तं गरुडपुराणे—

मृतश्चेत्पञ्चमे वर्षे अव्रतः सव्रतोऽपि वा ।
पूर्वोक्तमेव कर्तव्यमीहते दशपिंडजम् ॥
जन्मतः पञ्चवर्षाणि भुङ्क्ते दत्तमसंस्कृतम् ।
पञ्चवर्षाधिके बाले विपत्तिर्यदि जायते ॥
वृषोत्सर्गादिकं कर्म कर्तव्यमुदकं ततः ।
अहन्यहनि संप्राप्ते कुर्याच्छ्राद्धानि षोडश ॥
उदकुंभप्रदानं च उपदानानि यानि च ।
पददानानि यत्किंचित्पञ्चवर्षाधिके सदा ॥

आचारतिलके—पञ्चमे वर्षे संस्कारं कुर्यादुदकतर्पणम् ।
तथा पिंडः प्रदातव्यः सपिंडीकरणं विना ॥

गरुडपुराणे—स्वल्पकर्मप्रसङ्गाच्च स्वल्पाद्विषयबन्धनात् ।
स्वल्पे वपुषि वासाच्च क्रियां स्वल्पामपीच्छतीति ॥

## इति अनुपनीते मृते कृत्यनिर्णयः ॥

---

कृतेऽचलाद्विवेदेन ग्रन्थे निर्णयदीपके ।
विशेषनिर्णयोपेतः स्वगोत्राशौचनिर्णयः ॥

## ॥ अथ सपिंडीकरणम् ॥

[५८४] अथ सपिंडीकरणस्य कालविधिः प्रदर्श्यते ॥ तदकरणे पुत्राणामशुचित्वमुक्तं देवलेन—

पितरौ हि मृतौ यस्य देहस्तस्याशुचिर्भवेत् ।
न दैवं नापि पैत्र्यं च यावत्पूर्णो न वत्सरः ॥
स्नानं चैव महादानं स्वाध्यायश्चाग्नितर्पणम् ।
प्रथमाब्दे न कर्तव्यं महागुरुनिपातने ॥

इति अकृते सपिंडनश्राद्धे अयं निषेधः प्रेतकल्पात् ॥

मृते पितर्यब्दमध्ये लुप्यते मातृकी क्रिया ।
अथ मातुर्विपत्तिः स्यात्पितृकार्यं न लुप्यते ॥

अब्दमध्ये सपिंडीकरणात्प्रागित्यर्थः ॥ तथा—

तीर्थश्राद्धं गयाश्राद्धं श्राद्धमन्यच्च पैतृकम् ।
अब्दमध्ये न कुर्वीत महागुरुविपत्तिषु ॥

तथा—भिक्षुर्भिक्षां न गृण्हाति यावत्कुर्यात्सपिंडनम् ।
स्वगोत्रेऽप्यशुचिस्तावद्यावत्पिंडं न मेलयेत् ॥

इत्यादिवाक्यैः सपिंडनश्राद्धाभावे पुत्राणामशुचित्वं प्रतिपादितं ॥ अतः अशुचित्वनिवर्तनात्मकस्य सपिंडनश्राद्धस्य काला अभिधीयन्ते ॥ कात्यायनः ॥ [५८५] अथ सपिंडीकरणं संवत्सरे पूर्णे त्रिपक्षे वा यदहर्वा वृद्धिरापद्यते द्वादशाहे चेति आश्वलायनः ॥ अथ सपिंडीकरणं संवत्सरान्ते द्वादशाहे चेति बौद्धायनः ॥ अथ सपिंडीकरणं संवत्सरे पूर्णे त्रिपक्षे तृतीये मासि षष्ठे चैकादशेऽन्हि चेति ॥ अथ सपिंडीकरणं त्रिमासे द्विमासे एकमासेऽर्धमासे चेति खादिरगृह्यात् शा-

ह्वायनः ॥ अथ सपिंडीकरणं संवत्सरे पूर्णे त्रिपक्षे वा यदहर्वा वृद्धिरापद्येत ॥ त्रिभिरूनपक्षस्त्रिपक्षो द्वादशाहस्तत्रापीति ॥ तथा तृतीयो भागस्त्रिभागः संख्यातः पूरणप्रत्ययस्य लुक् ॥ त्रिभागवृद्धितो मत्स्यैरित्यादौ दृष्टः ॥ ततस्त्रिभागोऽयं पक्ष इ-व त्रिपक्षः ॥ पक्षोऽर्धमासः ॥ उपमितंव्याघ्रादिभिः समासः ॥ पार्थिवचन्द्रवदिति ॥ शाकपार्थिवादित्वेनोत्तरपदलोपः ॥ एत-त्पश्चमेऽन्हि सपिंडनं वैधानशनादिना मृताभिप्रायं तद्विषये चतुर्थेऽहन्याद्यश्राद्धं विहितमस्ति ॥ अथवा पक्षस्य तृतीयो भागस्त्रिपक्षः ॥एकदेशीसमासः॥ उक्तं च ॥ संख्याविसायेति ज्ञापकादन्यत्रापि सर्वेण एकदेशिना समासो भवति ॥ यथा मध्यरात्रः ॥ स्मृत्यन्तरं ॥

द्वादशेऽहनि षष्ठे वा त्रिपक्षे वा त्रिमासि वा ।
एकादशेऽपि वा मासि मङ्गलं स्यादुपस्थितमिति ॥

षष्ठि चेति षष्ठे मासीत्यन्वयः ॥ मङ्गलमुपस्थितमिति य-दैवाविवाहादिवृद्धिश्राद्धं ततः प्राक् सपिंडनं कुर्यात् ॥ ५८५ त-था कालादर्शात् ॥

एकादशे द्वादशेऽन्हि त्रिपक्षे वा त्रिमासि वा ।
षष्ठे वैकादशेऽब्दे वा संपूर्णे वा शुभागमे ॥

षष्ठे एकादशे मासि इत्यन्वयः ॥ शुभागमे वृद्धिप्राप्तौ ॥ एते कालाः ॥ तत्र व्यवस्था एकादशाहे दर्शप्राप्तौ सत्यां साग्निकेन पितुः सपिंडीकरणं कार्यं ॥ सपिंडीकरणं विना पिंड-पितृयज्ञासिद्धेः ॥ अतः सपिंडनं कृत्वैव पिंडपितृयज्ञः कार्यः॥ वृद्धवासिष्ठः—प्रथमा चेदमावास्या मृताहाद्दशमेऽहनि ।

सपिंडीकरणं तत्र कुर्यादेव सुतोऽग्निमान् ॥

मृताहादितिमर्यादापञ्चमी ॥ मृताहादूर्ध्वदिनादारभ्येत्यर्थः ॥ अमावास्यामुपस्थितायामेकादशेऽन्हि साग्निकार्यमिति हारीतेनाप्युक्तं–

या तु पूर्वममावास्या मृताहाद्दशमेऽहनि ।
सपिंडीकरणं तस्यां कुर्यादेव सुतोऽग्निमान् ॥

मृताहादूर्ध्वं द्वितीयादिपरिगणने दशमे एकादशाहो भवति तस्मिन्नित्यर्थः ॥ [५८७] गालवोऽपि–

सपिंडीकरणात्प्रेते पैतृकं पदमास्थिते ।
आहिताग्नेः सिनीवाल्यां पितृयज्ञः प्रवर्तत इति ॥

सिनीवाल्यामिति दर्शोपलक्षणं ॥ कार्ष्णाजिनिः–

सपिंडीकरणं कुर्यात्पूर्ववच्चाग्निमान्सुतः ।
परतो दशरात्राच्चेत्कुहूरब्दोपरीतर इति ॥

दशरात्रात्परत एकादशेऽन्हि कुहूश्चेदग्निमान्कुर्यात् ॥ इतरोऽनग्निरब्दोपरीति संवत्सरत्रिपक्षादौ कुर्यात् ॥ एकादशाहे दर्शपाते मातुरपि सपिंडनं कार्यं ॥ सुतशब्दस्य पितृमात्रोरुभयोः साधारणत्वात् ॥

नासपिंड्याग्निमान् पुत्रः पितृयज्ञं समाचरेत् ।
पापी भवेदकुर्वन्हि पितृघ्नश्चोपजायते ॥ इति

वचनात् ॥ मातापित्रोः सपिंडनमिति कात्यायनोक्तं ॥ एकादशेऽहनि दर्शाभावे साग्निरपि द्वादशाहे कुर्यात् ॥ [५८८] तदाह गोभिल–

साग्निकस्तु यदा कर्ता प्रेतो वाप्यग्निमान्भवेत् ।

द्वादशाहे तथा कार्यं सपिंडीकरणं पितुः ॥

भविष्यत्पुराणे—यजमानोऽग्निमान्राजन् प्रेतश्चानग्निमान्भवेत्।
द्वादशाहे तदा कार्यं सपिंडीकरणं पितुः ॥

सुमन्तुः—प्रेतश्चेदाहिताग्निः स्यात्कर्त्ता चानग्निमान्भवेत् ।
सपिंडीकरणं तस्य कुर्यात्पक्षे तृतीयके ॥

एकादशेऽहनि दर्शापाते साग्निस्तत्र सपिंडनं कुर्यात् ॥

तदाह कात्यायनः—एकादशाहं निर्वर्त्य प्राग्दशाहाद्यथाविधि।
प्रकुर्वीताग्निमान्विप्रो मातापित्रोः सपिंडनमिति ॥

दशाहादूर्ध्वं प्राक् एकादशाहं कृत्वा यथाविधि इति षोडशश्राद्धान्यपि कृत्वेति ॥

श्राद्धानिषोडशादत्वा न तु कुर्यात्सपिंडताम् ।

इति वचनात् ॥ यद्यपि एषु वचनेषु कर्त्तुः प्रेतस्य च साग्निकानग्निकविषयाणीति नियमविधिरूपा व्यवस्था विहिता तथापि देशकुलाचारतोऽनुसरणीया ॥ [५८९] साग्नेस्तु एकादशेऽन्हि सपिंडीकरणविधानं पिंडपितृयज्ञार्थं दर्शापाते वेदितव्यं ॥ अन्यथा साग्निरपि द्वादशाहे कुर्यात् गोभिलवचनेन ॥ अनग्निः कर्त्ता चेत् द्वादशाहादिकालेषु कुर्यात् ॥ सपिंडनं द्वादशेऽन्ह्येव विदध्यात् ॥ तदाह

व्याघ्रः—आनन्त्यात्कुलधर्माणां पुंसां चैवायुषः क्षयात् ।
अस्थितेश्च शरीरस्य द्वादशाहे प्रशस्यते ॥

विष्णु—निरग्निकः साग्निको वा द्वादशाहे सपिंडयेदिति ।

तत्रासंभवे त्रिपक्षादिकालः कालादर्शे—
प्रमादादकृते तस्मिन्त्रिपक्षे द्वादशेऽन्हि वा ।

उत्तरोत्तरकालेषु यथासंभवमाचरेत् ॥

चण्डुनिबन्धे ॥ द्वादशाहे पूर्णेत्यभिप्रायेण त्रयोदशाहेऽपि स्यादित्युक्तं ॥ सपिंडविषये विशेष उक्तो वृद्धमनुना—

द्वादशेऽहनि विप्राणामाशौचान्ते तु भूभुजाम् ।
वैश्यानां च त्रिपक्षादावथवा स्यात्सपिंडनमिति ॥

अथवा विप्रक्षत्रियविशामुक्तकालेषु सपिंडनं स्यात् ॥ शूद्राणां द्वादशेऽन्ह्येवेति ॥ ५५० तदाह विष्णुः—

मंत्रवर्जं हि शूद्राणां द्वादशाहे सपिंडनमिति ॥

तथा—सर्वेषामेव वर्णानामाशौचान्ते सपिंडनमिति ॥

कात्यायनः ॥ अत्राशौचान्ते सपिंडनमिति वदतैतत्सूचितं ॥ वैधानशनादिना मृतस्य पञ्चमेऽहनि सपिंडनं स्यादिति ॥ तद्विषये चतुर्थेऽहन्याद्यश्राद्धविधानात् तदुत्तरदिने पञ्चमेऽहनि सपिंडनं कुर्यादित्युक्तं प्राक् ॥ सापिंड्ये विशेषः ॥ उक्तकालेष्वकृतं चेदेषु नक्षत्रेषु कुर्यात् ॥ तदाह ऋष्यशृङ्गः—

सपिंडीकरणं येन प्रमादान्न कृतं भवेत् ।
अनुराधार्द्रहस्तेषु रोहिण्यां वा समाचरेत् ॥

गालवोऽपि—सपिंडीकरणश्राद्धमुक्तकाले न चेत्कृतम् ।
रौद्रे हस्ते च रोहिण्यां मैत्रभे वा समाचरेत् ॥

इति सपिंडने कालः ॥ ५५१ अथ निर्णयः ॥ तत्सपिंडनं केन सहेत्याशंकायां सुमन्तुराह—

पिता पितामहे योज्यः पूर्णे संवत्सरे सुतैः ।

पितामह इति पितामहप्रपितामहवृद्धप्रपितामहेष्विति ॥

अर्घार्थं पितृपात्रेषु प्रेतपात्रं प्रसिञ्चयेत् ।

तथा आद्यपिंडं त्रिषु विभजेदित्यादिलिङ्गात् ॥

तदाह ब्रह्माण्डपुराणे—

मृते पितरि यस्याथ विद्यते च पितामहः ।

तेन देयास्त्रयः पिंडाः प्रपितामहपूर्वकाः ॥

तेभ्यश्च पैतृकः पिंडो नियोक्तव्यश्च पूर्ववत् ॥

विष्णुरपि ॥ यस्य पिता प्रेतः स्यात् पितामहो जीवति सः पितृपिंडं निधाय पितामहात्पराभ्यां द्वाभ्यां दद्यात् ॥ मनुः—

पिता यस्य तु वृत्तः स्याज्जीवेद्वाथ पितामहः ।

पितुः स नाम संकीर्त्य कीर्तयेत्प्रपितामहम् ॥

पितामहप्रपितामहवृद्धप्रपितामहाः इति पित्रादिशब्दाः सबन्धिवचना इति ॥ [५९२] अतः पितामहे ध्रियमाणे मृते च पितरि पितुरेकं पिंडं निधाय पितुर्यः पितामहः ततः पराभ्यां द्वाभ्यां दद्यादिति ॥ पितामहस्तु आत्मनः प्रपितामहः संप्रदानभूतः स्थित एवेति प्रपितामहाय ततः पराभ्यां द्वाभ्यां दद्यादिति ॥ एवं शब्दप्रयोगतः सपिंडीकरणं कुर्यात् ॥ कात्यायनः—व्युत्क्रमाच्चमृते देयं येभ्य एव ददात्यसाविति ।

असौ पिता ॥ पितामहादित्रयाणां मध्ये एकेनापि सपिंडने पितृत्वमुक्तं ॥ सुमन्तुना—

त्रयाणामपि पिंडानामेकेनापि सपिंडने ।

पितृत्वमश्नुते प्रेत इति धर्मो व्यवस्थित इति ॥

यत्तु विष्णुवचनं—संवत्सरान्ते प्रेताय तत्पित्रे तत्पितामहाय तत्प्रपितामहाय दैवपूर्वकं ब्राह्मणान् भोजयेदित्यनेन प्रेतसं-

बन्धेन पित्राद्यभिधानमुक्तं सपिंडनश्राद्धे ॥ तत्कर्त्तुः प्रेतस्य पित्रादिभिः सह संबन्धाभावविषयं ॥ अन्यथा संबन्धिशब्दैः प्रयोगः कार्य इति मिताक्षरोक्तमसंगतं स्यात् ॥ [५८३] यत्तु—

व्युत्क्रमाच्च प्रमीतानां नैव कुर्यात्सपिंडनामिति ।

वचनान्निषिद्धं ॥ तन्मातापितृभर्तृव्यतिरिक्तविषयं ॥ यतः उक्तं स्कन्दपुराणे—व्युत्क्रमेण मृतानां तु सपिंडीकृतिरिष्यते ।

यदि माता यदि पिता भर्ता वा व्युत्क्रमान्मृतः ॥

मातृपितृव्यतिरिक्तस्यापि व्युत्क्रमेण मृते सपिंडनं कुर्यादेव ॥ तदाह गोभिलः—

अनुक्तकालेष्वपि तु व्युत्क्रमेण मृतावपि ।

आमेन वापि सापिंड्यं हेम्नावापि प्रकल्पयेदिति॥

अथ पितृमरणे सति पितामहप्रपितामहयोर्यः कश्चिदसंस्कृतः तस्य संस्कारं कृत्वा ताभ्यां सह सपिंडनं कुर्यात् ॥ अथ पौत्रादिना पितामहादेः सपिंडीकरणे पितामहसंबन्धिनः पितुरारभ्य त्रिपुरुषं कर्तव्यं ॥ अथ मातुः सपिंडीकरणं पितामह्यादिभिः सह कुर्यात् ॥

[५८४] तदाह शङ्खः—

मातुः सपिंडीकरणं कथं कार्यं भवेत्सुतैः ।

पितामह्यादिभिः सार्धं मातुः कुर्यात्सापिंडनम् ॥

कर्त्तुः पुत्रस्य पितामही प्रपितामहीति ॥ पितामह्यां जीवत्यां प्रपितामह्यादिभिरिति ॥ तदुक्तं ब्रह्मपुराणे—

मातर्यथ मृतायां च विद्यते च पितामही ।

प्रपितामहीपूर्वं तु कार्यं तत्राप्ययं विधिः ॥

त्रयाणामपि पिंडानामिति सर्वमन्यपितृसापिंडनोक्तं विज्ञेयं ॥

पितामह्यादिभिर्मातुः पितुः सह पितामहैः ।
सपिंडीकरणं कार्यमिति तार्क्ष्य मतं मम ॥ इति

गरुडपुराणं॥ अथ स्त्रीणां सहगमने विशेषः ॥ तत्र शातातपः—

मृता यानुगता नाथं सा तेन सहपिंडताम् ।
अर्हति स्वर्गवासेन यावदाभूतसंप्लवम् ॥

तेन पत्यासहेति ॥ तथा—

पत्न्याः कुर्यादपुत्रायाः पतिर्मात्रादिभिः सह ।
सापिंड्यमनुयाने तु जनकेन सहात्मजः ॥

मात्रादिभिः मातृपितामहीप्रपितामहीभिः कुर्यात् ॥ ५८६

अनुयाने तु यमः—पत्या चैकेन कर्तव्यं सपिंडीकरणं स्त्रियाः ।
सा मृतापि हि तेनैक्यं गता मंत्राहुतिव्रतैरिति ॥

अत्र पत्येति पितृवर्गोपलक्षणं ॥ यतः सपिंडनस्य पार्वणैकोद्दिष्टात्मकत्वात् ॥ गरुडपुराणे तु—

भर्त्रादिभिस्त्रिभिः कार्यं सपिंडीकरणं स्त्रियाः ।

इत्यभिधाय सपिंड्यं पतिपिंडेन सहेत्याशयेनाभिहितं तत्रैव ॥

पतिपत्न्योः सदैकत्वं हुताशं याधिरोहति ।
पुत्रेणैव पृथक्श्राद्धं सापिंड्यं पतिना सहेति ।

अतः श्वशुरेण सह निषिद्धं ॥ तथा ॥

पतिपत्न्योः सदैकत्वं त्रिषु स्थानेषु वै पृथक् ।
कन्यादाने तथा यज्ञे पिंडसंयोजने तथा ॥ इति ॥

पूर्वं भर्तुः सपिंडनं कृत्वा ततः

भर्तारमनु या साध्वी मृता तस्याः सपिंडनम् ।

भर्त्रा चैकेन कर्तव्यं श्राद्धं तत्पार्वणं भवेदिति ॥

शिष्टाचारोऽप्येतादृश एव ॥ ५८७ यच्च स्मृत्यर्थसारे ॥ अन्वारोहणे एकचित्यारोहणैकदिनमरणे स्त्रियाः पृथक् सपिंडीकरणं न कार्यं ॥ भर्तुः कृते स्त्रियाश्च कृतं भवति ॥ तत्पत्यां चैकेन कर्तव्यं ॥

तथा—सापिंड्यमनुयाने तु जनकेन सहात्मजः ।

तथा—भर्त्रैव हि समं तस्या अग्निं कुर्यात्सपिंडनम् ॥

इत्यादिवाक्यैः पृथग्विधानदर्शनात् प्राशस्त्यपरं ॥ यतस्तत्रैवाग्रे पित्रैकेन सापिंड्यं कुर्यात्कुशानन्तर्धायेत्युक्तं ॥ दिनान्तरमरणमप्येकदिनमरणमिति सहगमननिर्णये सविस्तरमभिहितमिति ॥ अथ मातुरौर्ध्वदैहिके आसुरगन्धर्वरक्षःपिशाचविवाहभेदेन पुत्रिकापुत्रभेदेन च तथा ब्राह्मदैवार्षप्राजापत्यविवाहभेदेन वा संबन्धवाक्यदर्शनात् गोत्रसंयोजनयोर्विप्रतिपन्नेषु निर्णीयते ॥ मातुः पिंडदानादौ गोत्रे विप्रतिपत्तिर्यथा ॥ भर्तृगोत्रेण पितृगोत्रेण वा दातव्यमिति॥ ५८८ उभयत्रा वचनदर्शनात् ॥

स्वगोत्राद्भ्रश्यते नारी विवाहात्सप्तमे पदे ।

स्वामीगोत्रेण कर्तव्या तस्याः पिंडोदकक्रिया ॥

इत्यादि भर्तृगोत्रविषयवचनं ॥

पितृगोत्रं समुत्सृज्य न कुर्याद्भर्तृगोत्रतः ।

जन्मन्येव विपत्तौ च नारीणां पैतृकं कुलम् ॥

इत्यादि पितृगोत्रविषयं ॥ एवं विप्रतिपत्तौ आसुरादि विवाहेषु पुत्रिकाकरणे च पितृगोत्रमेव तत्र विशेषवचनात् ॥

दानस्यानुवृत्तेश्च ब्राह्म्यादिषु विवाहेषु व्रीहियववद्बृहद्रथंतरवद्विकल्प्य एव ॥

तत्र च—येनास्य पितरो याता येन याताः पितामहाः ।

तेन यायात्सतां मार्गं तेन गच्छन्न दुष्यति ॥

इति वचनाद्वंशपरंपरयासमाचारेण व्यवस्था ॥ एवंविधविषयव्यतिरेकेण अस्य वचनस्य विषयान्तराभावात् ॥ यत्र पुनः शास्त्रतो न व्यवस्था तत्रात्मतुष्टिरेव व्यवस्थापिका॥ यथा गर्भाष्टमेऽष्टमेवाब्दे इति ॥ मातुः सपिंडीकरणे विरुद्धानि वाक्यानि दृश्यन्ते ॥ तत्र—

पितामह्यादिभिः सार्धं सपिंडीकरणं स्मृतम् ।

तथा भर्त्रापि भार्यायाः स्वमात्रादिभिः सह सपिंडीकरणं कर्तव्य मिति पैठीनसिराह—

अपुत्रायां मृतायां तु पितुः कुर्यात्सपिंडनम् ।

श्वश्र्वादिभिः सहैवास्याः सपिंडीकरणं भवेत् ॥

५९९ पत्न्याः सपिंडीकरणे यमः—

पत्या चैकेन कर्तव्यं सपिंडीकरणं स्त्रियाः ।

सामृतापि हि तेनैक्यं गता मंत्राहुतिव्रतैः ॥ इति ॥

उशनसा तु मातामहे न सपिंडीकरणमुक्तं ॥

पितुः पितामहे यद्वत्पूर्णे संवत्सरे सुतैः ।

मातुर्मातामहे तद्वदेषा कार्या सपिंडता ॥

तथा—पिता पितामहे योज्यः पूर्णे संवत्सरे सुतैः ।

माता मातामहे तद्वदित्याह भगवान् शिवः ॥

इत्येवं विधेषु वचनेषु सत्सु अपुत्रायां भार्यायां प्रमता-

यां भर्ता स्वमात्रैव सापिंड्यं कुर्यात् ॥ अन्वारोहणे तु पुनः स्वपित्रैव सापिंड्यं कुर्यात् ॥ आसुरादि विवाहोत्पन्नः पुत्रिकापुत्रश्च मातामहेनैव ॥ [६००] ब्राह्मादिविवाहोत्पन्नः पितामहेन पितामह्या वा विकल्पेन कुर्यात् ॥ अत्रापि यदि वंशसमाचारो नियतस्तदानीं तथैव कुर्यात् ॥ वंशसमाचारोऽप्यनियतश्चेदात्मतुष्टिरेवेति यथारुचि कुर्यात् ॥ तत्र येन केनापि मातुः सापिंड्ये इति यत्रान्वष्टकादिषु मातृश्राद्धं पृथग्विहितं

अन्वष्टकासु वृद्धौ च गयायां च मृतेऽहनि ।
मातुः श्राद्धं पृथक्कुर्यादन्यत्र पतिना सहेति ॥

तत्र पितामह्यादिभिरेव पार्वणश्राद्धं कर्तव्यं अन्वारोहणे तु पृथक्पार्वणेऽपि समुदितयोर्ग्रहणं पतिपत्न्योः सदैकत्वमिति वचनात् ॥ पतिसापिंड्ये तदंशभागित्वात् ॥ पितृसापिंड्ये तेन सहैव ॥ यथाह शातातपः—

एकमूर्त्तित्वमायाति सपिंडीकरणे कृते ।
पत्नीपातिपितॄणां तु तस्मादंशेषु भागिनी ।

इति निर्णयः ॥ [६०१] एतच्च प्रेतश्राद्धसहितं सपिंडीकरणं ॥ संविभक्तधनेषु बहुषु भ्रातृषु सत्सु अप्येकेनैव कृतेनालं ॥ न सर्वैः कर्त्तव्यं ॥

नवश्राद्धं सपिंडत्वं श्राद्धान्यपि च षोडश ।
एकेनैव तु कार्याणि संविभक्तधनेष्वपि ॥

इति स्मरणात् ॥ वायुपुराणे—

श्राद्धानि षोडशादत्वा न तु कुर्यात्सपिंडनम् ।
प्रोषितावसिते पुत्रः कालादपि चिरादपि ॥

प्रोषितावसिते प्रवासावसाने चिरकालेऽपि पुत्र एव कुर्यात् ॥ यदि श्राद्धानि कनिष्ठभ्रात्रादिना कृतानि तदा सपिण्डनं कुर्यात् पुत्रो ज्येष्ठ एव ॥

ज्येष्ठेनैव कृतं यत्तत्सर्वैरेव कृतं भवेत् इति वचनात् ॥ अत्र विशेषः ॥ अपुत्रस्यापि कुर्वीत धर्मपत्नी सपिंडतामिति॥ मनुः—अपुत्रस्य परेतस्य नैव कुर्यात्सापिंडताम् ।

आशौचमुदकं पिंडं एकोद्दिष्टं न पार्वणम् ॥

अपुत्रा ये मृताः केचित् पुरुषा वा स्त्रियोऽपि वा ।

तेषां सपिंडनाभावादेकोद्दिष्टं न पार्वणम् ॥

इति वचनद्वयेन अपुत्रस्य सपिंडीकरणाभावः प्रदर्श्यते॥ मैवं ॥

सर्वाभावे स्वयं पत्न्या स्वभर्तॄणाममंत्रकम् ।

सपिंडीकरणं कुर्यात्ततः पार्वणमेव च ॥

अपुत्रे संस्थिते कर्त्ता न भवेच्छ्राद्धकर्मणि ।

तत्र पत्न्यपि कुर्वीत सापिंड्यं पार्वणं तथा

इति लौगाक्षिसुमन्तुवचनाभ्यां सपिंडनविधानादौर्ध्वदैहिकस्याप्यवश्यकर्त्तव्यता प्रतीयते ॥ [६०२] अतश्च प्रजाश्चोत्पादयितव्या इति विध्यर्थवादतया वर्णनीयं तद्वचनद्वयमिति ॥ तथा प्रासङ्गिकं

ब्राह्मादिषु विवाहेषु या रूढा कन्यका भवेत् ।

भर्तृगोत्रेण कर्त्तव्या तस्याः पिंडोदकक्रिया ।

आसुरादिविवाहेषु पितृगोत्रेण धर्मवित् ॥

पितृगोत्रेण मातुःपितृगोत्रेणेति मार्कण्डेयः ॥ तथा—

मातामहस्य गोत्रेण मातुः पिंडोदकक्रियाः ।

कुर्वीत पुत्रिकापुत्र एवमाह प्रजापतिः ॥

एषु वचनेषु व्यवस्था प्रतिपादिता प्राक् सपिंडीकरणे कृते प्रेतलोकात्पितृलोकं गच्छतः आमेन पार्वणविधिना पाथेयश्राद्धं कुर्यादिति स्मृत्यर्थसारात् ॥

इति सपिंडीकरणनिर्णयः ॥

---

[५०३] अथ सपिंडनविधिरुच्यते ॥

तदकरणे श्राद्धादावनधिकारः ॥ तदुक्तं—

नासपिंड्याग्निमान्पुत्रः पितृयज्ञं समाचरेत् ।
न पार्वणं नाभ्युदयिकं कुर्वन्न लभते फलम् ॥

निरग्निकोऽप्यनधिकारी कर्मणि ॥ यतः—

नासपिंडीकृते प्रेते पितृकार्यं प्रवर्त्तते ।
ग्रहोपरागाष्टकयोः पञ्चयज्ञेऽथ पार्वणे ॥
पित्रोरसंसर्जितयोर्नेतरेभ्यः कदाचनेति ॥

नेतरेभ्यो दानं क्वचिदपि संभवति ॥ मार्कण्डेयः—

पितृलोके तु वसतिर्नृणां वर्षं प्रकीर्तिता ।
क्षुत्तृष्णे प्रत्यहं तत्र भवेतां भृगुनन्दनेति ॥

अतो वर्षपरिमितमन्नादि दत्वा कर्तव्यं सपिंडनं॥ स्कन्दपुराणे—

अन्नं चैव यथाशक्त्या संख्यां कृत्वाब्दिकस्य च ।
दातव्यं ब्राह्मणे स्कन्द घटादौ निष्क्रयं च यत् ॥
तेन सत्कृत्य दातव्याः प्रेतस्याप्युदकुंभकाः ।
आमश्राद्धानि दत्तानि भुज्यन्ते तत्र मानवैः ॥

अन्नेन स तुल्यो विकल्पः ॥ अथैकोद्दिष्टसहितेन सपिं-
डीकरणेन प्रेतत्वनिवृत्त्या पितृत्वं प्राप्नोतीति [१०४] याज्ञवल्क्यः—

सपिंडीकरणं श्राद्धं दैवपूर्वं नियोजयेत् ।
पितॄनेवाशयेत्तत्र पुनः प्रेतं न निर्दिशेत् ॥

अत्र कामकालौ विश्वेदेवाः॥ वसुरुद्रादित्यस्वरूपाः पितर इति ज्ञेयं॥ प्रेते नवमिश्रैकोद्दिष्टवत्॥ पित्र्ये पार्वणवदिति च॥

तथा—गन्धोदकतिलैर्युक्तं कुर्यात्पात्रचतुष्टयम् ।
अर्घार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत् ॥
ये समाना इति द्वाभ्यां शेषं पूर्ववदाचरेत् ।

शाङ्खायनगृह्ये ॥ अथ सपिंडीकरणं चत्वार्युदपात्राणि पूरयित्वा पितुः प्रभृति तद्वत्पिंडान् कल्पयित्वा

मंत्रः ॥ ये समानाः समनसः पितरो यमराज्ये ।
तेषां लोकः स्वधा नमो यज्ञो देवेषु कल्पताम् ॥
ये समानाः समनसो जीवा जीवेषु मामकाः
तेषां श्रीर्मयि कल्पतामस्मिन्लोके शतं समाः ॥

समानोमंत्र इति द्वाभ्यां आद्यं पिंडं त्रिषु विभजेत्तथैवार्घपात्राणि ॥ अर्घपूरणान्तं श्राद्धं कृत्वा ततः प्रेतपात्रं पितृपात्रेषु संयोजयिष्ये इतिपृष्ट्वा संयोजयेत् ये समाना इत्यादिभिः ॥ [१०५] पवित्रं च त्रिधा कृत्वेति चण्डुनिबन्धे ॥ अत्र प्रेतायार्घदानं पूर्वं पश्चाद्वा तथा अर्घं दत्वा संयोजनं ॥ संयोज्य वा अर्घदानं ॥ तत्रापि सपवित्रस्य संयोजनमपवित्रस्य चेति पक्षाः सन्ति ॥ तत्र निबन्धमूलाश्चेति तत्र शिष्टपरंपरासात्मतुष्टिं वानुसृत्यैकतमोऽभ्युपगन्तव्य इति॥काठके—

ये समाना इति द्वाभ्यां निर्दिष्टेषु च निक्षिपेत् ।
पितृभ्यस्तु ततो दद्यादेवं संसर्जने विधिः ॥

विष्णुः ॥ तत्राग्नौकरणमावाहनं पाद्यं च कुर्यात् ॥ एत-दग्नौकरणं कारिकायां निषिद्धं ॥ यथा ॥

सपिंडीकरणे वापि नातोऽग्नौकरणाद्यपि ।

अत इति एकोद्दिष्टे अग्नौकरणं निषिद्धं ॥ प्रेतैकोद्दिष्ट-मिश्रत्वात् सपिंडीकरणे अग्नौकरणं न कार्यमित्यभिप्रायः ॥ आदिशब्दादुल्मुकदानं च ॥ तदुक्तं—

सपिंडीकरणान्तानि प्रेतश्राद्धानि यानि वै ।
तानि स्युर्लौकिके वन्हाविति शातातपोऽब्रवीत् ॥

याज्ञवल्क्यः—चतुरो निर्वपेत्पिंडान् पूर्वं तेषु समापयेत् ।
ततःप्रभृति वै प्रेतः पितृसामान्यमश्नुते ॥
सुवर्णरूप्यदर्भैस्तु तस्मिन्पिंडं ततस्त्रिधा ।

कृत्वाद्यं पिंडं तेषु संयोजयेत् ॥ शेषं पूर्ववत् पार्वणवदा-चरेदिति ॥ [५०६] पुनः प्रेतं न निर्दिशेत् पितृशब्दमुच्चारयेत् इत्येवमर्थं ॥ तत्राप्येकोद्दिष्टश्राद्धे पिंडसंसर्जनपर्यन्तं प्रेतश्राद्धव-त् ॥ ततःपरं पार्वणैकोद्दिष्टवत् ॥ इति संप्रदायः ॥ स्मृत्यर्थ-सारे ॥ प्रेतोद्देशेनैकं पिंडं दत्वा पित्र्ये त्रीन् पिंडान् मंत्रतो दत्वा प्रेतपिंडं पितृपिंडेषु संयोजयिष्ये इति पृष्ट्वा प्रेतपिंडं त्रिधा विभज्य पूर्वमंत्राभ्यां पित्रादिपिंडेषु निदध्यात् ॥ समा-नो मंत्र इति मंत्रद्वयाधिकं एवं मंत्रचतुष्टयं ॥ शाङ्खायन आ-ह ॥ अनुमंत्रणादि सर्वं पार्वणवत्॥ तथा ॥ एतत्सापिंडीकरण-मेकोद्दिष्टं स्त्रिया अपि ॥ मातुरप्येवं पितृवत्सापिंडीकरणमिति

मिताक्षरायां ॥ एतदुक्तवचनजातमेकोद्दिष्टानन्तरं पार्वणविधायकं ॥ आद्यं पिंडं त्रिषु विभजेत् ॥ तथा पूर्वं तेषु समापयेदिति लिङ्गात् ॥ अथैतद्विरुद्धं ॥

श्राद्धद्वयमुपक्रम्य कुर्वीत सहपिंडताम् ।
तयोस्त्रिपुरुषं पूर्वमेकोद्दिष्टं ततः परम् ॥

३०५ तथा—दत्वा पिंडान्पितृणां तु पश्चात्प्रेतस्य पार्श्वतः ।
तं तु पिंडं त्रिधा कृत्वा चानुपूर्व्येण सन्ततिम् ॥
विदध्यात्त्रिषु पिंडेषु एवं संसर्जने विधिरिति ।

काठकात् ॥ एवं विरोधे अत्र पावर्णात्पूर्वमेकोद्दिष्टः पश्चाद्वेत्युभयथा वचनदर्शनाच्छिष्टाचारपरंपरा चात्मतुष्टिर्वा नियामिका यद्यप्यस्ति तथापि पितुः प्रभृति तद्वात्पिंडान्कल्पयित्वा तथा त्रीणि पितृणामेकं प्रेतस्येति खण्डद्वयेन भिन्नरूपमभिदधता शाङ्खायनेन पितृविषये पूर्वोऽन्यविषये पर इति व्यवस्थापितमिव प्रतिभाति ॥ एवं यथाहाविः कार्यमिति प्रेतकल्पे—अस्थानिका च या शूद्रा वैश्या वा क्षत्रियापि वा ।
या पत्नी वै पितुः काचित्कुर्यात्पुत्राः सपिंडनम् ॥

## इति सपिंडनश्राद्धविधिः ॥

---

कृतेऽचलद्विवेदेन ग्रन्थे निर्णयदीपके ।
सकालः सविधिर्जातः सपिंडनविनिर्णयः ॥

---

## ॥ अथ वृषोत्सर्गः ॥

३०८ अथ साग्नेः पित्रोरेकादशाहे वृषोत्सर्गकर्मणि आवसथ्या-

ग्निर्लौकिकाग्निर्वा इति संदिग्धे निर्णीयते तावत् ॥

पचनाग्नौ पचेदन्नं सूतके मृतकेऽपि वा ।

अपक्त्वा तु वसेद्रात्रिं पुनराधानमर्हतीति ॥

एतन्नित्यगृहपाकविषयं ॥ संस्कारकर्मणि विशेषो यथा—

अन्यसंस्कारकर्माणि वैवाह्यादीनि यानि च ।

तानि स्युर्लौकिकाग्नौ तु स्वसंस्कारी स्वकेऽनले ॥

स्वकेऽनले स्वावसथ्ये ॥ स्वसंस्कारीत्येकवचनं अविवक्षितं गृहं संमार्ष्टीतिवत् ॥ स्वसंस्कारी दर्शपूर्णमासाग्रयणश्रावण्यादि पौर्णमास्यष्टकादि इत्यादि स्वसंस्कारी ॥ अन्यसंस्कारी विवाह्यादीनि लौकिकाग्नाविति ॥ [५०५] शाङ्खायनगृह्ये ॥ पञ्चसु बहिः शालायां विवाहे चूडाकरण उपनयने केशान्ते सीमन्तोन्नयन इति उपलक्षणमेतत् ॥ जातकर्मनामकर्मान्नप्राशनादि लौकिकाग्नौ कार्याणि नावसथ्ये अन्यसंस्कारित्वात् ॥ एवं गोभिलः—

न स्वेऽग्नावन्यहोमः स्यान्मुक्त्वैकसमिदाहुतिम् ।

अग्निस्तु नामधेयादौ होमे सर्वत्र लौकिकः ॥ इति ॥

पारस्करगृह्येऽप्येवं ॥ विवाहः स्त्रीसंस्कारः ॥

वैवाहिको विधिः स्त्रीणामौपनायनिकः स्मृतः ।

तथा—स्वगोत्राद्भ्रश्यते नारी विवाहात्सप्तमे पदे ॥ इति ॥

सीमन्तोन्नयनमिति स्त्रीसंस्कार इति मिताक्षरा ॥ देवलोऽपि—

सकृच्च संस्कृता नारी सर्वगर्भेषु संस्कृता । इति ॥

अन्ये पुरुषसंस्कारा इति ॥ एवं वृषोत्सर्गोऽपि प्रेतसंस्कारः ॥ प्रेतत्वनिवृत्त्यर्थं संस्कारः प्रेतसंस्कारः ॥ यतः—

एकादशाहे प्रेतस्य यस्य नोत्सृज्यते वृषः ।
प्रेतत्वं सुस्थिरं तस्य दत्तैः श्राद्धशतैरपि ॥

[११०] इति गरुडपुराणं ॥ तथा–

आद्यश्राद्धं द्विजेऽग्नौ वा कुर्यात्पुनरपि द्विजे ।

इति वचनेन आद्यश्राद्धे ब्राह्मणभोजनार्थं आवसथ्याग्नौ पाकं करिष्यन्तीति शङ्कया आह सुमन्तुः–

सपिंडीकरणान्तानि प्रेतश्राद्धानि यानि च ।
तानि स्युर्लौकिके वन्हाविति शातातपोऽब्रवीत् ॥

एवं च आद्यश्राद्धादिषु आवसथ्याग्नौ पाकं निषेधयता वृषोत्सर्गोऽपि आवसथ्याग्नौ निषिद्धः समानयोगविहितत्वात् ॥ आद्यश्राद्धादेर्वृषोत्सर्गस्य च प्रेतत्वनिवृत्यर्थं योगः समानो योगः ॥ तथा चोक्तं महाभाष्ये ॥ समानयोगविहितानामेकं सन्धित्सयतोऽपरं संच्यवत इति ॥ अत्रावरीवत् ॥ अत्रावावत्शब्दावनोरचेति सूत्रेण विहितो ङीप् ॥ द्वौसमानयोगविहितौ ॥ अतः प्रेतोद्देशेन आवसथ्याग्नौ वृषोत्सर्गः प्रेतश्राद्धार्थं पाकश्च न कर्तव्य इति ॥ [१११] स्मृतिरपि–

गार्ह्यमौपासने कुर्याच्छ्रौतं वैतानाग्निषु च ।
स्मार्तं च लौकिके कुर्याद्यग्निरग्न्यधिकारिकमिति ॥

अतो निरग्न्यधिकारिकं प्रेतत्वनिवृत्यर्थं साधारणं स्मार्तं साग्निरपि लौकिकाग्नौ कुर्यात् एवं कारिकायामस्ति॥किं च आधानाग्निकृतकर्मफलं आधातुरेव नान्यस्येति ॥ अतः गोभिलकात्यायनशाङ्खायनादिभिस्तु स्वगृह्ये आधानवतां पुत्रादीनां जातकर्मादिसंस्कारः बहिःशालायां कार्यं इत्युक्तं ॥

किमुतान्येषामिति ॥ एवं सति विहिताचरणे धर्मः ॥ निषिद्धाचरणे तु अधर्मः पापं ॥ पापफलमुक्तं महाभारते—

पापैः पापाः सञ्जनयन्ति रुद्रं ततो रुद्रो जायते देव एकः ।
शुष्केणार्द्रं दह्यते मिश्रभावात् ततो रुद्रःसाध्वसाधून्हिनस्ति॥

तथा—दुरिष्टैर्दुरितैश्चैव दुराचारैर्दुरागमैः ।
विप्राणां कर्मदोषैश्च प्रजानां भवति क्षयः ॥ इति ॥

[६१२] काम्यवृषोत्सर्गो हि भिन्नफलत्वात् जातेष्टिश्च श्रौतत्वाच्च उभौ नास्य विषयौ ॥ अथ वैवाहिकादिकालेष्वकृतस्याधानस्य पितुरेकादशाहे स्मार्ताधानं भवति प्रेते वा गृहपताविति वचनादिति केचन वदन्ति तन्न ॥ प्रेते वा गृहपतौ स्वयं जायानिति यद्गृह्यभाषितं तत्कालमात्रं प्रादिष्टं तदाधानं दर्शे उत्तमं दर्शे उत्तमं ॥ यतः वैशाख्याममावास्यायामन्यस्यां वेति गृह्यवचनात् ॥ मिताक्षरायां—

नवभिर्दिवसैर्दद्यान्नवपिंडान् समाहितः ।
दशमं पिंडमुत्सृज्य रात्रिशेषे शुचिर्भवेत् ॥

इदं शुचित्वाभिधानं एकादशाहार्थब्राह्मणनिमंत्रणार्थं ॥ न सूतकनिवृत्यर्थमिति ॥ चिरंतन शिष्टमतं ॥ आधुनिकास्तु

दशमं पिंडमुत्सृज्य दिनशेषं शुचिर्भवेत् ।

दिनशेषं शुचित्वमेकादशाहाभिधाने चातुः प्राश्यार्थं ॥ वृद्धिश्राद्धे तु सूतकमित्याहुः ॥ आधुनिकेषु अर्धजरतीयो दोषः [६१३] यथा—चातुःप्राश्ये च शुद्धिश्चेद्वृद्धिश्राद्धे कथं भवेत् ।

चातुःप्राश्ये विकल्पोऽस्ति वृद्धिश्राद्धे न कश्चनेति ॥

वृद्धिश्राद्धे तु पुण्याहे मातृयागं कृत्वेति मातृपूजनपूर्व-

कं तदकरणे दोषः ॥

अकृत्वा मातृयागं तु वैदिकं यः समाचरेत् ।
तस्य क्रोधसमाविष्टा हिंसामिच्छन्ति मातरः ॥

इति स्मृतिवचनात् ॥ वृध्धिश्राध्धाकरणे पितरोऽपि हिंसामिच्छन्तीति गोभिलः ॥ अथ

कटाह धूमस्पर्शोऽपि न शुभाय प्रजायते ।
तदर्थं कृतमाधानं शुभदायि कथं भवेत् ॥

किंच पित्रोः सपिंडनाभावे पुत्रस्याशुचिता ॥
तत्र गरुडपुराणं—

भिक्षुर्भिक्षां न गृण्हाति यावत्कुर्यात्सपिंडनम् ।
स्वगोत्रेऽप्यशुचिस्तावद्यावत्पिंडं न मेलयेत् ॥

इत्यादि बहून्यशुचितायां वचनानि सन्ति ॥ ११४ अपि च—

अशुचित्वे चेदाधानं पितुरेकादशेऽहनि ।
शुचिना कर्म कर्तव्यमिति शास्त्रं हतं भवेत् ॥

अतः पित्रोः सपिंडनाभावे पुत्रस्याधानं न भवति ॥ इत्यस्मिन्नर्थे शाङ्खायनकारिकायां स्पष्टं वक्ति ॥ यथा—

प्रेते पितरि वा कुर्याज्ज्येष्ठः पुत्रोऽग्निधारणम् ।
सपिंडयित्वा पितरमविभक्तोऽनुजैरपि ॥

एवं वेदार्थो रक्षितो भवति ॥

रात्रावेव समुत्पन्ने मृते रजसि सूतके ।
पूर्वमेव दिनं ग्राह्यं यावन्नोदयते रविः ॥

अनेन वचनेन पूर्वस्य सूतकस्य दशम्यां रात्रौ सूर्योदयात्पूर्वं सूतकान्तरे समुत्पन्ने पूर्वसूतकवशादुत्तरं सूतकं शुध्य-

त्ययं देशाचारोऽस्ति एतेन एतदप्यपास्तं

दशमं पिंडमुत्सृज्य दिनशेषं शुचिर्भवेत् ।

तथा–रात्रिशेषे त्र्यहाच्छुद्धिः प्रभाते च शुचिस्त्र्यहात्

इत्येतदप्यपास्तमिति ॥ अथ जीवद्भर्तृकायास्त्रियाः कुत्र कर्मण्यधिकारस्तदुच्यते ॥ पञ्चमहायज्ञादि गृहस्थकर्म ॥ भर्त्रा कृतं स्त्रियापि कृतं भवेत् ॥ तदुक्तं गरुडपुराणे–

यद्देवेभ्यो यत्पितृभ्यश्च दानं कुर्याद्भर्त्ताभ्यर्चनं सत्क्रियां च ।
तस्याप्यर्धं केवलं नान्यचित्ता नारी भुङ्क्ते भर्तृशुश्रूषयैव ॥

[६१५] यतो धर्मे चार्थे च कामे च नातिचरितव्या ॥ पाणिग्रहणाच्च सहत्वं कर्मसु ॥ तथा पुण्यफलेषु द्रव्यपरिग्रहेषु चेति स्मरणात् ॥ अतः दंपत्योर्गृहस्थकर्माणि व्यासज्यैककर्तृत्वं अग्नीषोमयोर्यथा देवतात्वमित्युपपन्नं ॥ यद्विवाहकृतं यस्याः स्वामित्वं सा तस्य पत्नी पत्युर्नो यज्ञसंयोग इति ॥ अतः पञ्चमहायज्ञादौ पृथक्प्रयोगे वैगुण्यं ॥ नास्ति स्त्रीणां पृथग्यज्ञ इतिवचनात् ॥ यत्र न वैगुण्यं तत्र पृथगधिकारः ॥ यथा–पत्नी आज्यमवेक्षेत स्नानदानव्रतादिषु ।
तथा कात्यायनः–भार्या भर्तुर्मतेनैव व्रतादीन्याचरेदिति ॥

आदिशब्देन दानतीर्थयात्रा वाप्यादिप्रतिष्ठा च ॥ एवं सति पत्न्या क्रियमाणे सश्राद्धे व्रतदानादौ श्राद्धं कथं ॥

यष्टव्यदेवताभावान्न श्राद्धमिति केचन

आहुः तन्न ॥ श्राद्धं विना वैदिककर्माचरणे पितरो मातरश्च कुपिता हिंसां कुर्वन्तीत्युक्तं ॥ श्राद्धमत्र वृद्धिश्राद्धं ॥

अकृत्वा मातृयागं तु वैदिकं यः समाचरेत् ।

तस्य क्रोधसमाविष्टा हिंसामिच्छन्ति मातर इति ॥

६१५ गोभिलादयः ॥ अथ अर्धं भार्या मनुष्यस्य ॥ तथा—

पतत्यर्धशरीरेण यस्य भार्या सुरां पिबेत् ।

इत्यादि स्मृतिवचनेभ्यः स्त्रीपुरुषयोरेकशरीरत्वं ॥ एवं सति पुरुषस्य याः श्राद्धदेवतास्ता एव स्त्रिया अपीति ॥ स्त्रीणामुपनयनाभावे सति वैदिकमंत्रोच्चारणानधिकारत्वाद-विदुषी स्त्री वेदमंत्रैः कथं श्राद्धं कुर्यात् ॥ शृणु ॥ स्त्रीपुरुषौ परस्परं श्राद्धपिंडव्रतादिषु अधिकारिणाविति स्मृतिषूक्तं ॥ तथा—भार्याव्रतं पतिः कुर्यात्पत्युर्भार्या व्रतं चरेत् ।

असामर्थ्ये शरीरस्य व्रतभङ्गो न जायते ॥

इति पैठीनसि स्मरणात् ॥ अतः व्रतमिति व्रतोपलक्षितं कर्म ॥ भार्यायाः सर्वाङ्गयुक्तकर्मकरणासामर्थ्यत्वे भार्याकर्त-व्यं श्राध्धं पतिः कुर्यात् ॥ भार्या व्रतसिध्धये भार्यात्वनुम-ननादिभिस्तत्रानुकूल्यं साधयति ॥ अन्यत् स्त्रिया कर्तव्यं योग्यं कर्म स्त्री करोति ॥ स्कन्दपुराणे—

यज्ञेषु मंत्रवत्कुर्यात्कर्म पत्नी यथाविधीति ॥

पत्न्याज्यमवेक्षेत इत्यादिषु पतिशब्दातिरिक्तपत्नीशब्दप्र-योगः ॥ ततः पत्न्याः यज्ञेषु वेदमंत्राधिकारित्वं तदौर्ध्वदैहिके सा हि मंत्रार्हा ॥ सा पत्नी तस्य भर्तुरौर्ध्वदैहिके अग्निदान-पर्यन्तं मंत्रार्हा ॥

तथा—असंस्कृतेन पत्न्या च ह्यग्निदानं समंत्रकम्

कर्तव्यं ॥ असंस्कृतेन अनुपनीतेन पुत्रेण अन्यत्सर्वं अ-न्येन कारयेत् ॥ इति पत्न्या भर्तरि जीवति व्रतादौ श्राद्ध-

निर्णयः ॥ मृते च ॥ [६१७] अथ विधवा पुत्रवती किं कर्म कुर्यात् ॥ मृते भर्तरि व्रतपालनं ब्रह्मचर्यं आत्मनो भर्तुश्च सर्वपापक्षयदं मोक्षदं चेति ॥ स्त्रीधर्मे—

श्राद्धादिकं धर्मकर्म पुत्रे संसृज्य पुत्रिणी ।
ब्रह्मण्याधाय यतिवद्वर्तते धर्मतत्परा ॥

आदिशब्देन पाञ्चयज्ञं गृहस्थकर्म ॥

यथा नित्यं पतिः कुर्यात्स्नानं संध्या जपादिकम् ॥
पुत्रानुमत्या च तथा विधवा धर्ममाचरेत् ॥

न स्वातंत्र्यं क्वचित्स्त्रिया इतिवचनात् ॥ तथा—

पुत्रिणी विधवा तस्याः प्रथमं पतिदेवता ।
जलमन्नं ददेच्छक्त्या विना श्राद्धं सदैव हि ॥

भर्तुः प्रत्याब्दिकं दर्शादिकं श्राद्धं च पुत्रेण क्रियमाणत्वान्न करोति स्त्री ॥ पुत्राभावे तु पत्नी स्यादिति वचनात् ॥ [६१८] तथा चोक्तं गरुडपुराणे—

पुत्रेषु विद्यमानेषु नान्यं वै कारयेत्स्वधाम् ।

स्वधां श्राद्धं स्वार्थे णिच् ॥ अन्येन कुर्यात् ॥ यतः ॥ आत्मा वै जायते पुत्र इति ॥ पुत्र आत्मा एव ॥ तेन कृतत्वान्न पुत्रवती स्त्री श्राद्धं कुर्यात् ॥ एवं दर्शादौ पुत्रवत्याः श्राद्धविधाने त्वनधिकारित्वात् ॥ तदकरणे यतेरिव न प्रत्यवायो न श्राध्धफलं ॥ श्राध्धकर्मफलं तु श्राध्धकर्तुः पुत्रस्य ॥ अकर्त्री माता न फलभागिति जैमिनिः ॥ वचनं च—

पुत्रश्चेत्कुरुते श्राध्धं दर्शादौ मातृसन्निधौ ।
सन्निधाने फलाधिक्यं श्राध्धे स्वस्त्री सहायिनी ॥

फलाधिक्यं पुत्रस्य श्राध्धफलसंबन्धिनी पुत्राख्री व्यास-न्यकर्तृकत्वात् साध्वी चेत् ॥ एवं पुत्रवत्याः श्राध्धाधिकारा-भावेऽपि यानि व्रतदानपुण्यानि श्राध्धपूर्वकानि तेषु पुत्रवती श्राध्धं कुर्यात् तत्प्रदर्शनार्थं ॥ [५१९] मार्कण्डेयः—

नारी खल्वननुज्ञाता भर्त्रा वापि सुतेन वा ।
निष्फलं तु भवेत्तस्या या करोति व्रतादिकम् ॥

नारी स्त्री । भर्तुरभावे सुतानुज्ञां विना यत्करोति तन्नि-ष्फलं ॥ आदि शब्दाद्व्रतदानदेवताप्रतिष्ठा तीर्थानि तडागप्र-तिष्ठादि॥इत्येवमादीनि श्राध्धं विना निष्फलानि॥तथा चोक्तं—

महादानेष्टपूर्तासु पुत्रद्वाराथवा स्वयम् ।
कुर्यात्तु पुत्रिणी श्राध्धं तदृते कर्म निष्फलम् ॥

तदृते तच्छ्राद्धं विना॥ कांस्यपात्रदानं ॥ शम्या सह अ-श्वत्थविवाहः ॥ इत्याद्यल्पेषु श्राध्धमुक्तं ॥ एवंश्राध्धनिमित्ता-नि पुत्रवत्याः ॥ एषु पुत्रावती श्राध्धं पुत्रेण कारयेत् स्वयं वा कुर्यात्॥ स्वयं कर्तृत्वे पुत्रकर्तृत्वे च श्राध्धदेवताः पितरस्त एव॥ इयान्प्रयोगभेदः ॥ पुत्रकर्तृत्वे तु अमुकदान अमुककर्मप्रारंभनि-मित्तमुक्त्वा स्वपित्रादयः श्राध्धदेवताः ॥ स्वयं कर्तृत्वे अमु-ककर्मप्रारंभनिमित्तं भर्तृश्वशुरादयो देवताः पितरस्त एव ए-तेन पुत्रवत्याः स्त्रियः श्राध्धदेवताः यष्टव्यदेवता न सन्तीति एतदपास्तं॥अतः पुत्रवती स्त्री देशकालदानव्रतविशेषेषु स्वयं-स्वहस्तेनापि श्राध्धं कुर्यादिति सिध्धं ॥ विधवा स्त्री सुताज्ञ-या व्रतदानतीर्थयात्राः कुरुते इत्युक्तं ॥ [५२०] यात्रा द्विप्रकारा॥ तीर्थप्रधाना श्राध्धप्रधाना च॥ तीर्थप्रधानायां तीर्थस्नानेन त-

देवतार्चनेन सफलं यतिवत् ॥ गयायात्रा श्राध्धप्रधाना ॥ तत्र श्राध्धाकरणे यात्रासिध्धिर्न जायते॥ विना श्राध्धं सदैव हि ॥ इत्यनेन पुत्रावत्याः श्राध्धानिषेधः॥ गयायां श्राध्धं॥ कथं निषेधः प्रत्याब्दिकदर्शादिश्राध्धविषयः ॥ तदुक्तं स्त्रीधर्मे—

पुत्रवत्पुत्रिणी श्राद्धं न कुर्यात्पुत्रवत्सदा ।
व्रतदानप्रसङ्गेन कुर्यात्पुत्राहितैषिणी ॥

पुत्रवद्दर्शादौ न कुर्यात् ॥ व्रतादिद्वारा कुर्यादेव ॥ तदुक्तं पुराणे—दानव्रतप्रसङ्गेन विधवा पुत्रिणी च या ।
गयाश्राद्धं प्रकुर्वीत तद्विना गमनेन किंम् ॥

तच्छ्राद्धं विना गमनप्रयासेन किं ॥ अतः पुत्रवती प्रसङ्गद्वारा श्राद्धं कुर्यात् ॥ फलाधिक्यदर्शनात् कः ॥ प्रसङ्गो यद्द्वारा श्राद्धं॥ शृणु ॥ सश्राद्धदानं व्रतं चोपक्रम्य दानाङ्गभूतं श्राद्धं विष्णुपदे कृत्वा उभयोर्दानसिध्धिः ॥ गयाश्राध्धसिध्धिश्च प्रसङ्गद्वारा॥ [६२१] तथा च ॥ इन्द्रियकामनायां दध्ना होमे कृते नित्यहोमासिध्धिः इन्द्रियकामासिध्धिरेवं उभयोः कामसिध्धिराह ॥ एवमेकं श्राध्धं द्व्यर्थं करोति ॥ दानसिध्धिः गयाश्राध्धसिध्धिश्च॥द्व्यर्थसिध्धये दृष्टान्तोभाष्ये॥ आम्राश्चसिक्ताः पितरश्च तृप्ता एका क्रियाद्व्यर्थकरी प्रसिध्धा ।
शय्यासहाश्वत्थविवाहदानं भाजनस्य च ॥
येन केन प्रसङ्गेन गयाश्राध्धं समाचरेत् ।

स्वयं स्वहस्तेन कुर्यात् पुत्रवती ॥ गयामाहात्म्ये—
गयायां यो विष्णुपदे मात्रा श्राध्धं तु कारयेत् ।
तं पुत्रं पुत्रमित्याहुर्मुनयोऽन्ये च पुत्रकाः ॥

यः पुत्रः ॥ तु अतिशयार्थे ॥ वृक्रोरन्यतरस्यां अल्पार्थे कन् ॥

पुत्रश्चेत्कुरुते श्राध्धं गयायां मातृसन्निधौ ।

श्राध्धांशभागिनी स्वस्त्री न माता श्राध्धभाग्भवेदिति ॥

यतः ॥ गयाश्राध्धे स्त्रीसहायिनीति विष्णुपुराणात् ॥

अत्र मात्रा कर्तव्यं श्राध्धं यदि पुत्रः करोति तदा नैकः श्राध्धद्वयं कुर्यादिति निषेधो न भवति ॥ मात्रार्थकर्तृकत्वे निमित्तभेदात् ॥ गूथामूत्रादि दूषितायाः मातुः तद्दोषनिवृत्यर्थं कांस्यपात्रदानमुक्तं ॥ [५२२] वैधव्यदोषनिवृत्यर्थः शय्यासहाश्वत्थविवाहः ॥ इत्याद्यन्यन्निमित्तं किंचिदादाय पुत्रवती विधवा गयायां गयाशिरसि विष्णुपदे स्त्रिया कर्तव्येन विधिना श्राध्धं कुर्यात् ॥ अथ पुत्रैः पितृणां किं ॥

पुन्नाम्नो नरकाद्यस्मात्पितरं त्रायते सुतः ।

तेन पुत्र इति ख्यातो ऋषिभिस्तत्त्वदर्शिभिः ॥

पितरमिति निष्पन्नो यव इतिवत् ॥ जात्याख्यायामेकवचनमविवक्षितं ॥ गृहं संमार्ष्टीतिवत् ॥ पिता मात्रा इत्येकशेषात् ॥ पितॄन्मातॄंश्च तारयेत् ॥ यतः—

सत्पुत्रस्तु भवेदेको दशपूर्वान्दशापरान् ।

उध्धरेच्छ्राध्धतस्त्वेवमेकविंशतिपूरुषान् ॥

यथा—अपुत्रस्य गतिर्नास्ति स्वर्गो नैव च नैव च ।

लोकानन्त्यं दिवः प्राप्तिः पुत्रपौत्रप्रपौत्रकैरिति

गरुडपुराणं ॥ तथा—

नचापुत्रस्य लोकोऽस्ति तत्सर्वे पशवो विदुरितिश्रुतिः ॥

पुत्रा हि औरसा एव मुख्याः ॥ [५२३] तदुक्तं—

औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुतः ।

पुत्रिका एव सुतः पुत्रिका पुत्रसमाना इति वसिष्ठः ॥ औरसैः पुत्रैः सुवृत्तैः पितॄणां स्वर्गप्राप्तिः फलं कुवृत्तैरसुखं ॥ अन्यैः सुवृत्तैः सुखं ॥ न स्वर्ग इति ॥

एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् । इति ॥

शमीपत्रप्रमाणेन पिंडं दद्याद्गयाशिरे ।

उध्धरेत्सप्तगोत्राणि कुलमेकोत्तरं शतम् ॥

इति निर्णयः ॥ एकोद्दिष्ट श्राध्धार्हा उच्यन्ते ॥ यद्यप्येतन्निरूपितं क्षयाहनिर्णयप्रकरणे तथापि वृध्धवसिष्ठः—

सपिंडीकरणादूर्ध्वं यत्र यत्र प्रदीयते ।

भ्रात्रे भागिन्यै पुत्राय स्वामिने मातुलाय च ॥

मित्राय गुरवे श्राध्धमेकोद्दिष्टं न पार्वणम् ।

वृध्धगार्ग्यः—मातुः सहोदरा ये च पितुः सहभवाश्च ये ।

तेषां चैव न कुर्वीत पार्वणं पिंडनादृते ॥

पिंडनात् सपिंडीकरणात् ॥ कालादर्शे—

आषाढीमवधिं कृत्वा यः पक्षः पञ्चमो भवेत् ।

महालयः स विज्ञेयो गजच्छायाऽह्वयस्तथा ॥

[६२४] कालनिर्णये तु—

नभो वाथ नभस्यो वा मलमासो यदा भवेत् ।

सप्तमः पितृपक्षः स्यादन्यत्रैव तु पञ्चमः ॥

अतः मलमासाभिधेये पञ्चमे पक्षे मृतस्य महालये क्रियमाणमपि प्रत्याब्दिकं पार्वणविधिना न कार्यं पितृपक्षे मृताभावात् ॥ तथा मातरि जीवत्यां महालयेऽपि पितामहीप्र-

त्याब्दिकं एकोद्दिष्टविधिना कार्यं ॥ यथा—

एकोद्दिष्टं न कर्तव्यं पितामह्याः कदाचन ।

एकोद्दिष्टं च कर्तव्यं यदि माता च जीवति ॥

तथा—सापत्नमातुः कुर्वीत एकोद्दिष्टं न पार्वणम् ।

अपुत्राया विशेषेण पार्वणं सह या मृता ॥

तथा—अनाशकमृतानां च क्षयाहेऽपि च पार्वणम् ।

सन्यासिवध्धि मन्यन्ते केचिद्विदुरदैविकामिति ॥

सुमन्तुः—यश्च मंत्रप्रदाता स्याद्यश्च विद्यां प्रयच्छति ।

गुरू तावपि कुर्वीत तयोर्नैव तु पार्वणम् ॥

अतश्च मातापितृव्यतिरिक्तानामेकोद्दिष्टमेवेत्युक्तमन्यत्रा-पि मातापितृविषयेऽपि क्षयाहे एकोद्दिष्टं कुर्यात् ॥ [६२५] तदुक्तं गरुडपुराणे पितरावधिकृत्य—

सपिंडीकरणादूर्ध्वं यत्र यत्र प्रदीयते ।

तत्र तत्र त्रयं कार्यं वर्जयित्वा क्षयेऽहनीति ॥

यत्तु अपुत्रा ये मृताः केचित् इत्यादिना अपुत्राणां पार्वणं निषिद्धं तत्पत्नीव्यतिरिक्तविषयं ॥ अपुत्रा पुत्रवद्दद्यादिति वचनेन पत्न्याः पार्वणं कर्तव्यं॥ अपुत्राणामपि संन्यासिनां सर्वैरधिकारिभिः पार्वणेनैव श्राद्धं कार्यमिति वक्ष्यते ॥

## इत्येकोद्दिष्टश्राद्धार्हाणां निर्णयः

## ॥ अथ देशान्तरमृताज्ञाने निर्णयः प्रस्तूयते ॥

तस्य सुतः जीवद्वार्ताश्रवणमारभ्य पञ्चदशाब्दादूर्ध्वं क्रियां कुर्यात् ॥ तदुक्तं ॥

अनाकर्णितवार्तस्य प्रोषितस्य पितुः सुतः ।
ऊर्ध्वं पञ्चदशाद्वर्षादौर्ध्वदैहिकमाचरेत् ॥

जातूकर्ण्यः—पितरि प्रोषिते यस्य न वार्ता नैव चागतिः ।
ऊर्ध्वं पञ्चदशाद्वर्षात्कृत्वा तत्प्रतिरूपकम् ॥
कुर्यात्तस्य च संस्कारं यथोक्तविधिना ततः ।
तदानीमेव सर्वाणि प्रेतकार्याणि कारयेत् ॥

तदानीमिति दाहादारभ्येति ॥ सुतः दशाहं कुर्यात् ॥ पितृव्यतिरिक्तानां पितृव्यभ्रातृपुत्राणां द्वादशाब्दादूर्ध्वं संस्कारं कुर्यात् ॥ [६२५] तदाह बृहस्पतिः—

यस्य न श्रूयते वार्ता यावद्द्वादशवत्सरम् ।
कुशपुत्तलदाहेन तस्य स्यादवधारणम् ॥

तेषामाशौचं त्रिरात्रं ॥ उक्तकालादूर्ध्वमौर्ध्वदैहिके कृते यदि जीवन् समागच्छेत् तदा कथमित्याह बृहन्मनुः—

जीवन् यदि समागच्छेद्घृतकुंभे नियोजयेत् ।
उद्धृत्य स्नापयित्वास्य जातकर्मादि कारयेत् ॥
द्वादशाहं व्रतं कुर्यात् त्रिरात्रमथवास्यतु ।
स्नात्वोद्वहेत्ततो भार्यामन्यां च तदभावतः ॥
अग्नीनाधाय विधिवद्व्रात्यस्तोमेन वा यजेत् ।
अथेन्द्राग्न्येन पशुना गिरिं गत्वा च तत्र तु ॥
इष्टिमायुष्मतीं कुर्यादीप्सितांश्च क्रतूंस्तत इति ॥

अग्नये आयुष्मतेऽष्टाकपालं कुर्यात् य एवाहिताग्नेः पुरोडाशस्तएवानाहिताग्नेश्चरव इति गृह्यप्रायश्चित्तौ ॥ गिरिं गत्वा तत्र द्वादशरात्रं त्रिरात्रं चोपोषणव्रतं ततो जातकर्मादीति कालादर्शात् ॥ एतदेवोक्त स्मृत्यर्थसारे—

दूरे देशान्तरगते जीवद्वार्ता पुनः पुनः ।

पर्यालोच्य जीवद्वार्तायामश्रूयमाणायां पूर्ववयस्के विंशद्वर्षादूर्ध्वं मध्यमवयस्के पञ्चदशाब्दादूर्ध्वं अपरवयस्के द्वादशाब्दादूर्ध्वं चान्द्रायणत्रयं त्रिंशत्कृच्छ्राणि वा कृत्वा पालाशवृंतैः कुशैर्वा प्रतिकृतिं कृत्वा दशाहाशौचोदकपिंडश्राद्धानि कार्याणि ॥ एवं कृते पुनः स आगतश्चेत् घृतकुण्डे निमज्ज्य तस्य जातकर्मादिसंस्कारान् कृत्वा पूर्वपत्न्या विवाहः कार्यः ॥

## इति मृताज्ञाने विधिः ॥

---

## [५२७]अथ अज्ञातमृताहे निर्णयः ॥

तत्र बृहस्पतिः—न ज्ञायते मृताहश्चेत्प्रमीते प्रोषिते सति ।

मासश्चेत्सुपरिज्ञातस्तद्दर्शे स्यान्मृताहिकम् ॥

यदा मासो न विज्ञातो विज्ञातं दिनमेव तु ।

तदा मार्गशिरे मासि माघे वा तद्दिने भवेत् ॥

अषाढे चापि वा कुर्यादिति ग्रन्थान्तरे ॥

गारुडे—दिनमासावविज्ञातौ मरणस्य यदा पुनः ।

प्रस्थानादिनमासौ तु ग्राह्यौ श्राध्धे मयोदितौ ॥

प्रस्थानस्यापि न ज्ञातौ दिनमासौ यदा पुनः ।

मृतिवार्ताश्रुतौ ग्राह्यौ तौ पूर्वोक्तक्रमेण तु ॥
प्रवासमन्तरेणापि स्यातां तौ विस्मृतौ तदा ।
तदानीमपि तौ ग्राह्यौ पूर्ववत्तु मृतादिके ॥

तौ स्मरणदिनमासौ श्रवणमाससंबन्धिनि दर्शे कुर्यात् ॥ तदाह प्रचेताः ॥ अपरिज्ञाते अमावास्यायां श्रवणदिने वेति ॥ मरीचिः—श्राद्धविघ्ने समुत्पन्ने अविज्ञाते मृतेऽहनि ।

एकादश्यां तु कर्तव्यं कृष्णपक्षे विशेषतः ॥ इति ॥

विष्णु—इत्युक्तेन प्रकारेण यः कुर्यान्मृतिवासरम् ।

अविज्ञातमृताहस्य मृतं तं तारयत्यसौ ॥

इति मृताहाज्ञाने निर्णयः ॥

---

## ५२८ अथ संन्यासिमृते निर्णयः ॥

संन्यासिनमधिकृत्य स्मृत्यन्तरात्—

सर्वसङ्गनिवृत्तस्य ध्यानयोगरतस्य च ।
न तस्य दहनं कार्यं नाशौचं नोदकक्रिया ॥ इति ॥

अतो ब्रह्मप्राप्तिबुध्द्या निवृत्तानां यतीनां षोडशश्राद्धानि सपिंडीकरणं च न कार्यं ॥ तथा चोक्तं—

सपिंडीकरणं तेषां न कर्तव्यं सुतादिभिः ।
त्रिदण्डग्रहणादेव प्रेतत्वं नैव जायते ॥

त्रिदण्ड इत्येकदण्डस्याप्युपलक्षणं ॥ तदुक्तं प्रचेतसा—

दण्डग्रहणमात्रेण नैव प्रेतो भवेद्यतिः ।
अतः सुतेन कर्तव्यं पार्वणं तस्य सर्वदा ॥ इति ॥

स्नुत इत्युपलक्षणं॥ सर्वैरधिकारिभिरिति॥ चतुर्विंशतिमतेऽपि—

चतुर्थाश्रमकं गत्वा ब्रह्मविद्यापरायणः।

एकदण्डी त्रिदण्डी वा सर्वसङ्गविवर्जितः॥ इति—

तस्याशौचादि न कार्यमिति शेषः॥ आचारतिलके—

बाले प्रेते च संन्यासे सद्यः शौचं विधीयते।

५२५ स्मृत्यर्थसारे॥ यतीनां त्रिदण्डीनां प्रेतत्वं नास्ति तेषामेकादशेऽन्हि पार्वणं कार्यं॥ दण्डग्रहणात्पूर्वं मरणे तु स्वशाखोक्तविधिना दग्ध्वा उदकपिंडप्रेतश्राद्धसापिंड्यानि कार्याण्येव॥ दण्डग्रहणोत्तरकालमरणे शातातपः—

एकोद्दिष्टं जलं पिंडमाशौचं प्रेतसत्क्रियाम्।

न कुर्यात्पार्वणादन्यद्ब्रह्मीभूताय भिक्षवे इति॥

तथा—एकोद्दिष्टं यतेर्नास्ति त्रिदण्डग्रहणादिह।

सपिंडीकरणाभावात्पार्वणं तस्य सर्वदा॥

इत्येएकोद्दिष्टं निषिध्य प्रचेतसा पार्वणं विहितं॥ उशनास्तु मृतिविषये एकोद्दिष्टनिषेधपूर्वमेकादशाहे पार्वणविधानमाचष्टे॥

एकोद्दिष्टं न कुर्वीत यतीनां चैव सर्वदा।

अहन्येकादशे तेषां पार्वणं तु विधीयते॥

तथा च स्मृतिः—

वहनस्पर्शनादीनां सद्यः शौचं विधीयते।

पदे पदेऽश्वमेधस्य फलं प्राप्नोति पूरुषः॥

यतौ प्रेते न वपनं बन्धूनां गोत्रिणामपि।

नाशौचं नोदकं नाश्रु यतौ न प्रेतसत्क्रिया॥

एकोद्दिष्टं न कुर्वीत यतेश्चैव कदाचन ।

त्रिदण्डधारणात्प्रेत्यं नष्टमाहोशना मुनिः ॥

सपिंडीकरणं तस्य न कर्तव्यं सुतेन तु ।

अहन्येकादशे प्राप्ते पार्वणं तु विधीयते ॥

एतत्सन्निधानविषयं॥ दशाहमध्ये मृतिश्रुतिविषयं वा॥ [६३०]

एकादशाहोर्ध्वं यतेः पितुर्मृतिश्रवणे श्रुत्यनन्तरं न किंतु श्रवणादारभ्य एकादशाहे पारणं कुर्यात् ॥ तदुक्तं—

संन्यासिनः पितुर्मृतिश्रुतेरेकादशेऽहनि ।

पुत्रादिः पार्वणं श्राद्धं कुर्यान्न श्रुत्यनन्तरम् ।

एवं श्रीधरान्हिकेऽपि ॥ तथा बौधायनः ॥

ब्रह्मनिष्ठे च संन्यस्ते पितर्युपरते श्रुते ।

अहन्येकादशे प्राप्ते पार्वणं तु विधीयते ॥

तथा च संन्यासिमृतौर्ध्वविधानपद्धतावुदाहृता श्रुतिरपि ॥ स्नानं पुत्रस्यावभृथबुद्ध्या नाशौचोदकक्रियाद्यर्थं ॥ सोऽपि वार्तां श्रुत्वा स्नानार्थं गच्छन्नागच्छन्विवाहाद्युत्सववद्गन्धमाल्यतांबूलमुपभुज्य महान्तमुत्सवं कुर्यात् स्वशक्त्यनुसारेण ॥ सन्निहितश्चेदहन्येकादशे प्राप्ते असान्निहितश्चेच्छ्रवणानन्तरमेकादशेऽन्हि पार्वणश्राद्धं कुर्यात् ॥ पितरं विष्णुरूपं ध्यात्वैवेति ॥ [६३१]शौनको विशेषमाह—

नारायणबलिं कुर्यात्पूजयेत्तत्र वै यतीन् ।

द्वादशाहमनध्यायं पुत्रः कुर्यात्समाहितः ॥

एतेन इदमुक्तं भवति ॥ संन्यासिनि पितरि मृते आशौचाद्यभावेऽप्येकादशाहविहितपार्वणश्राध्धकरणादर्वाक् संन्या-

सिसंप्रदानद्वारा तर्पणादिकं न कार्यं पुत्रेणेति ॥ संन्यासिमृतिश्रवणादप्यारभ्य एकादशाह एव पार्वणविधानबलादिति ॥ यथा यतौ मृतावौर्ध्वदैहिकप्रत्याम्नाये विहितमेकादशाहे पार्वणश्राद्धं प्राकृतं विश्वजनीनमौर्ध्वदैहिकं सर्वं निवर्तयति ॥ यथा वाजपेये रथघोषेण माहेन्द्रं स्तोत्रमुपाकरोतीत्यत्रोपाकरणे साधनतया विनियुक्तो रथघोषः प्राकृतं सर्वं साधनं निवर्तयति तद्वत् ॥ अतो विहितश्राध्धाकरणे तदुद्देशेन किंचिन्न कार्यं ॥ अथ संन्यासिनां देहपातानन्तरं नारायणबलिविधान मुक्तं तस्यां पध्धतौ ॥ [६३२] यथा गोलिणो वा संबन्धिनः शिष्या वा पुत्रा वा स्वात्मनो वृध्धिकामा द्वादशेऽन्हि दशम्यां तिथावतीतायामन्यस्मिन्कस्मिंश्चिद्दिवसे नारायणबुद्ध्या सिद्धिं प्राप्ते कृतकृत्ये संन्यासिनि इमं नारायणबलिं एकादशेऽहनि द्वितीये दिवसे वा कुर्युः ॥ तत्र सन्यासिप्रमुखाब्राह्मणास्तेषामभावे सदाचारा गृहस्था वा त्रयोदशावराः सत्यां शक्तौ शतसहस्रादयो वा तेष्वेकं विश्वरूपमहाविष्णुबुद्ध्या अपरास्तु केशवादिमूर्तिबुद्ध्या केशव नारायण माधव गोविन्द विष्णु मधुसूदन त्रिविक्रम वामन श्रीधर हृषीकेश पद्मनाभ दामोदर पृथक्पृथक्पुरुषसूक्तेन षोडशोपचारैः समभ्यर्च्य पायसप्रधानं महोपहारं दत्वा ब्राह्मणानां व्यासपूजावत्सर्वं कृत्वा प्रणम्य विज्ञापयति ॥ अहं ब्रह्म भोक्ता ब्रह्म अन्नं ब्रह्मैव ब्रह्म ब्रह्म इति पठन् ॥

ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥

इति गीतापाठः॥ स्वशक्त्यनुसारेण वसनालङ्करणादिकं दत्वा गोपीचन्दनकटिसूत्रकौपीनादिकं च ॥ भोजनान्ते समाचम्य तैः सर्वैरपि तत्रैव स्थातव्यं ॥ कर्ता पठत्

ब्रह्मैव जायते सृष्टिः सृष्टं ब्रह्म भविष्यति ।
तस्मात्संसारिणः सर्वे ब्रह्मैवेति सुनिश्चितम् ॥
ब्रह्महव्यं भवेत्सृष्टिर्ब्रह्मैव व्यक्ततां गतम् ।
यत्किंचित्पूज्यते लोके तेन ब्रह्मैव पूजितम् ॥
देवदत्ततया कश्चिद्ब्रह्मैव विकृतिं गतः ।
पुनर्ब्रह्मैव संजातो ब्रह्म ब्रह्म तदुच्यते ॥

६३३ ततः संन्यासिभिर्ब्राह्मणैश्च ब्रह्म ब्रह्म कथयित्वा उत्थातव्यमिति ॥

दद्याच्च दक्षिणां शक्त्या नमस्कुर्वन्विसर्जयेत् ।
यतौ मृते विष्णुबलिरथश्राद्धं च पार्वणम् ॥ इति ॥

ब्रह्मीभूते यतावेतद्विधानं ॥ तथा स्मृत्यर्थसारे–

संन्यासस्य विधिं कृत्स्नं प्रवक्ष्याम्यनुपूर्वशः ।
गोविन्दराजस्यमतं बौद्धायनमतं तथा ॥
एकोद्दिष्टविधानेन कुर्याच्छ्राद्धानि षोडश ।
अग्निमान्पार्वणेनैव विधिना निर्वपेत्स्वयम् ॥
कृच्छ्रांस्तु चतुरः कृत्वा पावनार्थमनाश्रमी ।
आश्रमी चेत्तप्तकृच्छ्रं तेनासौ योग्यतां व्रजेत् ॥
दैवं तु वार्षिकं दिव्यं पित्र्यं मातृकमानुषे ।
भौतिकं चात्मनश्चान्ते त्वष्टौ श्राद्धानि निर्वपेत् ॥

इत्यादिकं सर्वं संन्यासग्रहणविधिमभिधाय ततः संन्या-

सिति मृते चोक्तं ॥

[५३४] एकोद्दिष्टं यतेर्नैव सपिंडीकरणं न च ।

अहन्येकादशे प्राप्ते पार्वणं तु विधीयत इति ॥

सपिंडनमेकोद्दिष्टं च निषिद्ध्य पार्वणं विहितं ॥ तद्यस्य स्थाने विधीयते तत्तस्य धर्माल्लभते इति स्थानप्रमाणेन सपिंडीकरणार्थं संयोजनधर्मं एकोद्दिष्टं च विहाय अन्यांस्तद्धर्माल्लभते ॥

दण्डग्रहणमात्रेण नैव प्रेतो भवेद्यतिः ।

प्रेतत्वाभावाद्यतिप्रमुखं पार्वणं सुतेन कार्यं ॥ अथ एकादशाहे सपिंडनश्राद्धविधानाभावेन न स्थानापत्तिरिति नाशङ्कनीयं ॥ एकादशाहेऽपि सपिंडनश्राद्धविधानवचनानि सन्ति ॥ ननु पौत्रैरपि इदं पार्वणं स्वपितृपूर्वकं कार्यं—

पितामहे तु वै श्राद्धे पितरं न परित्यजेत् ।

इति वचनात् ॥ न ॥ इदं वचनं यत्याश्रमान्वितपितामहमृतिनिमित्तैकादशाहपार्वणश्राद्धव्यतिरिक्ते तत्प्रत्याब्दिकश्राद्धादौ सावकाशं ॥ सावकाशनिरवकाशयोर्निरवकाशविधिर्बलवान् इति परिभाषा ॥ [५३५] पौत्रैरपीदं पार्वणं पितामहयतिप्रभृति कर्तव्यं ॥ किं च ॥ पुनः स्थानप्रमाणादपि यतेरूर्ध्ववर्त्तिभ्यां सहकार्यं सपिंडनश्राद्धवत् ॥ सपिंडनश्राद्धमेकेनैव कर्तव्यताशङ्का तु यतेः प्रेतत्वाभावान्न कार्या ॥ प्रेतश्राद्धोपक्रमे एकेनैव कार्याणीत्युक्तत्वात् ॥ इति निर्णयः ॥

अस्य फलमाहापस्तंबः—

त्यक्त्वा कर्माण्यशेषाणि य आस्ते संयतो यतिः ।

तच्छरीरस्य पञ्चत्वे ब्रह्मीभूतस्य चेद्यतेः ॥
व्यूहपूजादिकं कर्म कारयेत्कुरुतेऽथवा।
तयोः पुण्यं फलं तुल्यं शृणु वक्ष्याम्यशेषतः ॥
प्रतिलोकाधिपस्थाने प्रतिमन्वन्तरं वसेत्।
ततो विष्णुपुरं प्राप्य कल्पकोटिशतं वसेत्।

इति यतौ मृते कर्तव्यतानिर्णयः ॥

---

१३१ ॥ अथ अनुपनीतस्याधिकारउच्यते ॥

पित्रोरनुपनीतोऽपि विदध्यादौरसः सुतः।
और्ध्वदैहिकमन्ये तु संस्कृताः श्राद्धकारिणः ॥

ओरसपुत्रास्त्वनुपनीतोऽपि कुर्यात् ॥ अन्येतूपनीता एव ॥

न चाभिव्याहरेद्ब्रह्म यावन्मौंजी न बध्यते।
मंत्राननुपनीतोऽपि पठेद्वैदिक ओरस इति

सुमन्तुस्मृतेः ॥ अन्ये भ्रातृपुत्रादयः संस्कृता उपनीताः श्राद्धाधिकारिणः स्युः ॥ पुत्रो जन्मतः अधिकारी ॥

चौलादाद्याब्दिकादर्वाक्कुर्यात्तु पितृमेधिकम् ॥ इति

आब्दिकात्प्रथमवर्षात्पूर्वं ॥ तदाह सुमन्तुः—

पुत्रस्योत्पत्तिमात्रेणसंस्कुर्यादृणमोचनात्।
पितरं नाब्दिकाच्चौलात्पितृमेधेन कर्मणा ॥
तृतीयवत्सरादूर्ध्वं मंत्रवत्तत्समाचरेत्।

पुनः सुमन्तुः—अनुपनीतोऽपि कुर्वीत मंत्रवत्पैतृमेधिकम्।
यद्यसौ कृतचौलः स्याद्यदि स्याच्च त्रिवत्सरः ॥

६३७ तथा ॥ कृतचूडस्तु कुर्वीत उदकं पिंडमेव च ।
स्वधाकारं तु कुर्वीत वेदोच्चारं न कारयेत् ॥
प्रमीतपितृको बालो अनादिष्टव्रतस्तु यः ।
स्वधाशब्देन सा तस्य युज्यते पैतृकी क्रिया ॥
नह्यस्य विद्यते किञ्चित्कर्म आमौञ्जिबन्धनात् ।
न चाभिव्याहरेद्ब्रह्म स्वधानिनयनादृते ॥
स्वधानिनयनं मातापित्रोः श्राद्धं ॥ व्याघ्रः—
कृतचूडोपनीतस्तु पित्रोः श्राद्धं समाचरेत्
उदाहरेत्स्वधाकारं न तु वेदाक्षराण्यसौ ॥
वेदाक्षरानुच्चारणं एतदकृतचूडविषयं ॥ कात्यायनः—
असंस्कृतेन पत्न्या च ह्यग्निदानं समंत्रकम् ।
कर्तव्यमितरत्सर्वं कारयेदन्यमेव हि ॥ इति ॥
स्कन्दपुराणे—यज्ञेषु मंत्रावत्कुर्यात्कर्म पत्नी यथाविधि ।
तदौर्ध्वदैहिके सा हि मंत्रार्हा संस्कृतास्तथा ॥
यत्तु—सर्वाभावे स्त्रियः कुर्युः स्वभर्तॄणाममंत्रकम् ।
अमंत्रकमिति तदधर्म्यासुरादिविवाहोढस्त्रीविषयं ॥

इत्यनुपनीताधिकारः ॥

---

## अथ विधवाश्राद्धनिर्णयः ॥

६३८ अथ विधवा स्त्री पत्युः श्राद्धं समंत्रकं कुर्यात् ॥ तदुक्तं—
पुत्राभावे पतिश्राद्धं पत्नी कुर्यात् समंत्रकम् ।
समंत्रकमिति वेदमंत्रान्यमंत्रसहितं स्त्रीणामुपनयना-

भावेन वेदमंत्राधिकाराभावात्॥ तद्विषये गरुडपुराणं॥ स्त्रीशूद्राणाममंत्रकं ॥

अपसव्यं कथं स्त्रीणां वामप्रावरणं च यत् ।

इति कारिकायां॥ स्त्री भर्तुः पार्वणं कुर्यात्॥ तदाह सुमन्तुः—

अपुत्रे संस्थिते कर्ता न भवेच्छ्राद्धकर्मणि ।
तस्य पत्न्यपि कुर्वीत सापिंड्यं पार्वणं तथेति ॥

ननु॥ अपुत्रा ये मृताः केचित् स्त्रियो वा पुरुषोऽपि वा ।
तेषां सपिंडनाभावादेकोद्दिष्टं न पार्वणम् ।

इति निषेधात् कथं पार्वणमिति ॥ निषेधः स्त्रीव्यतिरिक्तकर्तृविषयः॥ पत्नीकर्तृत्वे लौगाक्षिणा पार्वणमुक्तं ॥

सर्वाभावे स्वयं पत्न्यः स्वभर्तृणाममंत्रकं ।
सपिंडीकरणं कुर्युस्ततः पार्वणमेव वा ॥

पत्न्याः पुत्रवदधिकारः ॥ स्मृत्यन्तरात् –

अपुत्रा पुत्रवत्कुर्यात्पुत्रवत्यापि भर्तरि ।
श्राद्धं पिंडं जलं चैव जलमेव तु पुत्रिणी ॥

प्रत्याब्दिकं पुत्रवत्कुर्यात्॥ पार्वणविषये विधवा तु सर्वदा चतुर्भिः पार्वणैः श्राद्धं कुर्यात्॥ ६३५ तदुक्तं स्मृतिसंग्रहे—

चत्वारः पार्वणाः प्रोक्ता विधवायाः सदैव हि ।
स्वभर्तृश्वशुरादीनां मातापित्रोस्तथैव च ॥
ततो मातामहानां च श्राद्धदानं तथानघेति ।

तथा—श्वश्रूणां च विशेषेण मातामह्या अपि स्मृतम् ॥

विशेषेण कालतीर्थविशेषेणेत्यर्थः॥ विधवायाः पूर्वं मातुः पार्वणं पश्चात्पितुरिति कथं ॥ मातापित्रोरित्यत्र यद्येकशे-

षः स्यात्तदा क्रमो न प्रतीयते मातापित्रोरिति मातृशब्दस्य पूर्वं श्रवणात् ॥ पाठक्रमादेवार्थक्रमोऽवगम्यते ॥ अग्निहोत्रं जुहोति यवागुं पचति इतिवद्विरुद्धत्वाभावात् ॥ संबन्धेऽपि क्रमापेक्षायां प्रतीतक्रमानुरोधेनैव प्रथमं माता श्राद्धभाक् ततः पितेति गम्यते ॥ किं च ॥ शोणितातिरेकेण स्त्री भवतीति श्रुत्या मातुरवयवानां स्त्रियामाधिक्यप्रतिपादनादेव स्त्रीकर्तृत्वे मातापित्रोर्मातुरेव प्रथमं श्राद्धदानं युक्ततरं ॥ विस्तारासंभवे विधवा पार्वणद्वयं कुर्यात् ॥

१४० तदुक्तं स्मृतिसमुच्चये—

भर्तृहीना तु या नारी कुर्वीत पार्वणद्वयम् ।
एकं तु पितृपक्षस्य भर्तृपक्षस्य चापरम् ॥

यदा तु अपुत्रा पत्नी पत्युः प्रत्याब्दिकश्राद्धे स्वयमेव कर्त्री रजस्वला भवति तदा पञ्चमेऽहनि श्राद्धं कुर्यात् ॥

तदाह गौतमः—अपुत्रा तु यदा पत्नी संप्राप्ते भर्तुराब्दिके ।
रजस्वला भवेत्सा तु कुर्यात्तत्पञ्चमेऽहनीति ॥

तथा च—आब्दिके समनुप्राप्ते यस्य भार्या रजस्वला ।
पञ्चमेऽहनि तच्छ्राद्धं न तत्कुर्यान्मृतेऽहनीति ॥

यस्य मृतस्य कर्त्री भार्या रजस्वलेत्यर्थः ॥ यत्तुवचनं—

सप्ताहात्पितृदेवानां भवेद्योग्या व्रतार्चने ।

इति सप्ताहपर्यन्तमशुचित्वमुक्तं तद्रजोनिवृत्त्यभावविषयं॥ रजोनिवृत्तौ तु पञ्चमेऽहन्येव योग्यतेति ॥ तदुक्तं मनुना—

स्पृश्या भर्तुश्चतुर्थेऽन्हि स्नानेन स्त्री रजस्वला ।

देवे कर्मणि पित्र्ये च पञ्चमेऽहनि शुध्यतीति ॥

अतः कृतिनिमित्तभूता पत्नी भर्तुः श्राद्धं पञ्चमेऽहनि कुर्यादिति सिद्धं ॥

इति विधवाश्राद्धनिर्णयः ॥

---

## ॥ अथ रजस्वलाभार्यस्याधिकारः ॥

[६४१] अथ पुत्रादिः कर्त्ता स्वभार्यायां रजस्वलायामपि पित्रादीनां प्रत्याब्दिकं कुर्यात् ॥ तदुक्तं कालादर्शे—

रजस्वलाङ्गनोऽनग्निर्विदेशस्थोऽथवाब्दिके ।
दर्शादाविव नामेन त्वन्नेन श्राद्धमाचरेत् ॥

रजस्वला अङ्गना यस्य स तथाविधो द्विजः । आब्दिके अन्नेनैव श्राद्धं कुर्यात् ॥ तथा लौगाक्षिः—

ऋतुमत्स्वपि दारेषु विदेशस्थोऽप्यनग्निकः ।
अन्नेनैवाब्दिकं कुर्याद्धेम्ना नामेन न क्वचित् ॥

अन्नेन पक्वान्नेन । तथा—

श्राद्धविघ्ने द्विजातीनामामश्राद्धं प्रकीर्तितम् ।
अमावास्यादिनियतं मासं संवत्सराहते ॥

मासं मासिकं। संवत्सरमाब्दिकं। ऋतुमद्भार्यादिना श्राद्धविघ्ने सति आमश्राद्धमुक्तं ॥ एषु वचनेषु दर्शमासिकातिरिक्तमाब्दिकादिकमन्नेन सिद्धान्नेन कुर्यादिति प्रतिपादितं ॥

[६४२] ननु—आपद्यनग्नौ तीर्थे च प्रवासे पुत्रजन्मनि ।
आमश्राद्धं प्रकुर्वीत यस्य भार्या रजस्वला ॥

तथा—आर्तवे देशकालानां संप्लवे समुपस्थिते।

आमश्राद्धं द्विजैः कार्यं शूद्रैः कार्यं सदैवहि ॥

इति कात्यायनव्याघ्रपादवचनाभ्यां पुत्रादिकर्तॄणां मृताहादावामश्राद्धं प्रतीयते ॥ मैवं ॥ मृताहादौ सिद्धान्नश्राद्धाभिधायकविशेषवचनबलात् सामान्यवचनयोरनयोराब्दिकादिव्यतिरिक्तविषयत्वमध्यवसीयते इत्यविरोधः ॥ किं च ॥ मरीचिना क्षयाहे आमश्राद्धस्य निषेध उक्तः ॥

अनग्निश्च प्रवासी च यस्य भार्या रजस्वला।

आमश्राद्धं प्रकुर्वीत न तत्कुर्यान्मृतेऽहनीति ॥

अतः सिध्धान्नेनैव क्षयाहश्राध्धं कर्तव्यं ॥

आपन्नोऽप्याब्दिकं नैव कुर्यादामेन च क्वचित्।

कार्ष्णाजिनिनापि प्रत्याब्दिकमामेन निषिध्धं ॥

इति रजस्वलाभार्यस्य निर्णयः ॥

[५४३] सूतकादिविघ्नान्तरितमाब्दिकं कालान्तरेऽपि अन्नेनैव कुर्यात् ॥ तदाह मरिचिः—

श्राध्धविघ्ने समुत्पन्ने त्वविज्ञाते मृतेऽहनि।

कुर्यादन्नेन कृष्णायामेकादश्यां विधुक्षये ॥ इति ॥

कार्ष्णाजिनिरपि—

आपन्नोऽप्याब्दिकं नैव कुर्यादामेन कर्हिचित्।

अन्नेनेदममायां तु कृष्णे वा हरिवासरे ॥ इति ॥

देशभङ्गव्याध्यादिनिमित्तापदान्तरितमाब्दिकं वचनप्रतिपादितकालेष्वन्नेन कुर्यात् ॥

आपद्यपि च नामेन तन्मासे हरिवासरे।

कृष्णे त्विन्दुक्षये वापि कुर्यादन्नेन वार्षिकम् ॥

इति निर्णयः ॥ इदं प्रत्याब्दिकादिश्राध्धं सिध्धान्नेन विहितमपि तत्र ग्रहणसंभवे ॥ भोक्तृद्विजाभावे द्विजोऽपि आमश्राध्धं कुर्यात् ॥

तदाह गोभिलः—दर्शे रविग्रहे पित्रोः प्रत्याब्दिकमुपस्थितम् ।
अन्नेन हेम्ना वा कुर्यात्कुर्यादामेन वा सुतः ॥

दर्श इति पौर्णमास्युपलक्षणं ॥ [६४४] यद्यपि चन्द्रसूर्यग्रहे नाद्यादिति ग्रहणे भोजननिषेधस्तथापि भोक्तुर्दोषः दातुरभ्युदय इति मिताक्षरायां ॥ अमावास्या मासिकं मृताहश्च भोक्तृद्विजसंभवे अन्नेनैव कार्याणि ॥ असंभवे आमेन हेम्ना वेति निर्णयः ॥

---

## अथ आमश्राद्धकालाः ॥

बोधायनः—संक्रमेऽन्नद्विजाभावे प्रवासे पुत्रजन्मनि ।
आमश्राध्धं संग्रहे च द्विजः शूद्रः समाचरेत् ॥

शूद्रस्य तु सदैव ॥ तथा च सुमन्तुः—
पाकाभावेऽधिकारः स्याद्विप्रादीनां नराधिप ।
अपत्नीनां महाबाहो विदेशगमनादिभिः ॥
सदा चैव तु शूद्राणामामश्राध्धं विदुर्बुधाः ।

उशनाः—आपद्यनग्नौ तीर्थे च चन्द्रसूर्यग्रहे तथा ।
आमश्राध्धं द्विजो दद्याच्छूद्रो दद्यात्सदैव हि ॥
स्त्री शूद्रः स्वपचश्चैव जातकर्मणि चाप्यथ ।
आमश्राध्धं तथा कुर्याद्विधिना पार्वणेन तु ॥ इति ॥

स्वपचः स्वयं पचतीत्यपत्नीक इत्यर्थः ॥ आमश्राध्धं तु पक्वान्नस्थाने आममात्रं विशेषः ॥ [५४५]व्यासः—

सिध्धान्ने तु विधिर्यः स्यादामश्राध्धेऽप्ययं विधिः ।
आवाहनादि सर्वं स्यात्पिंडदानं च भारत ॥
दद्याच्च द्विजजातिभ्यः शृतं वा यदि वाशृतम् ।
तेनाग्नौकरणं कुर्यात्पिंडांस्तेनैव निर्वपेत् ॥

जमदग्निः—आमश्राध्धं यदा कुर्याध्धस्तेऽग्नौकरणं भवेत् ।
हस्तेऽग्नौकरणं निरग्निकविषयं ॥

आमं ददातु कौन्तेय दद्यादामं चतुर्गुणमिति ॥

पुरुषाहारापेक्षया॥ व्यासः॥ द्विगुणं अशक्तविषयं समं वेति॥

मरीचिः—आवाहने स्वधाकारे मंत्रान्जह्याद्विसर्जने ।
अन्यकर्मणि मंत्राः स्युरामश्राध्धविधिः स्मृतः ॥

गालवः ॥ आमश्राध्धं तु पूर्वाण्हे ॥ सुमन्तुः—

न पक्वं भोजयेद्विप्रान्सच्छूद्रोऽपि कदाचन ।
भोजयेत्प्रत्यवायी स्यान्न च तस्य फलं भवेत् ॥
मध्यान्हात्परतो यस्तु कुतुपः स उदाहृतः ।
आममात्रेण तत्रैव पितृणां दत्तमक्षयम् ॥

इति शूद्रविषयं ॥ आमश्राद्धं तु पूर्वाण्हे इति द्विजविषयम् ॥

इत्यामश्राद्धनिर्णयः ॥

---

[५४६] अथ स्त्रीणां पृथक् श्राद्धं ॥

स्त्रीणां क्षयाहादिव्यतिरिक्तश्राद्धेषु पत्या सहैव श्राद्धं कार्यं ॥ तदाह जातूकर्ण्यः—

क्षयाहं वर्जयित्वैकं स्त्रीणां नास्ति पृथक्क्रिया ।
केचिदिच्छन्ति नारीणामन्यत्रापि महर्षयः ॥

अन्यत्राष्टकादिष्वपि ॥ तदुक्तं—

अन्वष्टक्यं तथा वृद्धिं मातुःश्राद्धं मृतेऽहनि ।
एकोद्दिष्टं तथा मुक्त्वा स्त्रीणां नापि पृथग्भवेत् ॥
वृद्धौ प्रत्याब्दिके श्राद्धे गयायामष्टकासु च ।
पितामह्यादिभिः सार्धं मातुः श्राध्धं समाचरेत् ॥

शातातपः—नान्दीमुखेऽष्टके श्राध्धे गयायां च मृतेऽहनि ।
पितामह्यादिभिः सार्धं मातृश्राध्धं समाचरेत् ॥

कार्ष्णाजिनिः—अन्वष्टकासु वृध्धौ च गयायां च मृतेऽहनि ।
मातुः श्राध्धं पृथक्कुर्यादन्यत्र पतिना सह ॥

मातुरिति स्त्रीणामुपलक्षणं ॥ मातृपितामहीप्रपितामहीत्यर्थः ॥ मृताहे तु मातुरेव ॥ [१४७] स्मृत्यन्तरे—

अन्वष्टकासु नवभिः पिंडैः श्राध्धमुदाहृतम्
पित्रादिमातृमध्यस्थं ततो मातामहान्तिकम् ॥

नवभिः पिंडैरिति नवपिंडप्राधान्याभिप्रायपरं ॥ अत्र मातृपिंडाः दर्शादिवत् नत्वेकधर्मेण भवन्ति किं तु प्राधान्येनेत्यर्थः ॥ यच्च केनचिदुक्तं अत्रानेकमातृत्वे द्विपितृकश्राध्धवत् द्वित्र्याद्युद्देशेन मातृपिंड एक एव देयः ॥ मातृणां प्रत्येकं पिंडदाने तु नवसंख्याधिकापिंडत्वेन अन्वष्टक्य भङ्ग इति ॥ एतद्दर्शादावदृष्टपिंडिकाविधानशाखामवलंब्य व्याख्यातं तच्छिष्टाचारविरुध्धं ॥ शिष्टैस्तत्र सापत्नमातुः पृथगेकोद्दिष्टं पिंडश्च क्रियते ॥ किं च ॥ मातृप्राधान्ये त्वष्टकाश्रा-

ध्वे मातामह्यादेः पिंडानामपि निषेधाभिधानमसमञ्जसं ॥ पिंडान्पश्चिमेन तत्पत्नीनामिति शाङ्खायनोक्तगृह्यस्मृतिविरुध्धत्वात् ॥ अपि च नवदैवत्य श्राध्धोपलक्षणार्थं पिंडशब्दप्रवृत्तेः सामान्यविशेषन्यायोऽपि निरस्तः ॥ अत्र सापत्नमातुरेकोद्दिष्टं ॥ ५४८ तदाह जातूकर्ण्यः—

सापत्नमातुः कुर्वीत एकोद्दिष्टं न पार्वणमिति ॥

तथा महालये मातृणां श्राध्धं पितृभिः सह पृथग्वा कुर्यात् ॥ तदुक्तमपरार्के ॥ गयामहालयादौ तु पृथक् सह वा भर्तृभिरिति ॥ स्मृत्यर्थसारे ॥ तत्र मातृश्राध्धं पृथगुक्तं ॥ मातामहानां सपत्नीकमेव ॥ अन्यत्राप्युक्तं ॥ मातृमध्यं महालये॥

तथा—वृध्धावादौ गये चान्त्ये मध्ये त्वन्वष्टकासु च ।

मातृश्राध्धं पृथक्कुर्यान्न तत्र पतिना सहेति ॥

अन्वष्टकाश्राध्धं मातृणां सदैवतं ॥ तदुक्तं—

पितृणामष्टकाश्राध्धं न स्त्रीणां च सदैवतम् ।

वृध्धावदैवतं तासां पितृणां च सदैवतम् ॥

अन्वष्टकास्वष्टकावद्दैवपूर्वमेव ॥ मात्रे पितामह्यै प्रपितामह्यै च ब्राह्मणान् भोजयेदिति ॥ अत्रमात्रादित्रयग्रहणात् अष्टकायां पितृपार्वणं विना केवलमातृपार्वणमित्युक्तं

५४९ तथा च स्मृतिमञ्जर्यां—

मातृणामेव तद्यस्मान्मातृश्राद्धं तदुच्यते । इति ॥

तच्चैकं पार्वणं जीवत्पितृकस्य युक्तं ॥ शाकेनापरपक्षमतिक्रामेदिति वचनादपरपक्षान्वष्टकायां श्राद्धं निरग्नेरपि नियतं ॥ अन्यास्वनियतं ॥ साग्नेः पिंडपितृयज्ञोत्तराविधानात् ॥

सर्वासु नियतं ॥ श्वोऽन्वष्टक्यं पिंडपितृयज्ञावृतेति ॥ जीवत्पि-
तृकस्याष्टकाधिकाराभावेऽपिअस्मिन्मातृश्राद्धेऽधिकारः ॥ अन्व-
ष्टकायां मातृश्राद्धं पृथक्कुर्यादिति वचनात् ॥

इति मातृणां पिथक्श्राद्धनिर्णयः ॥

—*—

## [६५०] अथ जीवत्पितृकश्राद्धं ॥

तत्र—सपितुः पितृकृत्येषु अधिकारो न विद्यते ।
न जीवन्तमतिक्रम्य किंचिद्दद्यादिति श्रुतेरिति ॥

कात्यायनवचनेन जीवत्पितृकस्य श्राध्धाधिकारो निषि-
ध्धोऽपि गृह्यपरिशिष्टे तदपवाद उक्तः ॥

यथा—उद्वाहे पुत्रजनने पित्र्येष्ट्यां सौमिके मखे ।
तीर्थे ब्राह्मणआयाते षडेते जीवतः पितुः ॥
पित्र्येष्ट्यां पितृयज्ञे च वृध्धौ मातुर्मृतेऽहनि ।
विप्रसंपादि तीर्थेषु सोऽपि श्राध्धं समाचरेत् ॥

मैत्रगृह्यपरिशिष्टे—महानदीषु सर्वासु तीर्थेषु च गयामृते ।
जीवत्पिता तु कुर्वीत श्राध्धं पार्वणधर्मवत् ॥

तथा मातरि मृतायां प्रासङ्गिकगयाप्राप्तौ कुर्याच्छ्राध्धं ॥

तदुक्तं—अन्वष्टके गयाप्राप्तौ सत्यां यच्च मृतेऽहनि ।
मातुः श्राध्धं सुतः कुर्यात्पितर्यपि च जीवति ॥

तथा पितरि पातित्यादिदोषयुक्ते संन्यस्ते वा उक्तका-
लातिरिक्तकालेष्वपि श्राध्धं कुर्यात् ॥ [६५१] स्मृत्यन्तरात्—
ब्राह्मणादिहते ताते पतिते सङ्गवर्जिते ।
येभ्य एव पिता दद्यात्तेभ्य एव स्वयं सुतः ॥

सुमन्तुः—न जीवत्पितृकः कुर्याच्छ्राद्धमग्निमृते द्विजः ।
येभ्य एव पिता दद्यात्तेभ्यः कुर्वीत साग्निकः ॥
साग्निकः आहिताग्निरनाहिताग्निरपि ॥
अनग्निकोऽपि कुर्वीत जन्मादौ वृध्दिकर्मणि ।
येभ्य एव पिता दद्यात्तानेवोद्दिश्य पार्वणम् ॥
मनुना विशेष उक्तः—
ध्रियमाणे तु पितरि पूर्वेषामेव निर्वपेत् ।
*विप्रे यद्वापितं श्राध्दे स्वकं पितरमाशयेत् ॥
पिता यस्य तु वृत्तः स्याज्जीवेद्वाथ पितामहः ।
पितुः स नाम संकीर्त्य कीर्तयेत्प्रपितामहम् ॥
पितामहो वा तच्छ्राद्धं भुञ्जीतेत्यब्रवीन्मनुः ।
तथा—साग्निकस्तु न कुर्वीत जीवति प्रपितामहे ।
इति सुमन्तुवचनेन पितृपितामहयोर्द्वयोर्जीवतोः पूर्वोक्तेषु निमित्तेषु श्राद्धं कार्यमित्यङ्गीकृतं ॥ तथा—
पितुर्या देवताः प्रोक्तास्ता एवात्रापि देवताः ।
तथा चात्र विशेषः स्मृत्यन्तरे—
कुरुते तु यदा पुत्रः श्राद्धं पितरि जीवति ।
पितामहं समारभ्य यजेन्मातामहान्स्वकान् ॥

इति जीवत्पितुः श्राद्धं ॥

---

* विप्रवदिति पाठान्तरं ॥

## ६५२ अथ जीवत्पितुः श्राद्धनिषेधः ॥

लौगाक्षिः–आमश्राध्धं गयाश्राध्धं श्राध्धं चापरपक्षिकम् ।
न जीवत्पितृकः कुर्यात्तिलैः कृष्णैश्च तर्पणम् ॥
क्रतुरपि–अष्टकासु च संक्रान्तौ मन्वादिषु युगादिषु ।
चन्द्रसूर्यग्रहे पाते स्वेच्छया पूज्ययोगतः ॥
जीवत्पिता नैव कुर्याच्छ्राध्धं काम्यं तथाखिलम् ॥
आमश्राध्धं गयाश्राध्धमिति तु श्राध्धोद्देशेन गयां गत्वा तत्र श्राध्धं न कर्तव्यमित्येवं परं ॥

इति जीवत्पितुर्निषेधः ॥

---

## अथार्यप्रातिपच्छ्राद्धं ॥

जीवत्पितृकः शुक्लाश्विनप्रतिपदि मातामहश्राध्धं कुर्यात् ॥
तदुक्तं–प्रतिपद्याश्विने शुक्ले दौहित्रस्त्वेकपार्वणम् ।
श्राध्धं मातामहं कुर्यात्सपिता सङ्गवे सदा ॥
तथा–गर्भच्युतोऽपि दौहित्रः कुर्यात्पितरि जीवति ।
श्राध्धं मातामहानां च पक्षान्तादपरेऽहनि ॥
तथा–मातुः पितरमारभ्य त्रयो मातामहाः स्मृताः ।
तेषां तु पितृवच्छ्राध्धं कुर्युर्दुहितृसूनव इति ॥

इति आर्यप्रातिपच्छ्राद्धं ॥

---

## ६५३ अथ श्राद्धदिने द्रव्याभावे तु ॥

पिंडमात्रं प्रदातव्यमभावे द्रव्यविप्रयोः ।
श्राध्धेऽहनि तु संप्राप्ते भवेन्निरशनोऽपि वा ।

स्मृत्यन्तरे—पात्राभावे तु कृत्वैव पिंडयज्ञविधिं नरैः ।
निर्दिश्याप्यन्नमुध्धृत्य यत्र पात्रं ततो नयेत् ॥

पितृयज्ञविधिः श्राध्धविधिः ॥ अन्यत्रापि—

सर्वाभावे क्षिपेदग्नौ गवे दद्यात्तथाप्सु वा ।
न तु प्राप्तस्य लोपोऽस्ति पैतृकस्य विशेषतः ॥

अतिदरिद्रस्य तर्पणमात्रेण ॥ तिलाद्यभावे तु वृध्धवसिष्ठः—

अग्निना वा दहेत्कक्षं श्राध्धकाल उपस्थिते ।
तस्मिन्नुपवसेदद्भिर्जपेद्वा श्राध्धसंहिताम् ॥

तृणसमूहं कक्षं ॥ विष्णुपुराणे—

सर्वाभावे वनं गत्वा कक्षामूलप्रदर्शकः ।
सूर्यादिलोकपालानामिदमुच्चैः पठेत्तदा ॥
न मेऽस्ति वित्तं न धनं न वान्यत्
श्राध्धोपयोगि स्वपितॄन्नतोऽस्मि ।
तृप्यन्तु भक्त्या पितरौ मयैतौ
भुजौ कृतौ वर्त्मनि मारुतस्य ॥
इत्येतत्पितृभिर्गीतं भाव्यं भावप्रयोजकम् ।
यः करोति कृतं तेन श्राध्धं भवति भारत ॥

इति द्रव्याभावे श्राद्धनिर्णयः ॥

---

## [६५४] अथाशौचातिक्रान्ते श्राद्धकालः

मरीचिः—श्राध्धविघ्ने समुत्पन्ने अविज्ञाते मृतेऽहनि ।
कुर्यादन्नेन कृष्णायामेकादश्यां विधुक्षये ॥

आशौचे तद्गते तस्मिन्ननन्तरादिने भवेत्।

ऋष्यशृङ्ग—आब्दिके चैव संप्राप्ते आशौचं जायते यदि ।
आशौचे तु व्यतिक्रान्ते तस्य श्राध्दं प्रदीयते ॥

आशौचानन्तरकरणासंभवे दर्शे वा कुर्यात्॥तदाह गोभिलः—
देये प्रत्याब्दिके श्राध्दे अन्तरा मृतसूतके ।
आशौचानन्तरं कुर्यात्तन्मासीन्दुक्षयेऽपि वा ॥

[५५५] हारीतः—त्रयोदशेऽन्हि मृतके जन्मन्यकादशे तथा ।
रजस्वला यदा भार्या श्राध्दं कुर्यात्तु पञ्चमे ॥

त्रयोदशेऽन्हि इत्यनन्तरसंबन्धिमृतिविषयं ॥ विप्रकृष्टे तु स्मृत्यन्तरात्—जन्मन्येकादशेऽन्हिस्यान्मृतके द्वादशेऽहनि।
आशौचान्तर्हितं कुर्यादाब्दिकं मनुरब्रवीत् ॥

तथा—एकादशेऽन्हि कर्तव्यमाब्दिकं जातसूतके ।
मृतके द्वादशाहे तु विधिरेष सनातन इति ॥

यत्तु वचनं—स्वगृहे जातकं जातं द्वादशेऽहनि कारयेत् ।
तदिदमनिश्चितमूलत्वादनादृतप्रायं ॥ षट्त्रिंशन्मते—
मासिकाब्दे च संप्राप्ते अन्तरा मृतसूतके ।
वदन्ति शुद्धौ तत्कार्यं दर्शे वापि विशेषतः ॥

तथा—श्राध्दविघ्ने समुत्पन्ने मृते रजसि सूतके ।
तस्यान्ते चैव कर्तव्यमित्येवं मनुरब्रवीत् ॥

व्यासः—श्राध्दविघ्ने समुत्पन्ने अन्तरा मृतसूतके ।
अमावास्यां प्रकुर्वीरन् श्राध्दं चैव मनीषिणः ॥

## इति आशौचातिक्रान्ते श्राद्धनिर्णयः ॥

---

## [६५६]अथ नित्यश्राद्धं ॥

अहरहः श्राध्धस्वरूपं तु भविष्योत्तरात्–

अहन्यहानि यच्छ्राध्धं तन्नित्यमिति कीर्तितम् ।
वैश्वदेवविहीनं तु अशक्तावुदकेन तु ॥ इति ॥

तथा स्मृतिसारे–एकमप्याशयेद्विप्रं पित्रर्थं पाञ्चयाज्ञिके ।
न चैव प्राशयेत्किंचिद्वैश्वदेवं प्रति द्विजम् ॥

न दैवेति विश्वदेवरहितमित्यर्थः ॥ चण्डुनिबन्धे ॥ नित्यश्राध्धमदैवंस्यादिति ॥ तथा स्मृत्यन्तरे ॥ नित्यश्राध्धमदैवमव्रतमब्रह्मचर्यमपिंडं ॥ श्राध्धकल्पे–

नामत्रणं न होमं च नाऽह्वानं न विसर्जनम् ।
न पिंडदानं विकिरं न दद्यादत्र दक्षिणाम्
पर्युषितं न दातव्यं श्राध्धे नैमित्तिके क्वचित् ॥
नित्ये तदभ्यनुज्ञातं शाकभक्ष्यादिकं च यत् ।
गोष्ठीश्राध्धे तथा नित्ये भोजनं बलिपूर्वकम् ॥
इतरेषु च सर्वेषु न बलिर्नैव चाहुतिः ।

[६५७]प्रेतकल्पे–नित्यश्राध्धे तु गन्धाद्यैर्द्विजमभ्यर्च्य शक्तितः ।
सर्वान्पितृगणान्सम्यक् सहैवोद्दिश्य भोजयेत् ॥
आवाहनं स्वधाकारः पिंडाग्नौकरणादिकम् ।
ब्रह्मचर्यादिनियमाः विश्वदेवास्तथैव च ।
नित्यश्राध्धे त्यजेदेतान् भोज्यं चान्नं प्रकल्पयेत् ॥

स्मृत्यर्थसारे ॥ नित्यश्राध्धमदैवं षट्पुरुषं च भवति ॥ तत्र अन्नदेशकालनियमाः कर्तृभोक्तृनियमाश्च न सन्ति नमस्कारेण विसर्जनमिति ॥

तथा–कुर्यादहरहः श्राध्धमन्नाद्येनोदकेन वा ।
शाकमूलफलैर्वापि पितृणां तृप्तिमाहरन् ॥
चमत्कारखण्डे–नित्यश्राध्धं न कुर्वीत प्रसङ्गाद्यत्र सिध्यतीति॥
श्रीरामायणे–इमं ग्रहाण राजेन्द्र इङ्गुदीपिंडमुत्तमम् ॥

इति नित्यश्राद्धं ॥

[६५८] अथ संकल्पश्राद्धं ॥

अशक्त्या पार्वणश्राध्धं यथावत्कर्तुमक्षमः ।
पिंडार्घादिविहीनं तत्संकल्पश्राध्धमाचरेत् ॥
स्मृतिसङ्ग्रहे–अङ्गानि पितृयज्ञस्य यदा कर्तुं न शक्नुयात् ।
संकल्पश्राध्धमेवासौ कुर्यादर्घादिवर्जितम् ॥
आदिशब्दादावाहनादि ॥ आपस्तंबः ॥ संकल्पश्राध्धे आवाहनार्घाग्नौकरणस्वधावाचनानि वर्जयेदिति ॥ तथा–
आवाहनाग्नौकरणं विकिरं पात्रपूरणम् ।
पिंडहीने न कर्तव्यमेतच्छ्राद्धे चतुष्टयम् ॥
पात्रापूरणं अर्घपूरणं ॥ तथा स्मृतिः–
संकल्पं च यदा कुर्यान्न कुर्यात्पात्रापूरणम् ।
नावाहनाग्नौकरणं पिंडांश्चैव न निर्वपेदिति ॥
व्यासः–त्यक्ताग्नेः पार्वणं नैव नैकोद्दिष्टं सपिंडनम् ।
अत्यक्ताग्नेस्तु पिंडोक्तिस्तस्मात्संकल्प्य भोजयेत् ॥
नास्तिक्यात्त्यक्ताग्नेः ॥

इति संकल्पश्राद्धं ॥

## १५५ अथ तीर्थश्राद्धं ॥

अक्षय्यमग्नौकरणं स्वधावाचनमेव च ।
तथावनेजनं पिंडं पुनः प्रत्यवनेजनम् ॥
अन्नसंकल्पनं चैव तीर्थश्राद्धमुदाहृतम् ॥

इति तीर्थखण्डात् ॥ मत्स्यः—

स्नात्वा नदीषु सर्वासु पितृन्देवांश्च तर्पयेत् ।
अकालेऽप्यथवा काले तीर्थश्राद्धं तथा नरैः ॥
प्राप्तैरेव सदा कार्यं कर्तव्यं पितृतर्पणम् ।
तीर्थे च ब्राह्मणं नैव परीक्षेत कथंचन ॥
सक्तुभिः पिंडदानं स्यात्सयवैः पायसेन वा ।
गोधूमानां च पिष्टेन पिण्याकेन गुडेन वा ॥
श्राद्धं तत्र तु कर्तव्यमर्घावाहनवर्जितम् ।
अर्घमावाहनं चैव द्विजाङ्गुष्ठनिवेदनम् ॥
विकिरं तृप्तिप्रश्नं च तीर्थे श्राद्धे विवर्जयेत् ।

इति स्मृत्यन्तरं ॥ तथा—

श्वध्वांक्षगृध्रकाका वा घ्नन्ति दृष्टा न ते क्रियाम् ।

चाण्डाला अपि ॥ षट्त्रिंशन्मते—

आमश्राध्धं यदा कुर्यात्पिंडदानं कथं भवेत् ।
गृहपाकात्समुध्धृत्य सक्तुभिः पायसेन वा ॥
तेनाग्नौकरणं कुर्यात्पिंडांस्तेनैव निर्वपेत् ।

शृतमशृतं वा तेनेति ॥

मुण्डनं चोपवासं च सर्वतीर्थेष्वयं विधिः ।
वर्जयित्वा कुरुक्षेत्रं नैमिषं पुष्करं गयामिति ॥

इति तीर्थश्राद्धनिर्णयः ॥

## ६६• अथ जीवच्छ्राद्धं ॥

कर्त्रन्तरे असति आत्मनः जीवाय स्वयं श्राद्धं दद्यात् ॥ तदुक्तं ब्रह्मपुराणे—

देशकालधनश्रद्धाव्यवसायसमुत्थितः ।
जीविते सति जीवाय दद्याच्छ्राद्धं स्वयं नरः ॥

तद्विधिः पुराणान्तरात्—

कृतोपवासः सुस्नातस्त्रयोदश्यां समाहितः ।
कर्त्तारमथ भोक्तारं विष्णुं सर्वेश्वरं यजेत् ॥
शक्तिश्चेज्जलधेनुं च दद्यात्तत्र विधानतः ।

अग्नये कव्यवाहनाय सोमाय पितृमते यमायाङ्गिरस्वते पितृमते इति त्रयोद्देशेन धेनुत्रयदानं ॥ धेनुत्रिकमध्ये वसुरुद्रादित्यानामेकपार्वणेन श्राद्धं ॥ ततो धेनुत्रयं दद्यात् ॥

आग्नेयी तु च सौम्या च याम्या धेनुर्यथाक्रमम् ।
विश्वेषां चैव देवानां तिलपात्रं ददेत्ततः ॥
विसर्जयन्स्मरन्विष्णुं देवंत्वष्टाक्षरं विभुम् ।
चतुर्दश्यां ततो गच्छेद्यथाप्राप्तसरिद्वराम् ॥

मार्गे यवलोहवस्त्रविकिरणं ॥

जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।
नमस्तेऽस्तु हृषीकेश महापुरुष पूर्वज ॥

इत्यादि विष्णुस्तोत्रं जपेत् ॥ जपानन्तरं

दक्षिणाभिमुखं वह्निं ज्वालयेत्तत्र च स्वयम् ।
पञ्चाशता कुशैर्ब्राह्मीं कृत्वा प्रतिकृतिं दहेत् ॥
यथोक्ताग्निषु वै भूमिं यमं रुद्रं च संस्मरन् ।

हुत्वा प्राधानिके स्थाने पश्चात्प्रतिकृतिं दहेत् ॥

एतदष्टमहादानादि भूमिशयनादि कृत्वा कुर्यात् ॥

क्रव्यादवन्हितृप्तायै भूम्यै नम इति स्मरेत् ।

क्षीराक्तं जलकुंभं तु विकिरेत्तत्प्रशान्तये ॥

नाभिमात्रं ततस्तोयं प्रविश्य यमदिङ्मुखः ।

यमाय धर्मराजाय मृत्यवे चान्तकाय च ॥

वैवस्वताय कालाय सर्वभूतक्षयाय च ।

इति सप्ताञ्जलयः ॥ ततः ॐ नमश्चण्डरुद्राय श्मशानपतये ॥ तिलोदकाभ्यां पूर्णं कुंभं निक्षिपेत् ॥

## इति जीवच्छ्राद्धविधिः ॥

---

[६६१] अथ मृतस्य सपिंडनोर्ध्वं श्राध्धविशेषमाह ॥

मृतोद्देशेनसंवत्सरपर्यन्तं श्राद्धं कुर्यात् ॥ तदुक्तं—

द्वादशाहत्रिपक्षादौ कृतं यस्य सपिंडनम् ।

कुर्वीत पार्वणं श्राद्धं सोदकुंभमधर्मकम् ॥

संकल्पेन तु नियमं प्रत्यहं त्वाब्दिकावधि ।

अधर्मकमावाहनादि धर्मरहितं ॥ संकल्पश्राद्धविधिना विधिरुक्तः संकल्पश्राद्धे आब्दिकावधि सपिंडनोर्ध्वं कुर्यात् ॥ संवत्सरे पूर्णे विहितमाब्दिकं तत्पर्यन्तं तदपिवैश्वदेवरहितं कुर्यात् ॥ तदाह गौतमः—

अदैवं पार्वणश्राद्धं सोदकुंभमधर्मकम् ।

कुर्यात्प्रत्याब्दिके श्राद्धं संकल्पविधिनान्वहम् ॥ इति ॥

अधर्मकं कर्तृभोक्तृनियमराहितं ॥ आब्दिकमिति मर्या-

दोक्तिः ॥ याज्ञवल्क्य—

अर्वाक् संवत्सराद्यस्य सपिंडीकरणं भवेत् ।
तस्याप्यन्नं सोदकुंभं दद्यात्संवत्सरं द्विजे ॥

[६६२] तथा—यस्य संवत्सरादर्वाक् सपिंडीकरणं कृतम् ।
उद्दिश्य तं सोदकुंभं दद्यादन्नं द्विजेऽन्वहम् ॥

अत्र यस्य तस्य समुद्दिश्येत्येकवचननिर्देशादेकस्यैव देवतात्वमिति वदन्ति ॥

तथा—सपिंडीकरणे वृत्ते एकस्यैव तु दापयेत् ।
द्विवर्षं यावदिति गरुडपुराणमुदाहरन्ति ॥ कालादर्शादौ पितृपितामहप्रपितामहानुद्दिश्यैकपार्वणविधिना उक्तधर्मकमित्युक्तं ॥ पुनस्तत्रैवाग्रतनग्रन्थे सोदकुंभमासिकयोः सन्निपाते मासिकं कुर्यात् ॥ तेन सोदकुंभं सिध्यतीत्युक्तं ॥ अतः सोदकुंभश्राद्धेऽप्येकस्य देवतात्वमित्यङ्गीकृतं ॥ तथा एतदुदकुंभान्वितश्राद्धं वर्षं यावन्मातुरपि कुर्यात् ॥ तदुक्तं—

पितुर्यथा मासिकानि प्रतिमासं मृतेऽहनि ।
मातुः कुर्यात्तद्वदेव ह्युदकुंभं तथैव हीति ॥

एतेन अब्दपर्यन्तं श्राद्धविधानेन क्रिया द्विरावर्त्यत इति सिध्यं कथं ॥ अन्नं चैव यथाशक्त्या संख्यां कृत्वाब्दिकस्य च ।
दातव्यं ब्राह्मणे स्कन्द घटादौ निष्क्रयं च यत् ॥

इति सपिंडनात्पूर्वं दत्वा ततः सपिंडनमित्युक्तं प्राक् ॥

[३६३] तथा—ब्राह्मणं भोजयेदाद्ये होतव्यमनलेऽथवा ।
पुनश्च भोजयेद्विप्रं द्विरावृत्तिर्भवेदिति ॥

तथा—अर्वाक् संवत्सराद्यस्य सपिंडीकरणं कृतम् ।

षोडशानां द्विरावृत्तिं कुर्यादित्याह गौतमः ॥
तथा—सापिंड्येऽब्दादधस्तानि कुर्यात्काले स्वके पुनरिति ।

गालवगोभिलगौतमवचनैर्मासिकानामपि द्विरावृत्तिरुक्ता । एवं वृषोत्सर्गोऽपि द्विरावृत्तिमर्हतीति तद्बुद्ध्या प्रथमाब्दिकात्पूर्वं करणासंभवे आब्दिके कार्यः ॥ तत्र मलमासादिसंभवे निषेधः काम्यविषयः ॥ तदुक्तं व्यासादिभिः—

आश्रमस्वीकृतिः काम्यवृषोत्सर्गश्च निःष्क्रमः ।

व्याख्यातं च ॥ काम्यो वृषोत्सर्गो न तु नैमित्तिकः ॥ तथा बौद्धायनः ॥ अथ वृषोत्सर्जनं द्विविधं ॥ तच्च काम्यं नैमित्तिकं च ॥ काम्यं कार्तिक्यादौ ॥ नैमित्तिकं एकादशाहादौ ॥ अतः प्रथमाब्दिके निषिद्धकाले सति पूर्वमकृतश्चेद्विवाहविधिं विहाय द्विरावृत्तिबुद्ध्या तत्र गृह्योक्तो वृषोत्सर्गः कार्यः ॥

कृतेऽचलद्विवेदेन ग्रन्थे निर्णयदीपके ।
नाना विशेषश्राद्धेषु निर्णीतानि तु कानिचित् ॥

इति श्राद्धविशेषनिर्णयप्रकरणं ॥

---

## [५५४] अथ महालयश्राद्धनिर्णयः ॥

भाद्रपदस्यापरपक्षो महालयः ॥ गजच्छायाह्वयश्चेति ॥ तदुक्तं कालादर्शे—

नभस्यस्यापरः पक्षो यत्र कन्यां व्रजेद्रविः ।
समहालयसंज्ञः स्याद्गजच्छायाह्वयस्तथा ॥

यमोऽपि—आषाढीमवधिं कृत्वा यः पक्षः पञ्चमो भवेत् ।

तत्र श्राद्धं प्रकुर्वीत कन्यास्थोऽर्को भवेत्तदा ॥ इति ॥

यदा श्रावणभाद्रपदयोरन्यतरोमलमासो भवति तदा सप्तमः पक्षः ॥ तदुक्तं कालनिर्णये—

नभो वाथ नभस्यो वा मलमासो यदा भवेत् ।

सप्तमः पितृपक्षः स्यादन्यत्रैव तु पञ्चमः ॥

पितृपक्षो महालयः ॥ शाङ्खायनः ॥ कन्यास्थेऽर्के सति पक्षस्य प्राशस्त्यमभिधत्ते ॥

पुण्यः कन्यागतः सूर्यः पुण्यः पक्षश्च पञ्चमः ।

कन्यास्थार्कान्वितः पक्षः सोऽत्यन्तं पुण्य उच्यते ॥

जाबालिः कन्यार्काभावेऽपि प्रशस्ततामाचष्टे ॥

अप्राप्तेऽपि रवौ कन्यां श्राद्धं कुर्वीत सर्वदा ।

आषाढ्याः पञ्चमः पक्षः प्रशस्तः श्राद्धकर्मणि ॥

उत्तराहस्तचित्रासु कन्यायां भास्वति स्थिते ।

कृष्णपक्षे गजच्छायासमानः पितृकर्मसु ॥

पक्षस्यादौ मध्ये प्रान्ते वा कन्यागते रवौ पक्षस्य कन्यागतत्वमाह ॥ [६६५] कार्ष्णाजिनिः —

आदौ मध्येऽवसाने च यत्र कन्यां व्रजेद्रविः ।

स पक्षः सकलः पूज्यः श्राद्धषोडशकं प्रति ॥

अत्र षोडशदिनानि श्राद्धे पुण्यतमानि इति ब्रह्माण्डपुराणमाह ॥

कन्यागते सवितरि यान्यहानि च षोडश ।

क्रतुभिस्तानि तुल्यानि पितॄणां दत्तमक्षयम् ॥

आश्विनशुक्लप्रतिपदा सह षोडशसंख्यापूरणमाह देवलः—

अह्नः षोडशकं यत्तु शुक्लप्रतिपदा सह ।
चन्द्रक्षये विशेषेण सापि दर्शात्मिका स्मृतेति ॥

सा प्रतिपत् ॥ केचन तिथिवृद्धिसंभावनया प्रतिपदादिदर्शान्ते पक्षेऽप्यह्नः षोडशकं ब्रुवते ॥ अन्ये तु प्रौष्ठपदपौर्णमासीप्रभृति दर्शान्तमह्नः षोडशकमूचुः ॥

पौर्णमासीषु सर्वासु निषिद्धं पिंडपातनम् ।
वर्जयित्वा प्रौष्ठपदीं यथा दर्शस्तथैव सेति ॥

[५५६]स्मृत्यन्तरवचनात् ॥ अपरपक्षाह्नः षोडशाभिधाने कालनिर्णयदीपिकापि ॥ अत्र षोडशादिनान्यभ्यर्हितानीति यत्प्रोक्तं तत्तिथिवृद्धितोऽधिकदिने तत्तक्रियाप्राप्तये भाद्रे पर्वसितं गृहीतमथवा दर्शात्परां पक्षतिमिति ॥ एवं षोडशादिनानां विवेकः॥ एष्वन्वहं श्राद्धं कुर्यात् ॥ तदुक्तं ब्रह्माण्डपुराणे—

अश्वयुक्कृष्णपक्षे तु श्राद्धं कुर्याद्दिने दिने ।
त्रिभागहीने पक्षे वा त्रिभागे वार्द्धमेव वा ॥

अश्वयुगिति कृष्णप्रतिपदादिमासाभिप्रायेण ॥ प्रतिदिनश्राद्धाशक्तौ त्रिभागहीने पक्षे पञ्चम्या ऊर्ध्वं त्रिभागे दशम्या ऊर्ध्वं अर्धं अष्टम्यादीत्यशक्तविषया इमे पक्षाः ॥ [५५७]एवं दीपिकापि ॥ तदधिको भाद्रस्य पक्षोऽसितः पञ्चम्याः परस्ततोऽधिकतरोऽप्यर्धं दशम्यास्ततः इति ॥ तथा निस्वस्तु शाकैरपि ॥ एकत्रान्हि महालये पितृयजिं कुर्यात्समर्थस्तु चेत्तस्मिन्प्रत्यहमिति ॥ अत्रमहालयपक्षे त्वशक्त्या प्रत्यहं श्राद्धविधानासंभवे शाकैरपि एकस्मिन्नहनि श्राधधं कुर्यात् ॥ तदुक्तं—आषाढ्याः पञ्चमे पक्षे क्षयाहे पिंडमादिशेत् ।

इति ॥ श्राद्धाकरणे दोषः प्रोक्तो नागरखण्डे—

आषाढ्याः पञ्चमे पक्षे श्राद्धं यो न करिष्यति ।
शाकैरपि दरिद्रोऽपि सोऽन्त्यजत्वमुपैष्यति ॥ इति ॥

अतश्चापरपक्षे श्राद्धमवश्यं कर्तव्यं सपिंडमिति चतुर्दशीं वर्जयित्वा ॥ यथाह मनुः—

कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्दशीम् ।
श्राद्धे प्रशस्तास्तिथयो यथैता न तथेतरा इति ॥

अत्रादिशब्दात्पञ्चम्यादिपक्षोपसङ्ग्रहः ॥ प्रतिपदादितिथिषु श्राद्धं कुर्याच्चतुर्दशीं वर्जयित्वेति ॥ ६६८ याज्ञवल्क्योऽप्याह—

प्रतिपत्प्रभृतिष्वेकां वर्जयित्वा चतुर्दशीम् ।
शस्त्रेण प्रहता ये वै तेभ्यस्तत्र प्रदीयते ॥

तत्र चतुर्दश्यां शस्त्रहतानामेवैकोद्दिष्टविधानेनेति ॥ एवं सकलः पक्षः श्राध्धार्ह इति ॥ गार्ग्येण तिथ्यादिविशेषेषु श्राध्धनिषेधोऽभाणि—

नन्दायां भार्गवदिने त्रयोदश्यां त्रिजन्मसु ।
एषु श्राध्धं न कुर्वीत गृही पुत्रधनक्षयात् ॥

त्रिजन्मसु जन्मनक्षत्रे जन्मदिवसे जन्मवासरे च ॥ तथा स्मृत्यन्तरवचनेन मघायुगादौ पिंडनिषेधोऽभ्यधायि ॥

मघायुगादौ भरण्यां श्राद्धं कुर्यात्प्रयत्नतः ।
पिंडदानं न कुर्वीत यदीच्छेज्जीवतः सुतान् ॥

तथा—मघायुगादौ भरण्यां संक्रान्तौ ग्रहणे तथा ।
अर्घं पिंडं विना श्राद्धं क्षयाहे पिंडमादिशेत् ॥

ननु ॥ पिंडप्रधाने श्राद्धे प्रधानहानौ कर्मव्यावृत्तिरुक्ता ॥

प्रधानस्याक्रिया यत्र साङ्गं तत्क्रियते कथम् ।

इति वचनेन तत्कथं श्राद्धसिद्धिरिति ॥ [५६९] शृणु अपरपक्षश्राद्धे पक्षद्वयमस्ति॥ प्रतिपदादिषु तिथिषु एकमेव श्राद्धमावर्त्यते इत्येकः पक्षः ॥ प्रतिदिनं भिन्नानि श्राद्धानीति द्वितीयः पक्षः ॥ आवृत्तिपक्षे तएव ब्राह्मणाः ॥ द्विजानां यजमानस्य च न सूतकं ॥ प्रतिपद्युपक्रम्यामावास्यायां समाप्तिः ॥ समाप्तिदिवसे सकृद्दक्षणा देयेति ॥ एवमेवोक्तं दीपिकायां ॥ श्राद्धक्रियैकान्वहं आवृत्या क्रियते समाप्तिदिवसे देया तदा दक्षिणा इति ॥ तस्मिन्पक्षे नन्दा त्रयोदशी त्रिजन्मादि न वर्ज्यं ॥ एतदभिप्रायेणाहकार्ष्णाजिनिः—

नभस्यस्यापरे पक्षे श्राद्धं कुर्याद्दिने दिने ।

नैव नन्दादि वर्ज्यं स्यान्नैव वर्ज्या चतुर्दशी ॥

अस्मिन्पक्षे यथा चतुर्दश्यामपरपाक्षिकं सपिंडश्राद्धं विहितं ॥ [५७०] तथा युगादावपि पिंडविधायकवाक्यसद्भावः सूचितः आदिशब्देन ॥ यथा—

तीर्थे सांवत्सरे प्रेते पितृपक्षे शशिक्षये ।

पिंडदानं प्रकुर्वीत युगादौ भरणीमघे ॥

पितृपक्षो महालयः ॥ युगादिस्त्रयोदशी ॥ तथा—

दर्शश्राद्धे गयाश्राद्धे श्राद्धे चापरपाक्षिके ।

पिंडदानं प्रकुर्वीत भरण्यां न प्रदुष्यतीति ॥

यद्यपि भरण्यादौ पृथगनुष्ठीयमाने श्राद्धे पिंडदानं निषिद्धं ॥ परन्तु षोडशश्राद्धसमुदायान्तःपातित्वेन न्यायप्रा-

सं ॥ यथा चातुर्मास्येषु गृहमेधीयाः पृथगनुष्ठीयमाना आवा-
हनादि न लभन्ते ॥ एकैकाहिकचातुर्मास्येषु आवाहनादि
निगमाल्लभन्ते ॥ समुदायान्तः पातित्वात् इति तद्वत् ॥
पृथक्त्वे निगमाभावात् ॥ समुदायान्तर्गतापि निगमान्नलभ-
ते एवं ये वदन्ति ते भाष्याभिप्रायमनभिज्ञाः उपेक्षणीया-
इति ॥ [६७१] तथा एकाहः संघातमापद्यमानो लभेत् ताय-
मानरूपाणीति शाङ्खायनसूत्रान्यायाद्वा भवति ॥ षोडशश्रा-
ध्धावृत्तिपक्षे भरणीमघात्रयोदश्यादिषु पिंडदानमिति ॥ द्वि-
तीयपक्षे भिन्नानि श्राध्धानि प्रतिदिनं दक्षिणादानकर्मसमा-
प्तिश्च क्रियते ॥ तदुक्तं दीपिकायां ॥

प्रतिदिनं दानेति पक्षस्तदा कार्या कर्मसमाप्तिरन्वहमिति ।

अस्मिन्प्रतिदिनं भिन्नश्राध्धपक्षे भरणीमघादिषु पिंड-
दाननिषेधवाक्यानामवकाशः ॥ एवं विधिनिषेधवाक्यानां वि
षयः कल्प्यते ॥ तथा चोक्तं ॥

श्रुतिद्वैधं तु यत्र स्यात्तत्र धर्मावुभौ स्मृतौ ।

स्मृतिद्वैधे तु विषयः कल्पनीयः पृथक्पृथक् ॥

इति श्राध्धावृत्तिपक्षे पिंडविधायकवाक्यानां विषयः ॥
प्रतिदिनं भिन्नश्राध्धपक्षे पिंडनिषेधकवचनानां चेत्येवं विष-
ये व्यवस्थितानामुभयविधिवाक्यानां सार्थकता भवेदिति
सिध्धं ॥ [६७२] अथ श्राध्धविधानासमर्थः महालयनिमित्तमेकं
श्राध्धं करोति ॥ तदा पितृमृताहे कुर्यात् ॥

तदुक्तं नागरखण्डे—

आषाढ्याः पञ्चमे पक्षे कन्यासंस्थे दिवाकरे ।

मृतेऽहनि पितुर्यो वै श्राध्धं दास्यति मानवः ॥

तस्य संवत्सरं यावत्संतृप्ताः पितरो ध्रुवम् ।

तस्मात्तत्र प्रकर्तव्यं श्राध्धं श्रध्धापरैर्नरैरिति ॥

अत्र मृतेऽहनीति विशेषोपादानात्तत्र नन्दाभृगुवारादिनिषेधानवकाशः ॥ किंच मृताहलक्षणं विशेषमवलंब्य सपिंडं श्राध्धं कुर्वतां परिसंख्यया तत्र भरण्यामपि पाक्षिकी श्राध्धाभ्यनुज्ञा भवेत् ॥ श्राध्धं कर्तव्यमिति ॥ एतदवलंबनस्य सर्वपक्षतुल्यत्वेऽपि विशेषवचनैर्निषेधातिशयदर्शनात् लोकविद्विष्टत्वाच्च तत्पक्षे मघासु त्रयोदश्यां च न भवति सपिंडं श्राध्धमिति ॥ निषेधवचनेषु तावन्मनुः—

अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्न तु ।

षट्त्रिंशन्मतात्—उपवासं च संक्रान्तौ ग्रहणे चन्द्रसूर्ययोः ।

मघात्रयोदशीश्राद्धं न कुर्यात् पुत्रवान्गृही ॥

यदाह कार्ष्णाजिनिः—

संक्रान्तावुपवासेन पारणेन च भारत ।

मघायां पिंडदानेन ज्येष्ठः पुत्रो विनश्यतीति ॥

ज्योतिर्बृहस्पतिः—

कृष्णपक्षे त्रयोदश्यां यच्छ्राद्धं कुरुते नरः ।

पञ्चत्वं तस्य जानीयाज्ज्येष्ठपुत्रस्य निश्चितमिति ॥

स्मृत्यन्तरं—मघात्रयोदशीश्राद्धं हस्तिच्छायासमाश्रितम् ।

दुष्करं तन्महापुण्यं न कुर्यात्पुत्रशोकदम् ॥

कात्यायनेनाप्युक्तं ॥ युवानस्तत्राम्रियन्त इत्यादिवचनैर्निषेधे सति तदाचरणे त्वसद्धर्मप्राप्तिरिति ॥ यतः सत्कर्मा-

चरणे सध्धर्मप्राप्तिरसत्कर्माचरणे त्वसध्धर्मप्राप्तिरिति ॥ अतः पुत्रविपत्तिलक्षणदुःखोत्पादकत्वात् मघासु त्रयोदश्यां च सपिंडं श्राध्धं न कार्यं ॥ [६७४] यानि तु मघासु त्रयोदश्यां च श्राध्धविधायकानि मन्वादिवाक्यानि

यत्किंचिन्मधुना मिश्रं प्रदद्यात्तु त्रयोदशीम् ।
तदप्यक्षय्यमेव स्याद्वर्षासु च मघासु च ॥
पिता पितामहश्चैव तथैव प्रपितामहः ।
जातं पुत्रं प्रतीक्षन्ते पिप्पलं शकुना इव ॥
मधुमांसेन खड्गेन पयसा पायसेन च ।
एकतो दास्यति श्राध्धं वर्षासु च मघासु च ॥

इत्येवमादीनि श्राध्धविधिपराणि वाक्यान्यपि पिंडश्राध्धपराणि प्रतिपादितानी महर्षिभिः ॥ तस्मात्पितुर्मृतेऽहन्यपि मघात्रयोदश्योर्महालयनिमित्तं सपिंडश्राध्धं न कार्यमिति वचनमप्यास्ति ॥

मघां त्रयोदशीं मुक्त्वा परं श्राध्धं महत्फलम् ॥इति॥

चतुर्दश्यां विषशस्त्रादिमृतानामेवैकोद्दिष्टं श्राध्ध मुक्तं ॥ एतां मुक्त्वा कस्मिंश्चिद्दिने श्राध्धं कुर्यात् ॥ भरण्यां तु मृताहावलंबनेन पाक्षिकयामनुज्ञायां प्रशंसावचनं कालादर्शे—

भरणी पितृपक्षे तु महती परिकीर्तिता ।
अस्यां श्राध्धं कृतं येन स गयाश्राध्धकृद्भवेत् ॥

इति श्राद्धनिर्णयः ॥

[६७५] अथ श्राद्धप्रकारमाह देवलः ॥

दैवाद्यं नैव कुर्वीत दैवान्तं नैव कुत्रचित् ।
दैवाद्यं यदि कुर्वीत श्राद्धं पार्वणधर्मवत् ॥

आदौ देवा विश्वेदेवाः अन्ते देवता विष्णुः ॥ केचन आदौ विश्वेदवा उपवेश्यन्ते पश्चादुत्थाप्यन्ते एवं दैवाद्यन्तं वदन्ति ॥ तथा—

पितरो यत्र पूज्यन्ते तत्र मातामहा अपि ।
अविशेषेण कर्तव्यं विशेषान्नरकं व्रजेत् ॥

महालये मातृश्राद्धं पृथक्प्रशस्तं ॥ मातामहानां सपत्नीकमेवेति स्मृत्यर्थसारे ॥ चतुर्विंशतिमतेऽपि—

केचिदिच्छन्ति नारीणां पृथक्श्राद्धं महर्षय इति ॥

तत्रैकोद्दिष्टसहितं कार्यं तत्रैकः पाकः ॥ पिंडो बर्हिश्चैकः ॥ एकोद्दिष्टा भ्रातृभगिनीपुत्रपितृव्यतत्पत्नीमातुलादय अपुत्रवन्तः ॥ तथा चतुर्विंशतिमते—

आचार्यगुरुशिष्येभ्यः सखिज्ञातिभ्य एव च ।
तत्पत्नीभ्यश्च सर्वाभ्यो दद्याच्छ्राद्धपदे नरः ॥

[६७६] तथा अन्येषामपि संबन्धिनामपुत्राणां विशेषेण कार्यं अथवा पृथक्चैकोद्दिष्टानां तत्पक्षैकादश्यां कार्यं ॥ तदुक्तं पुराणसमुच्चये ॥

एकादश्यां प्रकुर्वीत एकोद्दिष्टानि सर्वतः ।
तस्याधिदेवता विष्णुः पितृवर्गस्य कृत्स्नशः ॥

सर्वतः सर्वाण्येकोद्दिष्टानि तत्र संबन्धानुक्रमेण श्राध्धं कुर्यात् ॥ तथा महालये दत्तमक्षयं स्यात् ॥ तदुक्तं ॥

नैर्योगिको विधिर्नूनं पक्षे वै पञ्चमे स्थितः ।
तस्मिन्दत्तं हविर्नूनं पितॄणामक्षयं भवेदिति ॥

यञ्च वचनं—एकस्मिन्ब्राह्मणे सर्वानाचार्यादीन्प्रपूजयेत् ।
पिंडांश्च शतधा तेभ्यो दद्यादकरणं न तु ॥

अत्र एकस्मिन्ब्राह्मणे आचार्यादीन् सर्वान् भोजयेदित्युक्तं ॥ तदशक्तविषयं ॥ ब्राह्मणासंभवविषयं वा ॥ अथ यतेरेकदण्डिनस्त्रिदण्डिनो वा तत्पक्षद्वादश्यामेव पार्वणश्राद्धं कुर्यात् ॥ [६७७] तदुक्तं वायुपुराणे—

संन्यासिनोऽप्याब्दिकादि पुत्रः कुर्याद्यथातिथि ।
महालये तु यच्छ्राद्धं द्वादश्यां पार्वणेन त्विति ॥

अत्र पुत्रपदमधिकार्युपलक्षणं ॥ अथात्र महालये नवमीत्वष्टका तत्र नवदैवत्यं श्राद्धं ॥ तदुक्तं ॥

अन्वष्टकासु नवभिः पिंडैः श्राद्धमुदाहृतम् ।
पित्रादि मातृमध्यस्थं ततो मातामहान्तिकम् ॥ इति ॥

एतच्छ्राध्धविधिर्निरूपितः स्त्रीणां पृथक् श्राध्धनिर्णयप्रकरणे ॥ विशेषोऽष्टकानिर्णये वक्ष्यते ॥ अथात्राष्टम्यां विशेषः ॥ ब्रह्माण्डे—आषाढ्याः पञ्चमे पक्षे गया मध्याष्टमीस्मृता ।
त्रयोदशी गजच्छाया गयातुल्यं च पैतृभम् ॥
आसु श्राध्धं गयाश्राध्धसममाहुर्महर्षयः ।
पैतृभं मघा मघायोगे तु त्रयोदशी गजच्छायेति ॥ [६७८]

दीपिका ॥ अनङ्गः सोऽपिमधान्वितः शुभतर इति ॥ अत्र पितृगाथा—

अपि जायेत सोऽस्माकं कुले कश्चिन्नरोत्तमः ।

प्रावृट्कालेऽसिते पक्षे त्रयोदश्यां समाहितः ॥
मधूत्कटेन यः श्राध्धं पायसेन समाचरेत् ।
तथा–मघासु कुर्वन् श्राध्धानि सर्वान्कामानवाप्नुयात् ।
प्रत्यक्षमर्चितास्तेन भवन्ति पितरः सदेति ॥
मनुस्मरणं ॥ अपरपक्षोपक्रमे देवीपुराणे ॥
तत्रापि महती पूजा कर्तव्या पितृदैवता ।
अत्र पिंडप्रदानं तु ज्येष्ठपुत्रो विवर्जयेत् ॥
यमस्मृतौ–अपि नः स कुले भूयाद्यो नो दद्यात्त्रयोदशीम् ।
पायसं मधुसर्पिर्भ्यां प्राक्छाये कुञ्जरस्य तु ॥
आजेन सर्वलोहेन वर्षासु च मघासु चेति ।
अत्र श्राध्धप्रशंसापराणि वचनानि सन्ति ॥ तथा–
मघात्रयोदशीश्राध्धं न कुर्यात्पुत्रवान्गृही । इति ॥
गृहिणो निषेधात्कथं श्राध्धं ॥ अत्रोत्तरवचन–
नेच्छेत्त्रयोदशीश्राध्धं पुत्रवान्यः सुतायुषे ।
एकस्यैव न कुर्यात्तु पावर्णं तु समाचरेत् ॥

पुत्रवान् सुतायुषे त्रयोदश्यां श्राध्धं नेच्छेत् ॥ एकस्यैव पितृवर्गस्य न कुर्यात् ॥ किंतु वर्गद्वयस्य पार्वणं कुर्यात् ॥ अतश्च निषेधवाक्यानि एकवर्गोद्देशेनानुष्ठीयमानं श्राध्धमाश्रयन्ते ६७८ तथा च कार्ष्णाजिनिः–

श्राध्धं नैकस्य वर्गस्य त्रयोदश्यामुपक्रमेत् ।
न तृप्तास्तस्य ये यस्य प्रजां हिंसन्ति तस्य ते॥ इति ॥

त्रयोदश्याः पितृतृप्तिं मत्वा येभ्य एव न दीयते ते एव कुपिताः श्राध्धकर्तुः प्रजां नाशयन्तीति भावः ॥ अतस्तत्र

पितृपक्षीयाणां सर्वेषां मातृपक्षीयाणां सर्वेषां च भ्रातृमातुलादीनां सर्वेषामेकोद्दिष्टानां च यजनं कुर्यादित्यर्थः ॥ निषेधवाक्यानामयमेको विषयः ॥ द्वितीयस्तु एतच्छ्राद्धे पिंडा नस्युः ॥ उक्तं च दीपिकायां ॥ श्राद्धं न पिंडान्वितं ॥ पिंडा नस्युरिति द्वितीयो विषयः ॥

तथा—स्वजातीनां भवेच्छ्रेष्ठः कुर्वन् श्राद्धं त्रयोदशीम् ।

इत्यादि धनमित्रादिप्राप्तिकामनापरत्वे श्राध्धं न कुर्यादिति तृतीयो विषयः ॥ इति कालनिर्णयकारैर्निरूपितं ॥

[५८०] अथवा एतच्च पार्वणविधानं अपुत्राणामेकोद्दिष्टं सर्वत्र प्राप्तं युगादित्रयोदश्यां तद्बाधनार्थं पार्वणविधिरिति पित्रादीनामतिदेशात्सिध्धमिति व्याख्यातं दीपिकाविवरणे ॥ इयं युगादिः ॥ अत्र श्राध्धमपिंडमुक्तं ॥

पुलस्त्येन—अयनद्वितये श्राध्धं विषुवद्वितये तथा ।

युगादिषु च सर्वासु पिंडनिर्वपणादृते ॥

इति त्रयोदशीश्राद्ध ॥

---

## अथ तत्पक्षचतुर्दश्यां शस्त्रादिहतानामेकोद्दिष्टं कार्यं ॥

यथाह मरीचिः—

समत्वमागतस्यापि पितुः शस्त्रहतस्य वै ।

एकोद्दिष्टं तु कर्तव्यं चतुर्दश्यां महालये ॥

समत्वमागतस्य सपिंडीकृतस्य ॥ नागरखण्डेऽपि—

येषां च शस्त्रमृत्युः स्यादपमृत्युरथापि वा ।

उपसर्गान्मृतानां च विषमृत्युमुपेयुषाम् ॥

सर्पव्याघ्रहतानां च मृतस्योद्बन्धनैरपि ।
श्राध्धं तेषां प्रकर्तव्यं चतुर्दश्यां नराधिप ॥
तेषां तास्मिन्कृते तृप्तिस्ततस्तत्पक्षजा भवेत् ।

तत्पक्षजा तास्मिन्नपरपक्षे श्राध्धकरणे यावती तृप्तिः तावतीत्यर्थः ॥ [५८१] याज्ञवल्क्यः—

प्रतिपत्प्रभृतिष्वेकां वर्जयित्वा चतुर्दशीम् ।
शस्त्रेण तु हता ये वै तेभ्यस्तत्र प्रदीयते ॥

प्रचेता अपि—वृक्षारोहणलोहाद्यैर्विद्युज्ज्वालाविषादिभिः ।
नखिदंष्ट्रिविपन्नानां तेषां शस्ता चतुर्दशी ॥

ब्रह्माण्डपुराणे—प्रायोऽनशनशस्त्राग्निविशेषोद्बन्धनं तथा ।
चतुर्दश्यां तु कर्तव्यं तृप्त्यर्थमितिनिश्चयः ॥

अत्र—चतुर्दश्यां भवेच्छ्राध्धं येषां मृत्युर्विगर्हित इति ॥

वचनात् विहितमार्गेण अनशनाग्निप्रवेशनादिभिर्मृतानां न शस्त्रहतचतुर्दश्यां श्राध्धमिति ॥ वैधेऽपि संग्राममरणे मनुवचनाद्भवति ॥

म्रियन्ते पितरश्चात्र ये वै शस्त्रहता रणे ।

अत्र चतुर्दश्यां गार्ग्यः एकोद्दिष्टं ब्रवीति ॥

चतुर्दश्यां च यच्छ्राद्धं सपिंडीकरणात्परम् ।
एकोद्दिष्टविधानेन तत्कार्यं शस्त्रघातिनाम् ॥

शस्त्रघातिनामिति इतरेषामपमृत्युहतानामुपलक्षणं ॥ [५८२] यद्यपि अनेन शस्त्रहतचतुर्दशीश्राध्धेन शस्त्रादिभिर्हतस्य पितुस्तृप्तिर्जायते तथापि पितामहादीनां मातामहादीनां च तृप्त्यर्थं महालयनिमित्तं पार्वणमन्यस्मिन् तिथौ कार्यं ॥

उक्तं च कालनिर्णये—

कांक्षन्ति पुत्रपौत्रेभ्यः पायसं मधुसंयुतम् ।
तस्मात्तानत्र विधिना तर्पयेत्पायसेन तु ॥
मध्वाज्यसहितेनात्र पितॄणां तृप्तिहेतव इति ।

अत्र महालये पिता चेच्छस्त्रहतः पितुरेवैकोद्दिष्टं ॥ पितामहश्चेच्छस्त्रहतः पितामहस्यैवैकोद्दिष्टं वचनमस्त्याचारतिलके ॥ स्मृत्यन्तरं च ॥ एकस्मिन्द्वयोर्वैकोद्दिष्टविधिरिति ॥ द्वयोरेकोद्दिष्टे कृतेऽपि पितृतृप्त्यर्थं पूर्ववत्पार्वणं कार्यमिति ज्ञेयं ॥ पित्रादिष्वायुधाद्यैर्हतेषु चतुर्दश्यां पार्वणं ॥ तदुक्तं स्मृत्यन्तरे—

पित्रादयस्त्रयो ह्यस्य शस्त्रघातास्त्वनुक्रमात् ।
संभूते पार्वणं कुर्यादाब्दिकानि पृथक् पृथक् ॥

पार्वणे कृतेऽपि मातामहादीनां तृप्त्यर्थं महालयं पृथक्कार्यं ॥ अस्मिन् शस्त्रहतश्राद्धे मघास्वपि पिंडदानं स्यात् ॥ तदुक्तं—प्रेतपक्षे चतुर्दश्यां मघायुक्तं दिनं यदि ।

पिंडदानं प्रकुर्वीत यस्य शस्त्रहतः पिता ॥

पितेति शस्त्रहतोपलक्षणं ॥ यश्चतुर्दश्यां पार्वणनिषेधः स चतुर्दशीनिमित्तस्य श्राधस्य न मृताहनिमित्तस्य मृताहनिमित्तं पार्वणं भवेत् ॥ ५८३ अथ एतच्चतुर्दश्यामेव शस्त्रादिभिर्हतः तस्याब्दिकेनैव चतुर्दशीश्राद्धसिद्धिः ॥ तदाह दीपिकाकारः ॥ अमुतो नान्यद्भवेत्तंत्रतः सिद्धिरिति ॥ अमुतः आब्दिकादन्यच्चतुर्दशीनिमित्तं न स्यात् नैकः श्राधद्वयं कुर्यादिति निषेधात् तंत्रतः सिध्धेरित्यर्थः ॥ अथवा निमित्तभे-

दाच्छ्राध्धद्वयं वा कुर्यात् ॥ अथ महालये चतुर्दश्यां शस्त्रहत स्यैव श्राध्धं नान्यस्येति नियमः ॥ तत्र श्राध्धे कृते शस्त्रा-दिहतस्यापरपक्ष श्राध्धे तृप्तिर्जायत इत्युक्तं नागरखण्डे ॥ तथा सति चतुर्दश्यां विघ्नसंभावनया श्राध्धाकरणनिश्चये सति तदा तत्पक्षमध्ये महालयमध्ये चतुर्दश्याः पूर्वं कस्मि-श्चिद्दिवसे शस्त्रादिहतस्यावश्यं पार्वणश्राध्धं कुर्यात् ॥ इत्या-शयेन दीपिकाकार आह ॥ [६८४]अथो न महालयस्थितचतु-र्दश्यां कथंचिद्भवेत् ॥ विघ्नादेरपि संभवो यदि तदा तत्पक्ष-मध्ये नरावश्यं कुत्राचिदन्हि शस्त्रनिहतश्राध्धं चरेत् पार्वणं ॥ इति चतुर्दश्यां क्रियमाणस्य शस्त्रहतश्राध्धस्यैकोद्दिष्टविधाना द्दिनान्तरे पार्वणमितिभावः ॥ इति दीपिकाविवरणे व्याख्या-तं ॥ इदं पार्वणविधानं मातापित्राद्यपेक्षया युक्तं ॥ अन्येषां पितृव्यभ्रातृपुत्रादीनां पार्वणं निषिध्धं ॥ निमित्तवशात्काला-तिक्रान्तत्वेन प्राप्तं शस्त्रहतानां श्राध्धं यथाप्राप्तमेकोद्दिष्टं कु-र्यात् ॥ तथा वचनं तु–

चतुर्दश्यां यदा श्राध्धं किं पुनः पितृपक्षजम् ।
षट्दैवतं न कुर्वीत दद्याच्छस्त्रहतस्य चेति ॥

एवमन्यानि श्राध्धानि कालातिक्रान्तानि यथाप्राप्ता-नि कार्याणीति ज्ञेयं ॥ तथा मुख्यकाले स्वकृतं श्राध्धादिकं कालान्तरे कुर्यात् ॥ [६८५] तदुक्तं स्मृत्यर्थसारे–

मुख्यकाले यदावश्यं कर्म कर्तुं न शक्यते ।
गौणकालेऽपि कर्तव्यं गौणोऽप्यत्रादृशो भवेत् ॥
स्वकालादुत्तरो गौणः कालः पूर्वस्य कर्मणः ।

सर्वत्र गौणकालेषु कर्म चातीतमाचरेत् ॥

अत्र मुख्यदिने निमित्तवशात् अकृतं श्राद्धादि कम दिनान्तरे कार्यमिति भावः ॥ तत्रापि कृतं फलदं स्यात् ॥ तदुक्तं-मुख्यकाले हि मुख्यं चेत्साधनं नैव लभ्यते ।

मुख्यकाल उपाश्रयो गौणमप्यस्तु साधनम् ॥

इति चतुर्दशीश्राद्धं ॥

---

## अथ अपरपक्ष श्राद्धनिर्णयः ॥

अथापरपक्षे श्राद्धविधानासंभवे दर्शे कुर्यात् ॥ तथा च निगमः ॥ अपरपक्षे यदहः संपद्येत अमावास्यायां विशेषेणेति ॥ तथा दीपिका—

एकत्रान्हि युगात्परे पितृयजिं दर्शे पृथक् वा चरेत् ।

युगात् चतुर्थ्याः परे ॥ कालनिर्णयकारैर्दर्शेन अन्यदिनं विकल्पितं ॥ मघास्वप्यमावास्यायां पिंडदानं भवेत् ॥ ६८६

तदुक्तं—ततः सांवत्सरे श्राद्धे श्राद्धे नान्दीमुखे तथा ।

अमावास्यासु सर्वासु मघायां पिंडदो मवेत् ॥

तथा—दर्श श्राध्धे गयाश्राध्धे श्राध्धे चापरपाक्षिके ।

पिंडदानं प्रकुर्वीत भरण्यां न प्रदुष्यतीति ॥

गयेति गङ्गादितीर्थोपलक्षणं ॥ अथ तदपरपाक्षिकं श्राद्धं यदि महालये न कृतं तदा आश्विनशुक्लपञ्चम्याः पूर्वं कुर्यात् ॥ तदुक्तं यमस्मृतौ—

हंसे वर्षासु कन्यास्थे शाकेनापि गृहे वसन् ।

पञ्चम्योरन्तरं दद्यात्पक्षयोरुभयोरपि ॥

हंसे सूर्ये ॥ अथ विशेषः सुमन्तुः—

कन्याराशौ महाराज यावत्तिष्ठेद्विभावसुः ।
तस्मात्कालाद्भवेद्देयं वृश्चिकं यावदागत इति ॥

तथा—येयं दीपान्विता राजन् ख्याता पञ्चदशी भवि ।
तस्यां दद्यान्न दत्तं स्यात्पितॄणां वै महालये ॥
तावत्प्रेतपुरी शून्या यावद्वृश्चिक दर्शनम् ।
ततः स्वभवनं यान्ति शापं दत्वा सुदारुणमिति ॥

अथ—एक एव यदा विप्रो द्वितीयो नैव लभ्यते ।
पितृश्राद्धे नियोज्योऽसौ दैवे वन्हि नियोजयेत् ॥

[५८७] अथवा स्मृतिसारे—

अन्नं पात्रे समुध्धृत्य सर्वस्य प्रकृतस्य च ।
देवतायतने कृत्वा ततः श्राध्धं समापयेत् ॥
प्रास्येदग्नौ तदन्नं वा दद्याद्वा ब्रह्मचारिणे ।

एवं—एकेनैव तु विप्रेण षडर्धं श्राध्धमाचरेत् ॥ इति ॥

षण्णां तृप्तिप्रकारः आचारतिलके—

पिता भुङ्क्ते द्विजकरे मुखे भुङ्क्ते पितामहः ।
प्रपितामहस्तालुदेशे कण्ठे मातामहस्तथा ॥
प्रमातामहश्च हृदये नाभौ वृध्धः प्रकीर्तितः ।
एवं वै पार्वणे श्राध्धे त्वेकविप्रेऽपि भुञ्जते ॥

विशेषो गरुडपुराणे—

त्रयः पिंडभुजो ज्ञेया भाजकाश्च त्रयः स्मृताः ।
त्रयः पिंडानुलेपाश्च दशमः पिंडसन्निधौ ॥
यजमानो मन्त्रदेको दश पूर्वान्दशापरान् ।

उध्धरेच्छ्राध्धदस्त्वेवमेकविंशतिपूरुषान् ॥

कृतेऽचलद्विवेदेन ग्रन्थे निर्णयदीपके ।

नभस्यापरपक्षस्य जातः श्राध्धविनिर्णयः ॥

इत्यपरपक्षश्राद्धनिर्णयः ॥

---

## [५८८] अथ अष्टकाश्राद्धनिर्णयः ॥

अष्टकाश्चतस्रः कृष्णाष्टम्यः ॥ आग्रहायण्यतिक्रमे तिस्रः भाद्रपदे चेति ॥ तदुक्तं विष्णुधर्मोत्तरे—

आग्रहायण्यतिक्रान्तो कृष्णास्तिस्रोऽष्टकाः स्मृताः ॥
अष्टम्यस्तु नवम्यासां तिथिरन्वष्टका इति ॥

आग्रहायणी मार्गशीर्षपौर्णमासी ॥ शाङ्खायनः ॥ ऊर्ध्वमाग्रहायण्यस्तिस्रोऽष्टका अपरपक्षेषु अष्टम्य इति शेषः ॥ मध्या वर्षे चेति ॥ यत्तु वचनं दीपिकायां—

पौषादित्रिषु भाद्रके च बहुलाष्टम्योऽष्टकाख्या इति ॥

तत्कृष्णपक्षप्रवृत्तमासाभिप्रायेण ॥ तथा च कूर्मपुराणे—

अमावास्याष्टकास्तिस्रः पौषमासादिषु त्रिषु ।
तिस्रश्चान्वष्टकाः पुण्या माघी पञ्चदशी तथा ॥

अग्निष्वात्ता पितृकन्या पित्रा शप्ता पुनरनुगृहीता सा भाद्रपदापरपक्षाष्टका इति ॥ एकत्वेनोत्पत्तिर्दर्शिता ॥

प्रौष्ठपद्यष्टका भूयः पितृलोके भविष्यति ।
आयुरारोग्यपुत्रादिसर्वकामफलप्रदा ॥ इति ॥

[५८९] आसां नवम्यन्वष्टका इति ॥ अनु पश्चाद्भवतीत्यन्वष्टका ॥ अनेन अन्वष्टनाम्ना येषु मासेषु अष्टका भवन्ति तेष्व-

न्वष्टका इति भावः ॥ द्वे पित्र्यष्टके द्वे अन्ये शाकाष्टकापूपाष्टके च आसु गृह्योक्तं कर्म कार्यं साग्निभिः श्राद्धं च ॥ शाङ्खायनगृह्ये ॥ श्वोऽन्वष्टक्यं पिंडपितृयज्ञावृतेति ॥ अष्टकास्वन्वष्टकासु च श्राद्धं कार्यं ॥ तदुक्तं संग्रहे—

अष्टकासु च कर्तव्यं श्राद्धं हैमन्तिकासु च ।
अन्वष्टकासु क्रमशो मातृपूर्वं तदिष्यते ॥

तथा—वृद्धावादौ गये चान्ते मध्ये त्वन्वष्टकासु चेति ।

मातृपार्वणमन्वष्टकासु मध्ये विहितं ॥ अतोऽन्वष्टकायामविद्यमानपितृकः क्रमशः पितृक्रमेण श्राद्धं कुर्यात् ॥ जीवत्पितृकस्तु मातॄणां पूर्वं कुर्यात् ॥ तथा चोक्तं विष्णुना ॥ अपरपक्षान्वष्टकासुपक्रम्य मात्रे पितामह्यै दद्यात् ॥ केवलं मातृपार्वणं जीवत्पितृकस्य युक्तं ॥ तथा शाकैश्चतुर्थ्यामेव सर्वदेति एवकारणे चतुर्थ्यामपरपक्षान्वष्टकायां सर्वेषां श्राद्धं नियतं अन्यास्वनियतं ॥ जीवत्पितृकस्याष्टकादिश्राद्धाधिकाराभावेऽपि अस्मिन्मातृश्राद्धेऽधिकारः शाकेनापरपक्षमातिक्रमेत् इति वचनात् ॥-

६९० यच्चोक्तं ॥ अष्टकासु दैवपूर्वकं श्राद्धं कृत्वा अन्वष्टकास्वष्टकावदग्नौ हुत्वा दैवपूर्वमेव ॥ शृणु ॥ अस्मिन् श्राध्धे होमपूर्वकत्वं न नियतं अन्वष्टकायां होमः पिंडपितृयज्ञो विहितः ॥ शाङ्खायनगृह्ये ॥ श्वोऽन्वष्टक्यं पिंडपितृयज्ञावृतेति ॥ पिंडपितृयज्ञो जीवत्पितृकस्य निषिध्धः ॥ न जीवत्पितुरस्तीति ॥ ततो होमस्य पूर्वानुष्ठानार्थमनुवादः ॥ श्राध्धं स्वतंत्रं ततो होमं विना निरग्निनानुष्ठेयमपरपक्षान्वष्टकाश्राध्धं ॥ नियतत्वात् साग्नेरष्टकान्वष्टकाश्राध्धं च होमपूर्वकं भवेत् ॥ अष्टम्यामष्टका-

श्राध्धं तत्र नवम्यां यत्क्रियते तदन्वष्टक्यं ॥ सप्तम्यां क्रियमाणे पूर्वेद्युरष्टकाप्रकरणे मिताक्षरायामुक्तानि श्राध्धानि अन्वष्टकाश्राध्धगतो विशेषो निरूपितः स्त्रीणां पृथक्श्राध्धनिर्णये ॥ अत्र विशेषः ॥ एतन्मातृप्रधानमन्वष्टकाश्राध्धं जीवन्मातृको न कुर्यात् ॥ [५५१] यतः स्मृतिमञ्जर्यां—

मातृणामेव तद्यस्मान्मातृश्राध्धं तदुच्यते इति ॥

मातृप्रधानंश्राध्धमिति ॥ तथापि—

अस्मिन्नन्वष्टकाश्राध्धे पितुः पूर्वं प्रदीयते ।

तदुक्तं स्मृत्यन्तरे—

अन्वष्टकासु नवभिः पिंडैः श्राध्धमुदाहृतम् ।

पित्रादिमातृमध्यस्थं ततो मातामहान्तिकम् ॥

तथा—वृध्धावादौ गये चान्त्ये मध्ये त्वन्वष्टकासु च ।

इत्यादिभिरन्वष्टकायां मातृपार्वणं मध्ये विहितं ॥ अथ जीवन्मातृको न कुर्यादित्यत्र नञः पर्युदासो न संबोभवीति ॥ पर्युदासो हि मातृश्राद्धातिरिक्तं श्राद्धं कुर्यादिति प्राप्नोति ॥ अन्वष्टकासु जीवन्मातृकस्य अमावास्याष्टका वृद्धिरित्यादिवत्सामान्यतः श्राद्धप्राप्तिर्नास्ति ॥ अन्वष्टकासु वृद्धौ चेत्यादिकार्ष्णाजिनीयादिवचनेषु मातृश्राद्धपृथग्विधाने तात्पर्यं ॥ तस्माज्जीवन्मातृकं प्रत्यन्वष्टकाश्राद्धे नञः प्रतिषेधार्थतेति ॥ जीवन्मातृकोऽष्टकानिमित्तं श्राद्धं न कुर्यादित्यर्थः ॥ अप्राप्तस्यापि प्रतिषेधो दृष्टः ॥ [५५२] यथा ॥ अग्न्याधेये वारवंतीयादिसामगानं विधाय श्रूयते ॥ न ब्रह्मा सामानि गायेत् ॥ अत्राप्राप्तं सामगानं ब्रह्मणः प्रतिषिध्यत इति ॥ तथा—

अन्वष्टकासु क्रमशो मातृपूर्वं तदिष्यते ।

मातृपूर्वं मातृप्रधानं श्राद्धं ॥ अस्ति पूर्वशब्दः प्रधानवाची ॥ यथा पूर्वोपविष्टब्राह्मणे श्राद्धं कर्तव्यं ॥ प्रधानब्राह्मणाग्रे इति गम्यते ॥ अत एव क्रमश इत्यल्पार्थे शस् क्रमोऽल्पीयान् ॥ प्रधानं मातृश्राद्धमिति ॥ अथवा मातृभिरिति हेतौ तृतीया ॥ मातृभिः पूर्वं प्रधानं मातृपूर्वमिति ॥ पूर्वसदृशसमानार्थे तृतीयासमासः ॥

५८७ स्मृतिरपि—गर्भधारणपोषाभ्यां तेभ्यो माता गरीयसी ।

अतश्चान्वष्टकाश्राद्धे मातृश्राद्धप्रधानता ॥

विशेषोऽत्र प्रकर्तव्योऽप्यन्यस्माच्छ्राध्धकर्मण इति ॥

इदमन्वष्टकाश्राध्धं मृतमातृनिमित्तकम् ।

नैमित्तिकं न लुप्येत सूतके नित्यलोपनात् ॥

नैमित्तिकं अन्वष्टक्यं नित्यं दार्शिकं ॥ दार्शिकान्वष्टकयोरुभयोः पिंडान्वाहार्यकत्वेपि नित्यनैमित्तिकभेदात् समत्वं न भवति ॥ तदुक्तं—

आन्वष्टक्यमाब्दिकवच्छ्राध्धं नैमित्तिकं मतम् ।

पिंडान्वाहार्यकत्वेऽपि कथं दर्शसमानता ॥

दर्श इति दर्शश्राध्धस्य ॥ सूतके आशौचे नित्यं दार्शिकं लुप्यते॥ नैमित्तिकं तु वचनादाशौचान्ते स्यात्॥ पिंडपितृयज्ञः सूतकेऽपि भवेदिति च ॥ तदाह जातूकर्ण्यः—

सूतके तु समुत्पन्ने स्मार्तकर्म कथं भवेत् ।

पिंडयज्ञं चरुं होममसगोत्रेण कारयेत् ॥

ऋष्यशृङ्गः—आब्दिके चैव संप्राप्ते आशौचं जायते ध्रुवम् ।

आशौचे तु व्यतिक्रान्ते तस्य श्राध्धं प्रतीयत इति ॥

[५५४] किं च ॥ शाङ्खायनगृह्यस्मृतौ ॥ मध्यमायां मध्यावर्षे चेति ॥ समानकर्मताभिधानात् ॥ मध्यावर्षे च तुल्यामध्या इति सूचितं ॥ अष्टकान्वष्टकाश्राध्धनिर्णयस्तु ॥

महालयस्य पक्षस्य अष्टकानामपि स्मृत इति

कालादर्शे दर्शस्य निर्णयेनैव निर्णय इत्युक्तं ॥ इति निर्णयः ॥ किं च मातृप्रधानमिदमन्वष्टकाश्राध्धं जीवन्मातृकः स्नेहवशात् पितामहीप्रभृति न कुर्यात् ॥ तदभिप्रायपरं वचनं ॥ यथा—

जनन्यां विद्यमानायां यजेद्यश्च पितामहीम् ।

मातृघ्नः स तु विज्ञेयो वृध्धिश्राध्धे तु पार्वणम् ॥

अत्र वृध्धिश्राध्धे पार्वणमाब्दिकमेकोद्दिष्टेन जीवन्मातृकस्येति वचनमस्ति ॥ पितृवंशमातृवंशतर्पणं अमावास्यादावन्वष्टक्ये पिंडदानं च पिंडान्पश्चिमेन तत्पत्नीनामिति शाङ्खायनगृह्यवचनाद्भवति॥ [५५५] अतः पितामहीयागनिषेधो अन्वष्टकायामवतिष्ठते ॥ तु शब्दादयमर्थः सूचितः ॥ तर्पणे विशेषः॥

एकैकमञ्जलिं देवा द्वौ द्वौ तु सनकादयः ।

अर्हन्ति पितरस्त्रींस्त्रींस्त्रियश्चैकैकमञ्जलिमिति ॥

स्त्रिय इति जननीव्यतिरिक्ताः पितृपत्न्यः स्वमातॄणां तु त्रींस्त्रीनञ्जलीन् दद्यात् ॥ तदुक्तं स्मृतिसारे—

मातृमुख्या हि यास्तिस्रःस्तासां दद्याज्जलाञ्जलीन् ।

अन्यासां पितृपत्नीनां दद्यादेकैकमञ्जलिम् ॥

अन्यासां स्वमातृव्यतिरिक्तपितृपत्नीनां ॥

सापत्नमातुः कुर्वीत एकोद्दिष्टं न पार्वणम् ।

इति सूचितं ॥ तिस्र इति पार्वणोपलक्षणं ॥ तेन मातामहीनां स्वमातृतुल्यत्वमेव ॥

औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुतः । इति ॥

[५८५] तथा—दौहित्रैर्वा नरश्रेष्ठ कार्यास्तत्तनयैर्यथा ।

इत्यादिवचनेषु पुत्रिकासुतस्य दौहित्रस्य औरसपुत्रसमानत्वाभिधानात् ॥ तर्पणोपक्रमे स्मृत्यर्थसारचण्डुनिबन्धादिषु त्रींस्त्रीनञ्जलीनुक्त्वा मातॄणां मातामहीनां च भेदो नाभिहितः ॥

पितरो यत्र पूज्यन्ते तत्र मातामहा अपि ।

अविशेषेण कर्तव्यं विशेषान्नरकं व्रजेत् ॥ इति ॥

## इत्यष्टकानिर्णयः

---

## अथ वृद्धिश्राद्धं ॥

तत्र नान्दीमुखान् पितॄन्यजेत् ॥ तेन वृद्धिमान् स्यात् ॥ तदुक्तं—वृद्धौ श्राद्धं नरः कुर्यान्नित्यं वृद्धिमुपाश्नुते ।

वृद्धौ समर्चयेद्विद्वान् नित्यं नान्दीमुखान्पितॄन् ॥

वृद्धिश्राद्धनिमित्तान्यभिधीयन्ते ॥ तावद्गार्ग्यः—

पुत्रोत्पत्तिप्रतिष्ठासु तन्मौञ्जीत्यागबन्धने ।

चूडायां च विवाहेषु वृध्धिश्राध्धं विधीयते ॥

प्रतिष्ठासु देवताविषयपञ्चप्रतिष्ठासु ॥ [५८७] तथा वापीकूपतडागारामप्रतिष्ठासु च ॥ कार्ष्णाजिनिः—

कन्यापुत्रविवाहेषु प्रवेशे नववेश्मनि ।

नामकर्माणि बालानां चूडाकर्मादिके तथा ।

सीमन्तोन्नयनेचैव पुत्रादिमुखदर्शने ॥

नान्दीमुखान् पितृगणान् कारयेत्प्रयतो गृही ।

चूडाकर्मादिके आदिशब्देन मौञ्जीबन्धे तन्मोक्षे च पुत्रादिमुखेति आदिशब्दात् पुत्रीमुखदर्शनोपसंग्रहः ॥

वृध्धगार्ग्यः—अग्न्याधानाभिषेकादाविष्टापुर्ते स्त्रिया ऋतौ ।

वृध्धिश्राध्धं प्रकुर्वीत आश्रमग्रहणे तथा ॥

इति अग्न्याधानाभिषेकादावित्यत्र द्वंद्वान्ते श्रूयमाण आदिशब्दः प्रत्येकमभिसंबध्यते ॥ तेनाग्न्याधानादौ आदिशब्देन यज्ञव्रतानामुपसंग्रहः ॥ यज्ञः दर्शपूर्णमासज्योतिष्टोमादिः ॥ व्रतानि प्राजापत्याग्नेयवैश्वदेवसौम्यगोदानव्रतानि ॥ अभिषेकादौ अभिषेको राज्याभिषेकः ॥ आदिशब्देन गृहप्रवेशमहादानादि ॥ इष्टापूर्ते देवप्रासादप्रतिष्ठा वाप्यादेश्च ॥ स्त्रिया भार्यायाः प्रथमर्तुप्रादुर्भावस्तत्र आश्रमग्रहणे वानप्रस्थयत्याश्रमस्तत्स्वीकारे एषु निमित्तेषु नान्दीमुखं कुर्यात् ॥ [५८८] तथा अन्नप्राशने पुंसवने च ॥ तदाह लौगाक्षिः—

नामान्नचौलगोदाने सोमोपनयपुंसवे ।

स्नानदानाविवाहेषु नान्दीश्राद्धं विधीयते ॥

गोदानशब्दः प्राजापत्याद्युक्तचतुर्व्रतोपलक्षणः ॥ सोमो यज्ञः । उपनयः उपवीतं । स्नानं समावर्त्तनं । एतानि निमित्तान्युक्तानि कालादर्शे ॥

सीमन्तव्रतचौलनामकरणान्नप्राशनोपायन ।

स्नाने दानविवाहयज्ञतनयोत्पत्तिप्रतिष्ठासु च ॥

पुंसवनावसथप्रवेशनसुताद्यास्यावलोकाश्रम ।
स्वीकारक्षितिपाभिषेकदयितोद्यतौ च नान्दीमुखम् ॥

श्राद्धं कुर्यादितिविशेषः ॥ वृद्धिश्राद्धं नैमित्तिकं ॥ तद्वि-धानार्थं कालमाह ॥

नैमित्तिकं तु यच्छ्राद्धं निमित्तानन्तरं भवेत् ।
नान्दीमुखाह्वयं प्रातराग्निकं स्वपराणहतः ॥

६९९ ननु—नैमित्तिकस्यापि वृद्धिश्राद्धस्य पुत्रजन्मनिमित्तग्रहणे निमित्तादूर्ध्वं विधानात् ॥ तथा विवाहोपनयनादि निमित्ता-त्पूर्वं विधानात् ॥ अतो निमित्तानन्तरं नैमित्तिकमिति वक्तुं न युक्तं ॥ सत्यं ॥ निमित्तं द्विविधं ॥ नियतनिमित्तं अनियत-तनिमित्तं च ॥ विवाहादेर्ज्योतिः शास्त्रोक्तर्तुमासपक्षतिथिन-क्षत्रलग्नरूपनियतकालतया नियतनिमित्तत्वं ॥ पुत्रजन्मन-स्तु शास्त्रोक्ततिथिनक्षत्रव्यभिचारादनियतकालतया अनियत-निमित्तत्वं॥ अतो नियतनिमित्तं प्रातः अनियतनिमित्तं निमि-त्तानन्तरमिति निश्चयः ॥ तदाह लोगाक्षिः—

नियतेषु निमित्तेषु प्रातर्वृद्धिनिमित्तकम् ।
तेषामनियतत्वे तु तदनन्तरमिष्यते इति ॥

७०० कार्ष्णाजिनिः—प्रादुर्भावे पुत्रपुत्र्योर्ग्रहणे चन्द्रसूर्ययोः ।
स्नात्वाऽनन्तरमात्मीयान्पितॄन् श्राद्धेन तर्पयेत् ॥ इति॥

अत्रिः—पूर्वाण्हे वै भवेद्वृद्धिर्विनाजन्मनिमित्तकम् ।
पुत्राजन्मनि कुर्वीत श्राध्धं तात्कालिकं बुधः ॥

तात्कालिकं पुत्राजन्मानन्तरं ॥ पूर्वाण्हे प्रातर्वृध्धिर्नान्दी-मुखं भवेत् ॥ नान्दीमुखाह्वयं प्रातः पूर्वाण्हे भवेत् ॥ नान्दी-

मुख्यश्राध्धार्थं कालमाचष्टे गार्ग्यः—

ललाटसंमिते भानौ प्रथमः प्रहरः स्मृतः ।
स एवाध्यर्धसंयुक्तः प्रातरित्यभिधीयते ॥

अर्धप्रहरान्वितः प्रहरः मुख्यः न तु सङ्गवात्पूर्वः प्रातरिति गौणः सः ॥ तथा आग्निकं त्वपराण्हतः ॥ आग्निकं अग्न्युत्पत्ति निमित्तकं आधाननिमित्तकंतदपराण्हतो भवेत् ॥ अपराण्हत इति सप्तम्यर्थे तसिल् ॥ ७०१ तदाह गालवः—

आमश्राद्धं तु पूर्वाण्हे सिद्धान्नेन तु मध्यतः ।
पार्वणं चापराण्हे तु वृद्धिश्राध्धं तथाग्निकमिति ॥

सिद्धान्नेन तु मध्यत इत्येकोद्दिष्टविषयं ॥ इदमाभ्युदयिकं श्राध्धं मातृपूर्वकं कार्यं ॥ तदुक्तं मत्स्यपुराणे—

उत्सवानन्दसन्ताने यज्ञोद्वाहादि मङ्गले ।
मातरः प्रथमं पूज्याः पितरस्तदनन्तरम् ॥
ततो मातामहानां च विश्वेदेवास्तथैव चेति ॥

मातर इति मातृपितामहिप्रपितामह्यः अत्र विशेषमाहगार्ग्यः—

मातृश्राध्धं तु पूर्वेद्युः कर्माहन्येव पैतृकम् ।
मातामहानुत्तरे द्युर्वृद्धौ श्राध्धत्रयं स्मृतम् ॥

अथवा शुभकर्मदिवसात्पूर्वस्मिन्नहनि श्राध्धत्रयं कुर्यात् ॥ तदुक्तं शातातपेन—

पृथग्दिनेष्वशक्तश्चेदेकस्मिन्पूर्ववासरे ।
श्राध्धत्रयं प्रकुर्वीत वैश्वदेवं तु तांत्रिकम् ॥

शुभकर्मदिवसे वा कार्यं ॥ तथा शाङ्खायनः ॥ पुण्याहे मातृयागं कृत्वेत्यादि ॥ ७०२ महाभारते तु—

इष्टापूर्तादि पूर्वेद्युः सद्य एव करग्रहे ।
द्वितीये वा चतुर्थे वा अन्यत्रैव यथारुचि ॥

करग्रहे कन्यादाने । सद्य इति संभवाभिप्रायं ॥ असंभवे तु
तृतीयं नवमं षष्ठं नोद्वाहार्वाग्दिनंशुभमिति ॥
सामान्यवचनात् शुभदिने काय मातृश्राध्धमिति ॥
पित्रादित्रय [illegible] भोज्या मातृः प्रतिद्विजाः ॥
अत्र पत्नीग्रहणाज्जनन्यां सत्यां सापत्नमातुरन्यत्र देयं॥
तदुक्तं—सापत्नमातुः कुर्वीत एकाद्दिष्टं न पार्वणम् ।
जनन्यां विद्यमानाया वृाद्धश्राध्धे तु पार्वणमिति ॥
अन्यत्र तु—पार्वणेन विधानेन श्राध्धं तु क्षत्रजौरसौ ।
कुरुतोऽन्ये सदा कुर्युरेकोद्दिष्टं न पार्वणमिति ॥
जातूकर्ण्यवचनाद्यथाकुलाचारं कार्यं ॥ वृध्धिश्राध्धे चत्वारः पार्वणा इत्यभिहितं ॥ ७०३ चतुर्विंशतिमते—
मातृपूर्वान् पितॄन् पूज्यांस्ततो मातामहानपि ।
मातामहीस्ततः केचिद्युग्मा भोज्या द्विजातयः ॥
तथा—मातृश्राध्धे तु विप्राणामभावे तु कुलान्विताः ।
पतिपुत्रान्विताः साध्व्यो योषितोऽष्टावुदाहृता इति ॥
गरुडवचनाद्विप्राभावे स्त्रियोऽपि भोजनीया इति ॥ तथा पत्नीत्रिकस्येति मात्रादीति ॥

इति वृद्धिश्राद्धनिर्णयः ॥

## अथ वृद्धिश्राद्धाधिकार्यभिधीयते ॥

जातकर्मादिविवाहपर्यन्तमपत्यसंस्कारकर्मसु पिता वृद्धिश्राध्धं कुर्यात् स्वपितृभ्य इति ॥ तदुक्तं–

स्वपितृभ्यः पिता दद्यात्सुतसंस्कारकर्मसु ।
पिंडानोद्वाहनात्तेषां तस्याभावे तु तत्क्रमात् ॥

७०४ तेषां सुतानां आउद्वाहनाद्विवाहमभिव्याप्य जातकर्मादि संस्कारकर्मसु नान्दीश्राध्धविहितान् पिंडान् पिता दद्यात् ॥ पिंडानिति पिंडोपलक्षितं वृध्धिश्राध्धं कुर्यादित्यर्थः ॥ तस्य पितुरभावे तदपत्यादीनां संस्कारकर्मणि तत्क्रमात्पितृक्रमाद्द्याद्न्यः संस्काराधिकारी ॥

असंस्कृताः सुसंस्कार्या भ्रातृभिः पूर्वसंस्कृतैः ।

भगिन्यश्चनिजादंशादिति वचनेन भ्रातृभगिन्योः संस्कारकर्मणि भ्राता अधिकारी ॥ तदभावे अन्य इति मिताक्षरायामुक्तं ॥

स्मृत्यन्तरे च–पित्रोस्तु जीवतोः पुत्रः कुरुते दारसंग्रहम् ।
पितुर्नान्दीमुखं प्रोक्तं न पुत्रस्य कदाचनेति ॥

एतत्प्रथमविवाहविषयं ॥ पत्न्यां विद्यमानायामविद्यमानायां वा द्वितीयविवाहे स्वयं नान्दीमुखं श्राद्धं कुर्यात् ॥ ७०५ तदुक्तं स्मृत्यन्तरे–

नान्दीश्राद्धं पिता कुर्यादाद्ये पाणिग्रहे बुधः ।
अत ऊर्ध्वं प्रकुर्वीत स्वयमेव तु नान्दिकम् ॥

ननु–स्वपितुः पितृकृत्येषु अधिकारो न विद्यते ।
न जीवन्तमतिक्रम्य किंचिद्दद्यादिति श्रुतेः ॥ इति ॥

जीवत्पितृकस्य निषेधात्कथं श्राद्धं प्रकुर्वीतेति ॥ न उद्वाहे पुत्रजनने इत्यादिभिर्जीवत्पितः श्राद्धविधानात् निषेधस्तु विधानव्यतिरिक्ताष्टकामावास्यादि विषयः ॥ यच्च कैश्चिद्वृद्धिश्राध्धे जीवन्तमतिक्रम्य न दद्यादित्युच्यते ॥ तद्वचनमध्ये वृध्धिश्राध्धपदाभावादिति संतोष्टव्यं ॥ विधानं जीवत्पितृकश्राध्धे विलोकनीयं ॥ ७०६ तथा वृध्धिश्राध्धाकरणे दोषवचनं॥

वृद्धौ न तर्पिता या वै देवता गृहमेधिभिः ।
तद्दानमफलं सर्वमातुरो विधिरेव सः ॥

देवता श्राध्धदेवता मातृपितामह्यादयः ॥ तथा पितरि जीवति पातित्यादिदोषयुक्ते यतौ वा ॥ यदा तु तं सुतमन्यः संस्करोति जातकर्मादिना तदा तस्य जनकस्यैव पितृभ्यो दातव्यं ॥ यथोक्तं—

पितरो जनकस्येज्या यावद्व्रतमनाहितम् ।
समाहितव्रतः पश्चात्स्वान्यजेत पितामहानिति ॥

विष्णुः ॥ पितामहे जीवति पितुरभावे पितृपिंडं निधाय पितामहात्पराभ्यां द्वाभ्यां दद्यात् ॥

मनुः—पिता यस्यानुवृत्तः स्याज्जीवेच्चाथ पितामहः ।
पितुः स नाम संकीर्त्य कीर्तयेत्प्रपितामहम् ॥

तथा यस्य पितापितामहौ निवृत्तौ प्रपितामहो जीवति सः पिंडद्वयं निधाय प्रपितामहात्पराय दद्यात् ॥ ७०७ यस्य पिता निवृत्तः पितामहप्रपितामहौ जीवतः सः पितृपिंडं निधाय प्रपितामहात्पराभ्यां दद्यात् ॥ एवं मात्रादिषु उहनीयं ॥ जीवन्तं मातामहमतिक्रम्य न दद्यात् वचनाभावात् ॥ त-

था पितृपितामहे प्रपितामहे च जीवति नैव कुर्यात् ॥ एवं मात्रादिषु ॥ तथा च सुमन्तुः—

सानिकोऽपि न कुर्वीत जीवति प्रपितामहे ।

इति ॥ तत्र केवलं मातर एव पूज्यन्त इति सिध्धं ॥

अकृत्वा मातृयागं तु वैदिकं यः समाचरेत् ।
तस्य क्रोधसमाविष्टा हिंसामिच्छन्ति मातरः ॥

## इति वृद्धिश्राद्धाधिकारी निर्णयः ॥

---

## ७०८ अथ वृद्धिश्राद्धविधिः ॥

तत्र शाङ्खायनगृह्यं ॥ अथात आभ्युदयिकमापूर्यमाणपक्षे पुण्याहे मातृयागं कृत्वा युग्मान्वेदविद उपवेश्य पूर्वाण्हे प्रदक्षिणमुपचारः पितृमंत्रवर्ज्यं जप ऋजवोदर्भा यवैस्तिलार्थो दधिबदराक्षत मिश्राः पिंडा नान्दीमुखान् पितृनावाहयिष्य इत्यावाहने नान्दीमुखाः पितरः प्रीयन्तामित्यक्षय्यस्थाने नान्दीमुखान्पितृन्वाचयिष्य इति वाचने संपन्नमिति तृप्तिप्रश्नः समानमन्यदविरुध्धमिति ॥ याज्ञवल्क्यः—

एवं प्रदक्षिणावृतो वृध्धौ नान्दीमुखान्पितृन् ।
यजेत दधिकर्कंधूमिश्रान्पिण्डान्यवैः क्रियाः ॥

प्रदक्षिणावृत इति प्रदक्षिणां आवृत् ॥ कात्यायनः—

वृद्धौ समर्चयेद्विद्वान्नित्यं नान्दीमुखान्पितृन् ।
संपादितो विशेषस्तु शेषं पार्वणवद्भवेत् ॥

प्रचेताः ॥ प्राङ्मुखो देवतीर्थेन ॥ आश्वलायनपरिशिष्टे॥ प्राङ्मुखेभ्य उदङ्मुखो दद्यात् उदङ्मुखेभ्यः प्राङ्मुखो ॥

द्वौ दर्भौ पवित्रे इति ॥ भविष्यत्पुराणे—

मधुरं भोजनं दद्यान्नवान्नं परिवेषयेत् ।
रक्तपुष्पं तिलांश्चैव अपसव्यं च वर्जयेत् ॥

कात्यायनः ॥ यवोसीत्यूहः पुष्ट्येति च न स्वधां प्रयुञ्जीत ॥

सदा परिचरन्भक्त्या पितॄनप्यत्र देववत् ।
निपातो हि न सव्यस्य प्रागग्रेषु कुशेषु च ॥
दत्वा पिंडान्न कुर्वीत् पितृपात्रमधोमुखम् ।

७०९ स्मृत्यन्तरे—पितृलिङ्गेन मंत्रेण यत्कर्म मुनिभिः स्मृतम् ।
तेनैव तद्विधातव्यममंत्रमकृतं यतः ॥

कात्यायनः—ज्येष्ठोत्तरकरान्युग्मान्कराग्राग्रपवित्रकान् ।
कृत्वार्घं संप्रदातव्यं नैकैकस्य प्रदीयते ॥

आवाहनाद्यपि द्वंद्व एव ॥ अतो देवा अवन्तु न इत्यङ्गुष्ठग्रहण ॥

मधुमध्विति यस्तत्र त्रिर्जपोऽशितुमिच्छतां ।
गायत्र्यनन्तरं स्तोत्रमधुमंत्रविवर्जितः ॥

भोजने स्वस्त्ययनजपः ॥ मधुवाता ऋचस्थाने उपास्मै गायतेति पञ्चमधुवातीः श्रावयेत् ॥ अक्षन्नमीमदन्तेति षष्ठीमिति परिशिष्टे ॥ कात्यायनः—

यस्तत्र प्रकरोऽन्नस्य तिलवान्यववांस्तथा ।
उच्छिष्टसन्निधौ सोत्र तृप्तेषु विपरीतकः ॥

७१० अथाद्भिर्भूमिमासिञ्चेत् ॥ सुप्रोक्षितमस्त्विति शिवा-आपः सन्त्विति च ॥ युग्मानेवोदकेनैव हि सौमनस्यमस्त्विति च पुष्पदानमनन्तरं ॥ अक्षतं चारिष्टं चास्त्विति अक्षता-

न्प्रतिपादयेत् ॥ युग्मानेव स्वस्ति वाच्य ब्राह्मणांस्त्यमूषुवाजी-
नं देवेति पठंस्तान्विसर्जयेत् ॥ अत्र श्राद्धे भोजनमाहुः ॥

ब्राह्मणेभ्यस्ततो दद्यान्मधुरं भोजनं खग ।
गुडमिश्रं यवपिष्टं सवज्रंह्योदनं परम् ॥

कर्मप्रदीपे—वसिष्टोक्तो विधिः कृत्स्नो द्रष्टव्योऽत्र निरामिषः ।
आमिषं पायसं चैव वर्जयेदाभ्युदायिक इति ॥

भविष्योत्तरे—पिंडनिर्वपणं कुर्यान्नवा कुर्यान्नराधिप ।
वृद्धिश्राद्धे महाबाहो कुलधर्मानवेक्ष्यत्विति ॥

कुलाचारप्राप्तं चेत्कुर्यात् ॥

इति वृद्धिश्राद्धनिर्णयः ॥

---

७११अथ संघातमृतानां प्रत्याब्दिकश्राद्धविषयो विशेषः प्रस्तूयते ॥

बहूनां द्वयोर्वा एकस्मिन्दिने मरणं संघातमरणं तत्र मरणक्रमात् श्राद्धं कुर्यात् ॥ तदुक्तं—

पत्नी भ्राता सुतादीनां सपिंडानां यदि क्रमात् ।
संघातमरणं यत्र तत्क्रमाच्छ्राद्धमाचरेत् ॥

ऋष्यशृङ्गोऽपि—कृत्वा पूर्वमृतस्यादौ द्वितीयस्य ततः पुनः ।
तृतीयस्य ततः कुर्यात्सन्निपाते त्वयं क्रमः ॥

यदा तु अग्निज्वालाद्युपद्रवेण संघातमृतानां मरणक्रमो न ज्ञायते तदा कथं इत्याशङ्कायां सबन्धक्रमेण श्राद्धक्रम इति ॥ ऋष्यशृङ्गः पुनराह—

भवेद्यदि सपिंडानां युगपन्मरणं तदा ।

संबन्धासत्तिमालोच्य तत्क्रमाच्छ्राद्धमाचरेत् ॥

तथा_पत्न्यादीनां सपिंडानां युगपन्मरणं यदि ।

तत्र संबन्धासत्तियोगतः इति कालादर्शे ॥ तत्रासत्तियोगतः आसत्तिवशात् क्रमेण श्राद्धं कुर्यात् ॥ ७१२ पत्नीपतित्वलक्षणसंबन्धस्यासन्नत्वात्पत्न्याः प्रथमं श्राध्धं कुर्यात् ॥ अनन्तरमुभयप्रयोगिकपुत्रलक्षणसंबन्धभाजः पुत्रस्य अनन्तरं पुत्राऽव्यवहितसंबन्धभाजो भ्रातुः एतत्पुत्रादिष्वप्यूहनीयं ॥ तथा बहूनि श्राध्धानि पृथक्पाकविधानासंभवे एकपाकेन कुर्यात् ॥ तदुक्तं भृगुणा—

एककाले गतासूनां बहूनामथवा द्वयोः ।

तंत्रेण श्रपणं कुर्याच्छ्राध्धं चैव पृथक्पृथक् ॥ इति ॥

तथा द्वे बहूनि वा श्राध्धानि कुतपाद्युक्तकाले पृथक्पृथग्विधातुमशक्यत्वे सति तंत्रेण कुर्यात् ॥ तद्विषयो विशेषश्चोक्तो गरुडपुराणे—

एकेनैव तु पाकेन श्राध्धानि कुरुते बहु ।

विकरं त्वेकतः कुर्यात् पिंडान् दद्यात्पृथक्पृथक् ॥

तीर्थे चापरपक्षे च चन्द्रसूर्यग्रहे तथा ।

तथेत्येकपाकेनेत्यर्थः ॥ एतदेकपाकविधानं समानधर्मश्राध्धविषयं ॥ मासिकप्रत्याब्दिकादिभिन्नधर्मेषु प्रथगिति ॥ अत्र विशेषः ॥ पित्रोः श्राध्धे युगपदुपस्थिते पितुः पूर्वं कृत्वा पश्चान्मातुः कुर्यात् ॥ तदाह कार्ष्णाजिनिः—

पित्रोः श्राध्धे समं प्राप्ते न चेत्पर्युषितेऽपि वा ।

पितृपूर्वं सुतः कुर्यादन्यत्रासत्तियोगतः ॥

पर्युषिते चिरन्तने अन्यत्र मातृपितृव्यतिरिक्तश्राध्धे[७१३] स्मृत्यर्थसारे ॥ पित्रोः श्राध्धैक्याहे तु पितृश्राध्धं मातृश्राध्ध-मेककाल एकपाकेन क्रमेण समापयेत् ॥ ननु मातृश्राद्ध-दिने आशौचादिनिमित्तादन्यकालादागते पितृश्राध्धेऽपि मातुः श्राध्धं पूर्वं कुर्यात् ॥ कुतः स्थानप्रमाणात् ॥ यथा श्येन-यागे सहपशूनालभेत इति पशूनां सह आलभने विहिते स्थानबाधाय सवनीयः प्रथममालभ्यते ॥ पश्चादग्नीषोमीयः स्थानाच्चोत्पत्तिसंयोगादिति सूत्रेण ॥ तद्वत् सत्यं प्राप्नोति परन्तु उदाहृतकार्ष्णाजिनिवचनात् ॥

तथा—पित्रोस्तु पितृपूर्वत्वं सर्वत्र श्राध्धकर्मणि ।

इति कालादर्शवचनाच्च अत्रापि पूर्वं पितृश्राध्धं कार्यं ॥ अत्रैव विशेषः॥ अनशनादिना पित्रोर्मध्ये पार्वणैकोद्दिष्टयोः सन्निपाते अन्येषां वा पार्वणैकोद्दिष्टयोः पार्वणं पूर्वमाचरेत् ॥ तदाह जाबालिः—यद्येकत्र भवेयातां एकोद्दिष्टं तु पार्वणम् ।

पार्वणं त्वभिनिर्वर्त्य एकोद्दिष्टं समाचरेत् ॥

[७१४] तथा अन्यत्र—

पार्वणैकोद्दिष्टयोस्तु पार्वणं पूर्वमाचरेत् । इति ॥

अन्येषां पार्वणापेक्षया मातापित्रोरेकोद्दिष्टमपि पूर्वमेव संबन्धाधिकत्वात् पुनर्विशेषः ॥ मासिकप्रत्याब्दिकदर्शादिपार्वणैकोद्दिष्टमध्ये पूर्वमेकोद्दिष्टमनुष्ठेयं अनियतनिमित्तत्वात् ॥ तदुक्तं कालादर्शे—

निमित्तानियतिश्चात्र पूर्वानुष्ठानकारणम् । इति॥

नियतनिमित्तं दर्शादिश्राद्धं पश्चादिति ॥

## इति संघातश्राद्धनिर्णयः ॥

[७१५]पुनः श्राध्धानिमित्तानि ॥

एकदिने एकः श्राद्धकर्तापि निमित्तभेदेन श्राद्धद्वयं कुर्यात् ॥ तदुक्तं कालादर्शे—

नित्यस्य चोदकुंभस्य दार्शमासिकयोरपि ।
युगाद्याब्दिकयोश्चापि मन्वाद्याब्दिकयोरपि ॥
प्रत्याब्दिकेषु चालभ्ययोगेषु विहितस्य च ।
संपाते देवताभेदात् श्राद्धयुग्मं समाचरेदिति ॥

अत्र मासिकोदकुंभाद्यनियतंनिमित्तं कृत्वा पश्चान्नित्यं दार्शिकादिकं कुर्यात्॥ येषु निमित्तेषु पृथक् न कार्यं प्रसङ्गात्सिध्यति तदुच्यते ॥ एतदपि कालादर्शात्—

नित्यदार्शिकयोः सोदकुंभमासिकयोरपि ।
दार्शिकस्य युगादेश्च दार्शिकालभ्ययोगयोः ॥
दार्शिकस्य च मन्वादेः संपाते श्राध्धकर्मणः ।
प्रसङ्गादितरस्यापि सिद्धेरुत्तरमाचरेत् ॥

इति नित्यदार्शिकयोः संपाते दार्शिकं कुर्यात् ॥ [७१६] सपिंडनोत्तरं प्रतिदिवसाविहितं सोदकुंभं मासिकं च तयोर्मासिकं कुर्यात्॥ माघामावास्या युगादिः।फाल्गुनामावास्या मन्वादिः। अलभ्ययोगशब्देन चन्द्रसूर्यग्रहणसंक्रान्त्यर्धोदयादीनामुपसंग्रहः ॥ अथैककर्त्ता एकदिने एकमुद्दिश्य श्राध्धद्वयं न कुर्यात् ॥

तदाह दक्षः—नैकः श्राध्धद्वयं कुर्यात् समानेऽहनि कुत्रचित् ।
न यज्ञं न बलिं चैव देवर्षिपितृतर्पणमिति ॥

निमित्तभेदे कर्तव्यं ॥ तदाह जाबालिः—

श्राध्धं कृत्वा तु तस्यैव पुनः श्राध्धं तु कारयेत् ।
नैमित्तिकं तु कर्तव्यं निमित्तोत्पत्यनुक्रमादिति ॥
श्राध्धं कृत्वा पुनः श्राध्धं न कुर्यादेकवासरे ।
यदि नैमित्तकं न स्यान्नैकोद्दश्यं भवेद्यदि ॥ इति ॥

७१७ तथा—नैकः श्राध्धद्वयं कुर्यादेकस्यैव तु वासरे ।
नैमित्तिकं त्वनेकेषां निमित्तानां च सङ्करे ॥
नैमित्तिकानि तुल्यत्वाद्दैवतैक्ये तु कृत्स्नशः ।

अनेकेषामिति अनेकेषां निमित्तानां सङ्करे नैमित्तिक-श्राद्धानि दैवतैक्येऽपि उद्देश्यैक्येऽपि कृत्स्नानि कुर्यात् निमित्तानां तुल्यत्वात् ॥ तदाह कात्यायनः—

द्वे बहूनि निमित्तानि जायेरन्नेकवासरे ।
नैमित्तिकानि कार्याणि निमित्तोत्पत्यनुक्रमादिति ॥

नित्यकाम्यविषये विशेषः ॥ यत्र दैवतैक्यं तत्र काम्यानुष्ठानान्नित्यं च श्राद्धं प्रसङ्गात्सिध्यति ॥ तदुक्तं स्मृतिसंग्रहे—

काम्यतंत्रेण नित्यस्य तंत्रं श्राद्धस्य सिध्यति ।
स्यादेकत्वं तु देशादेर्दैवतैक्यं भवेद्यदीति ॥

आदिशब्दात्कालस्य ॥

## इति श्राद्धावृत्यनावृत्तिविषयो विचारनिर्णयः ॥

## ७१८ अथ संघातमरणे और्ध्वदैहिकनिर्णयः ॥

पत्न्यादीनां पित्रोश्च संघातमरणे भृगुर्विशेषमाह—

पत्न्याः पुत्रस्य तत्पुत्रभ्रात्रोस्तत्तनयस्य च ।

स्नुषास्वस्रोश्च पित्रोश्च संघातमरणं यदि ॥

तथा—माता भ्राता च तत्पुत्रः पत्नी पुत्रः स्नुषा तथा ।
एषां मृतौ चरेच्छ्राद्धं अन्येषां न पुनः पितुः ॥ इति ॥

पत्न्याद्यनन्तरं मातापितृमृतौ मरणक्रमेण श्राद्धप्रसक्तौ तन्निवृत्यर्थं मातृपितृपूर्वकं कुर्यादिति ॥ पितुरिति अन्तरा पितुर्मृतेऽपि पितृपूर्वकं ॥ यत्तु देवलवचनं—

पितरौ हि मृतौ यस्य देहस्तस्याशुचिर्भवेत् ।
न दैवं नापि पित्र्यं च यावत्पूर्णो न वत्सरः ॥
स्नानं चैव महादानं स्वाध्यायश्चाग्नितर्पणम् ॥
प्रथमाब्दे न कर्तव्यं महागुरुनिपातने ॥ इति ॥

तत् पत्न्यादिसपिंडनाक्रियाविषयं ॥ यत्तु जाबालिवचनं—

पत्नी चैव सुतो भ्राता स्नुषा चैव विपद्यते ।
तत्र श्राद्धानि कुर्वीत न पित्रोर्मृतयोरपीति ॥

तत्पित्रोः सपिंडनाभावे पत्न्यादीनां द्वादशाहादिक्रियानिषेधपरं ॥ यदाह देवलः—

पित्रोरुपरमे पुत्राः क्रियां कुर्युस्तयोरपि ।
अनिर्वृत्तिं च नान्येषां संघातमरणे तथा ॥

७१८ लौगाक्षिः—पत्नीपुत्रस्नुषापौत्राभ्रातृतत्पुत्रका अपि ।
पितरौ वा यदैकस्मिन्म्रियेरन्वासरे तथा ॥
आद्यमेकादशे कुर्यात्रिपक्षे वा सपिंडनमिति ।

पित्रोः सपिंडनानन्तरं त्रिपक्षे इति ॥ पत्न्यादीनां पित्रोश्च संघातमरणे दहनादिकमाद्यश्राद्धपर्यन्तं कृत्वा तत ऊर्ध्वं मातृपितृसपिंडनानन्तरं कुर्यात् ॥ तदाह देवलः—

महागुरुनिपाते तु पितृकार्यं यथाविधि ।
कुर्यात्संवत्सरादर्वाक् नैकोद्दिष्टं न पार्वणम् ॥

ननु नैकोद्दिष्टमिति सामान्यनिषेधात् आद्यश्राद्धं कृत्वेति व्याख्यानं कथं ॥

आद्यश्राद्धमशुध्धोऽपि कुर्यादेकादशेऽहनीति
विशेषवचनान्नानुपपत्तिः ॥ लौगाक्षिरपि—

अन्येषां प्रेतकार्याणि महागुरुनिपातने ।
कुर्यात्संवत्सरादर्वाक् श्राध्धमेकं तु वर्जयेत् ॥

आद्यं श्राध्धं वर्जयित्वा अन्यसंवत्सरादर्वाक् सपिंडनोर्ध्वं कुर्यात् ॥ ७२० यत्तु लौगाक्षिवचनं—

पितर्युपरते पुत्रो मातुः श्राध्धान्निवर्तते
मातर्यपि च वृत्तायां पितुः श्राध्धान्निर्वतते ॥

इत्यस्य का गतिरिति निवृत्तिवचनं यत् तदसंघातमरणे भवेत्॥ मातुर्दशाहमध्ये पितरि मृते मातुः सपिंडनान्निवर्त्तते॥ एवं मातरि मृते द्वादशाहे पितुः सपिंडनश्राद्धान्निवृत्तिरिति ॥ तदाह देवलः—एकाहमरणे पित्रोरन्यस्यान्यदिने मृतौ ।
सपिंडनं त्रिपक्षे स्यादनुयान मृतिं विना ॥

अनुयानमरणे अनुगमनमरणे द्वादशाहे एव भर्त्रा सह सपिंडननिर्णयः॥ ७२१ अथप्रासङ्गिकक्रियाभेदानाह पाराशरः—

पूर्वाःक्रिया मध्यमाश्च तथैवोत्तरसंस्क्रियाः ।
त्रिप्रकाराः क्रिया ह्येतास्तासां ह्येतच्छृणुष्व मे ॥
आद्यदशाहमध्ये या दाहाद्याश्च क्रियाः स्मृताः ।
ताः पूर्वा मध्यमा मासि मास्येकोद्दिष्टसंज्ञिताः॥

प्रेते पितृत्वमापन्ने सपिंडीकरणादनु ।
क्रियन्ते याः क्रियाः पित्र्याः प्रोच्यन्ते ता नृपोत्तराः
पितृमातृसपिंडैस्तु समानसलिलैस्तथा ।
ततः संबन्धिभिर्वापि राज्ञा वा धनहारिणा ॥
आद्यादयः क्रियाः कार्याः पुत्राद्यैरेव चोत्तराः ।
दौहित्रैर्वा नरश्रेष्ठ कार्यास्तत्तनयैर्यथेति ॥

अथ दौहित्रविषयो विशेषः ॥

पितृणां यत्र दर्शादौ विहितं श्राद्धमत्र च ।
मातामहानां दौहित्रमात्रेणानृण्यहेतवे ॥
अवश्यमेव कर्तव्यमकृते चैनसः श्रुतेः ।

[७२२] ऋष्यशृङ्गोऽपि—पितरो यत्र पूज्यन्ते तत्र मातामहा अपि ।
अविशेषेण कर्तव्यं विशेषान्नरकं व्रजेत् ॥

व्यासोऽपि—पितृमातामहांश्चैव द्विजः श्राद्धे समर्चयेत् ।
अनृणः स्यात्पितृणां तु ब्रह्मलोकं स गच्छति ॥

स्कन्दपुराणे—पार्वणं कुरुते यस्तु केवलं पितुरग्रतः ।
मातामहानां न कुरुते पितृहा चोपजायते ॥

अविशेषेण सर्वत्र प्राप्तौ विशेषमाह ॥

सपिंड्यान्तं च दाहादि पितुः प्रत्याब्दिकं विना ।

अन्यत्कर्तव्यं ॥ कात्यायनः—

कर्षूसमन्वितं मुक्त्वा तथा श्राद्धानि षोडश ।
प्रत्याब्दिकं च शेषेषु पिंडाः स्युः षडिति स्मृताः ॥

कर्षूसमन्वितं सपिंडीकरणं ॥ दौहित्रो मातामहस्य धन-
गृहीता चेद्दाहादिक्रियां कुर्यात् ॥ [७२३] तदुक्तं स्कन्दपुराणे—

श्राद्धं मातामहानां तु अवश्यं धनहारिणा ।
दौहित्रेणाथ निष्कृत्यै कर्तव्यं पूर्वमुत्तरमिति ॥

पूर्वं दाहादि उत्तरं दर्शादि । दौहित्रो द्विविधः ॥ एको हि सामान्येन दुहितुः पुत्रो दौहित्रः ॥ स तु पूर्वं पितृश्राध्धं पश्चान्मातामहश्राध्धं कुर्यात् ॥ अपरः पुत्रिकापुत्रा इत्यभिधीयते ॥ तल्लक्षणमुक्तं वसिष्ठेन

अभ्रातृकां प्रदास्यामि तुभ्यं कान्यामलङ्कृताम् ।
अस्यां यो जायते पुत्र स मे पुत्रो भवेदिति ॥

इत्युक्त्वा मया दत्ता तस्याः पुत्रः पुत्रिकापुत्रः ॥ स च पूर्वं मातामहश्राध्धं कुर्यात् ॥ तदाह ऋष्यशृङ्गः—

यः स्यादुभयसंबन्धः पुत्रिकायाः सुतो ह्यसौ ।
पूर्वं मातामहश्राध्धं पश्चात्पैतृकमाचरेत् ॥

तथा पुत्रिकासुतो मातृमातामहप्रमातामहवृद्धप्रमातामहानुद्दिश्य श्राद्धं कुर्यात् ॥ तदाह सुमन्तुः—

मातुःप्रथमतः पिंडं निर्वपेत्पुत्रिकासुतः ।
द्वितीयं तु पितुस्तस्यास्तृतीयं तु पितुः पितुरिति ॥

तथा पुत्रिकासुतस्य मातुः सपिंडनं मातामहेनैवेत्युक्तं ॥ स मातामहस्य प्रत्याब्दिकमपि पितृश्राद्धवत् नियमेन कुर्यात् ॥

७२४ तदुक्तं—कुर्यान्मातामहश्राद्धं नियमात्पुत्रिकासुतः ।
उभयोरपि संबन्धः कुर्यात्स उभयोरपि इति ॥

तथा पितरि जीवत्यपि मातामहस्य पुत्रसन्तानाभावे दौहित्रेण नित्यतर्पणं कर्तव्यं ॥ अत्र कूर्मपुराणवचनं ॥

उपस्पृश्याथ भावेन तीर्थे तीर्थे च यादवः ।

चकार देवकीसूनुर्देवकीपितृतर्पणम् ॥

इति केवलमातामहस्य तर्पणदर्शनात् मातुलाभावे तदेव नियतं ॥ भ्रात्रादीनां मृतानां च पुत्राभावे तेषां नियतं ॥ तेषां पार्वणानुरोधेन प्रवृत्तेः ॥

मातुः पितरमारभ्य त्रयो मातामहाः स्मृताः ।

तथा—देवेभ्यश्च पितृभ्यश्च दद्यात्तिलयवोदकम् ।

न कदाचिन्निषेधोऽस्ति तस्य वारादिसंभवः ॥

एवं तिलानां निषेधेऽपि यवमिश्रितानां न निषधः ॥

इति दौहित्र कृत्यनिर्णयः ॥

---

## [७२५]अथ काम्यश्राद्धानि ॥

तत्र तिथिविशेषफलमाह याज्ञवल्क्यः—

प्रतिपत्प्रभृतिष्वेकां वर्जयित्वा चतुर्दशीम् ।
कन्यादिकामिनः कुर्युः श्राद्धं पार्वणधर्मवत् ॥ इति ॥
कन्यां कन्यावेदिनश्च पशुद्रव्यं सुतानपि ।
द्यूतं कृषिं च वाणिज्यं द्विशफैकशफांस्तथा ॥
ब्रह्मवर्चस्विनः पुत्रान्स्वर्णरूप्ये सकुप्यके ।
ज्ञातिश्रैष्ठ्यं सर्वकामानाप्नोति श्राद्धदः सदा ॥

कन्यावेदिनो जामातरः । द्विशफा गवादयः। एकशफा अश्वादयः । कुप्यं त्रपुसीसादि ॥

अकुप्यं रूप्यहेमाख्यं कुप्यमन्यद्धनं भवेदिति ॥

शेषं सुगमं ॥

शस्त्रेण तु हता ये वै तेभ्यस्तत्र प्रदीयते । इति ॥

तत्र शस्त्रचतुर्दश्यां एतानि काम्यश्राद्धानि कृष्णपक्ष प्रतिपत्प्रभृति अमावास्यापर्यन्तासु तिथिषु ॥ ये शस्त्रहतास्तेषां तु

समत्वमागतस्यापि पितुः शस्त्रहतस्य वै ।
एकोद्दिष्टं सुतैः कार्यं चतुर्दश्यां महालयः ॥

इति स्मरणात् ॥ समत्वमागतस्य सपिंडीकृतस्य महालये भाद्रपदकृष्णपक्षे चतुर्दश्यां शस्त्रहतस्यैव नान्यस्येति नियम्यते ॥ न पुनः शस्त्रहतस्यैव चतुर्दश्यामेव॥ अतश्च क्षयाहादौ यथाप्तमेवं श्राद्धं ॥ [७२५] पित्रादिषु त्रिषु शस्त्रादिहतेषु तत्र पार्वणमुक्तं स्मृतिषु ॥ न च भाद्रपदकृष्णपक्ष एवायं काम्यश्राध्धविधिः॥ प्रौष्ठपद्यामपरपक्षे मासि मासि वेति शौनकस्मरणात् ॥ काम्यान्तरमाह याज्ञवल्क्यः—

कृत्तिकासु च धिष्ण्येषु भरण्यन्तेषु पार्वणम् ।
कुर्युः श्राद्धं श्रद्दधानाः स्वर्गादिफलहेतवः ॥
स्वर्गं ह्यपत्यमोजश्च शौर्यं क्षेत्रं बलं तथा ।
पुत्रान् श्रैष्ठ्यं च सौभाग्यं समृद्धिं मुख्यतां शुभम् ॥
प्रवृत्तचक्रतां चैव वाणिज्यप्रभृतीनपि ।
अरोगित्वं यशो वीर्यमशोकं परमां गतिम् ॥
धनं वेदान् भिषक्सिद्धिं कुप्यं गामथ जीविकाम् ।
अश्वानायुश्च विधिवत् यो वा श्राद्धं प्रयच्छति ॥
कृत्तिकादिभरण्यन्तं स कामानाप्नुयादिमान् ॥

प्रवृत्तचक्रतां अप्रतिहताज्ञां ॥

इति नक्षत्रश्राद्धनिर्णयः ॥

## अथ काम्यश्राद्धानि ॥

७२७ अथ काम्यान्तरमाह मरीचिः—

कृत्तिकादिषु ऋक्षेषु श्राद्धे यत्फलमीरितम् ।
विष्कुंभादिषु योगेषु तदेव फलमश्नुत इति ॥

तथा रव्यादिवारेषु बृहस्पतिः—

आरोग्यं चैव सौभाग्यं शत्रूणां च पराजयम् ।
सर्वान् कामान् श्रियं विद्यां धनमायुर्यथाक्रमम् ॥
सूर्यादिवासरेष्वेतच्छ्राद्धकृल्लभते फलम् ।

अथ बवादिकरणेषु ॥

बवादिकरणेष्वेतच्छ्राद्धकृल्लभते फलम् ।

## इति काम्यश्राद्धानि ॥

---

## अथ वृद्धिश्राद्धादि निर्णयः ॥

यत्तु दत्तैः श्राद्धैः पितृणां तृप्तिर्भवतीत्युक्तं तदनुपपन्नं ॥ स्वकीयशुभाशुभकर्मवशेन स्वर्गनरकादिगतानां मनुष्याणां पुत्रादिभिर्दत्तैरन्नादिभिस्तृप्त्यसंभवात् ॥ ७२८ संभवे च स्वयं कर्म फलं न प्रयच्छति ॥

वसुरुद्रादित्यरूपाः पितरः श्राद्धदेवताः ।
प्रीणयन्ति मनुष्याणां पितॄन् श्राद्धेन तर्पिताः ॥ इति ॥

नह्यत्र देवदत्तादय एव श्राद्धकर्मणि संप्रदानभूताः पित्रादिशब्दैरुच्यन्ते ॥ किं तु अधिष्ठातृवस्वादिदेवतासहिता एव ॥ यथा देवदत्तादिशब्देन शरीरमात्रं नाप्यात्ममात्रं किं तु

शरीरविशिष्टात्मान उच्यन्ते ॥ एवमधिष्ठातृदेवतासहिता एव देवदत्तादयः पित्रादिशब्दैरुच्यन्ते ॥ ततः श्राद्धाधिष्ठातृदेवता वस्वादयः पुत्रादिभिर्दत्तेनान्नपानादिना तृप्ताः सन्तस्तान्देवदत्तादींस्तर्पयन्ति ॥ कर्तृंश्च पुत्रादीन् फलेन योजयन्ति ॥ यथा माता गर्भपोषणायान्यदत्तेनान्नपानादिना स्वयमुपभुक्तेन तृप्तासती स्वजठरगतमपत्यं तर्पयाति ॥ ७२५ दोहददानादिप्रदायिनश्च प्रत्युपकारफलेन संयोजयति ॥ तद्वत् वसवो रुद्रा अदितिसुता आदित्या एते पितरः पितृपितामहप्रपितामहशब्दवाच्याः न केवलं देवदत्तादय एव श्राद्धदेवताः श्राद्धकर्मणि संप्रदानभूताः ॥ किमतः मनुष्याणां पितृन्देवदत्तादीन् स्वयंश्राद्धेन तर्पितास्तर्पयन्ति ज्ञानशक्त्यतिशययोगेन ॥ किं च ॥ न केवलं पितृंस्तर्पयन्ति ॥ अपि तु श्राध्धकारिभ्यः

आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च ।

चकारात्तत्र तत्र शास्त्रोक्तमन्यदपि फलं स्वयं प्रीताः पितापितामहवस्वादयः प्रयच्छन्तीति ॥ तथा—

अयनद्वितये श्राध्धं विषुवद्वितये तथा ।
मन्वादौ च युगादौ च पिंडनिर्वपणादृते ॥

सर्वसंक्रान्तिष्वपि तथान्येपि श्राध्धकालाः स्मृतिपुराणादिभ्योऽवगन्तव्याः ॥

इति वृद्धिश्राद्धादिनिर्णयः ॥

कृतेऽचलद्विवेदेन ग्रन्थे निर्णयदीपके ।
सवृध्धीनां सकाम्यानां श्राध्धानामेषनिर्णयः ॥

## अथ पुनराशौचनिर्णयः ॥

[७३०] अथेदानीं पुनराशौचनिर्णयः प्रस्तूयते ॥ तदाशौचं द्विविधं ॥ सूतकं मृतकं चेति॥ सूतिर्जननं तन्निमित्तं सूतकं॥ मरणनिमित्तं मृतकं ॥ शावमित्यनर्थान्तरं ॥ तत्र गर्भाधानादारभ्योपनयनपर्यन्तमुभयविधं निर्णीतं प्राक् ॥ अधुनोपयनादूर्ध्वं मरणविषये आशौचनिमित्तं कालनियमं सपिंडानां समानोदकानां चाभिधीयते ॥

दशाहं शावमाशौचं सपिंडेषु विधीयते ।
जननेऽप्येवमेव स्यान्निपुणां शुद्धिमिच्छतां ॥
जन्मन्येकोदकानां तु त्रिरात्राच्छुद्धिरिष्यते ।
शवस्पृशो विशुध्यन्ति त्र्यहात्तूदकदायिन इति ॥

[७३१] तथा ब्राह्मणस्य मौञ्जीबन्धनानन्तरं मरणे क्षत्रियस्य धनुर्ग्रहणानन्तरं वैश्यस्य प्रतोदग्रहणानन्तरं शूद्रस्य वस्त्रद्वयग्रहणानन्तरं मरणे संपूर्णाशौचं ॥ तदाह हारीतः—

आमौञ्जीबन्धनाद्विप्रः क्षत्रियश्च धनुर्धरात् ।
आप्रतोदग्रहाद्वैश्यः शूद्रो वस्त्रद्वयग्रहात् ॥ इति ॥

तथा उपनयनादूर्ध्वं मृते माणवके दशरात्रमिति दशक॥अतश्च ब्राह्मणादीनां मौञ्जीबन्धनाद्यनन्तरं दाहपिंडोदकदानादिसंस्काराः संपूर्णाशौचं च कर्तव्यमिति ब्राह्मणादीनामाशौचकालावधिमाह यमः—

सूतके मृतके विप्रो दशरात्रेण शुध्यति ।
वैश्यो विंशतिरात्रेण त्रिपञ्चाहेन भूपतिः ॥
तथा शूद्रः समग्रेण नित्यं मासेन शुध्यति ।

शावाशौचं प्रकुर्वीरन् शूद्रवद्वर्णसंङ्कराः ॥

वर्णसङ्कराः अंबष्ठरथकारादयः ॥ [७३२] अथाशौचशब्देन जननं मरणं चोच्यते॥ तच्च जननमरणमुत्पन्नं ज्ञातमेव निमित्तं॥

निर्दशं ज्ञातिमरणं श्रुत्वा पुत्रस्य जन्मवत् ।

इत्यादि लिङ्गदर्शनात् ॥ तथा—

विगतं तु विदेशस्थं शृणुयाद्यो ह्यनिर्दशम् ।

यच्छेषं दशरात्रस्य तावदेवाशुचिर्भवेत् ॥

इत्यादिवाक्यारंभसामर्थ्याच्च ॥ उत्पत्तिमात्रापेक्षत्वे ह्याशौचस्य दशाहाशौचकालनियमाश्च तत्प्रभृतिका एवेति॥ अनिर्दशज्ञातिमरणश्रवणे दशरात्रशेषमेवाशौचमर्थात्सिध्यतीति यच्छेषं दशरात्रस्येत्यादि अनारंभणीयं स्यात् ॥ तस्माज्ज्ञातमेव जननं मरणं च निमित्तं ॥ तच्चोभयनिमित्तमप्याशौचं त्रिरात्रं दशरात्रं चेष्यते मन्वादिभिः ॥ यथा—

त्रिरात्रं दशरात्रं वा शावमाशौचमिष्यते इति ।

शवनिमित्तं शावं ॥ अत्र त्रिरात्रदशरात्रयोः समानोदक सपिंडविषयत्वेन व्यवस्था ॥ [७३३] सपिंडता सप्तमपुरुषावधिका ऊर्ध्वं समानोदका इति ॥ यत्तु—

चतुर्थे दशरात्रं स्यात्षण्णिशाः पुंसि पञ्चमे ।

षष्ठे चतुरहाच्छुद्धिः सप्तमे त्वहरेव तु ॥

तद्विगीतत्वान्नादरणीयं ॥ यद्यप्यविगीतं तथापि मधुपर्के पश्वालंभनवल्लोकविद्विष्टत्वान्नानुष्ठेयं ॥

अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्न तु ।

इति मनुस्मरणात्॥ न च सप्तमे प्रत्यासन्ने सपिंडे एका-

हः ॥ विप्रकृष्टाष्टमादि समानोदकेषु त्र्यहमित्युक्तं

क्षत्रस्य द्वादशाहानि विशः पञ्चदशैव तु ।
त्रिंशद्दिनानि शूद्रस्य तदर्धं न्यायवर्तिनः ॥

[७३४] न्यायवर्त्तिनो द्विजशुश्रूषादिरतस्य शूद्रस्य तदर्धं मासार्धं इत्यादि योगीश्वरादिवाक्यैः क्षत्रियादीनां सूतकविषयप्रकारविशेषदर्शनात् त्रिरात्रं दशरात्रं चेत्येतदाशौचं परिशेषात् ब्राह्मणविषये व्यवतिष्ठते ॥ अतः सपिंडानां दशाहं समानोदकानां त्र्यहं ॥

शवस्पृशो विशुध्यन्ति त्र्यहात्तूदकदायिनः ॥

इति वचनात् ॥ एवं च ॥

वृद्धः शौचक्रियालुप्तः प्रत्याख्यातभिषक्क्रियः ।
आत्मानं घातयेद्यस्तु भृग्वग्न्यनशनाम्बुभिः ॥
तस्य त्रिरात्रमाशौचं द्वितीये त्वस्थिसञ्चयः ।

इत्यादिशातातपीयादिवाक्येभ्यः वैधानशनादिमरणविषयेसपिंडैस्त्र्यहाशौचे क्रियमाणे समानोदकानां एकाहः ॥ तच्च स्मृतिवाक्यसंमतं निरूपितं प्राक् समानोदकाशौचनिर्णये ॥ सूर्योदयानन्तरं रजोदर्शनाशौचयोः प्रवृत्तौ तत्प्रभृति गणना कार्या ॥ [७३५] तदाह कात्यायनः—

उदिते तु यदा सूर्ये नारीणां दृश्यते रजः ।
जननं वा विपत्तिर्वा यस्याहस्तस्य शर्वरी ॥

तथा ॥ रात्रिं कुर्यात्त्रिभागां तु द्वौ भागौ पूर्व एव तु ।
उत्तमांशः प्रभातेन युज्यते ऋतुसूतके ॥

आदौ भागद्वये चेत्पूर्वदिनं ग्राह्यं अन्तिमे चेत्परदिनं वदन्ति॥

रात्रावेव समुत्पन्ने मृते रजसि सूतके ।
पूर्वमेव दिनं ग्राह्यं यावन्नाभ्युदितो रविरिति ॥

अत्र देशाचारतो व्यवस्था ॥

इत्याशौचनिर्णयः

---

## अथ क्षत्रियादीनां आशौचं ॥

तेषां स्मृत्यन्तरेषु दशाहादयोऽप्युच्चावचाशौचकल्पा-
दर्शिताः ॥

एकादशाहाद्राजन्यो वैश्यो द्वादशभिस्तथा ।
शूद्रो विंशतिरात्रेण शुध्यते मृतसूतके ।

पराशरः—क्षत्रियस्तु दशाहेन स्वकर्मनिरतः शुचिः ॥
तथैव द्वादशाहेन वैश्यः शुद्धिमवाप्नुयात् ।

वसिष्टः—पञ्चदशरात्रेण राजन्यो विंशतिरात्रेण वैश्य इति ॥

तथा ऋष्यशृंगः—त्रिरात्रं यत्र विप्राणामाशौचं संप्रदर्श्यते ।
तत्र शूद्रे द्वादशाहं षण्णव क्षत्रवैश्ययोः ॥

क्षत्रे षट् वैश्ये नवेति ॥ तथा—

निवृत्तचूडके विप्रे त्रिरात्राच्छुद्धिरिष्यते ।
निवृत्ते क्षत्रिये षड्भिर्वैश्ये नवभिरुच्यते ॥
ऊर्ध्वं त्रिवर्षाच्छूद्रेऽपि द्वादशाहो विधीयते ।

इति मिताक्षरातः ॥ तथा—

वर्षद्वयमतीतो यः शूद्रः संम्रियते यदि ।
मासिकं च भवेच्छौचमित्थं वदति चाङ्गिराः ॥

एतानि न्यूनाधिककालविधायकानि वाक्यानि देशाचा-

रतः कुलाचारतो वा प्रवृत्तत्वेन वा गुणवद्विषयत्वेन वा वाक्यान्यवस्थापनीयानीति ॥ अङ्गिरसा तु क्षत्रियादीनामुच्चावचपक्षान्यभिधायापि सर्व्ववर्णाशौचविषये साधारणो दशाहपक्षोऽभिहितः ॥ यथा—

सर्वेषामेव वर्णानां सूतके मृतके तथा ।
दशाहाच्छुद्धिरथवा इति शातातपोऽब्रवीत् ॥

[७३७] विज्ञानेश्वरविश्वरूपमेधातिथिप्रभृतिभिरङ्गीकृतं ॥ इत्येवं सति वंशपरानुसर्तव्या ॥

## इति क्षत्रियादीनामाशौचनिर्णयः ॥

---

## अथानुपनीतमृताशौचनिर्णयः ॥

अथानुपनीतमृताशौचे सति सपिंडानामस्पृश्यत्वे कालनियममाह देवलः—

स्वाशौचकाला विज्ञेयाः स्पर्शनं तु त्रिभागतः ।
शूद्रविट्क्षत्रविप्राणां यथाशास्त्रप्रणोदितम् ॥ इति ॥

उपनीतविषयेऽपि देवलः—

दशाहादि त्रिभागेन कृते सञ्चयने क्रमात् ।
अङ्गस्पर्शनमिच्छन्ति वर्णानां तत्वदर्शिनः ॥
त्रिचतुःपञ्चदशभिः स्पृश्या वर्णाः क्रमेण तु ।
भोज्यान्नो दशभिर्विप्रः शेषा द्वित्रिषडुत्तरैरिति ॥

दशाहाद्द्वित्रिषडधिकैर्दिनैः क्षत्रियादयो भोज्यान्ना इति ॥ एतच्चक्षत्रियादेः दशाहाधिकाशौचपक्षविषयं ॥

## इत्यनुपनीतमृताशौचनिर्णयः ॥

७३८ अथ सन्निपाताशौचमुच्यते ॥

आशौचमध्ये पुनराशौचान्तरागमः सन्निपातः ॥ आशौचमध्ये पुनः प्राप्तं जननिमित्तं मरणनिमित्तमाशौचं पृथङ् न कार्यं ॥ किंतु पूर्वशेषेण तस्य शुद्धिः स्यात् ॥ तदुक्तं याज्ञवल्क्येन –

अन्तरा जन्ममरणे शेषाहोभिर्विशुध्यतीति ।

अत्र अन्तराजननमरण इति यद्यप्यविशेषेणाभिहितं तथापि सूतके जननानिमित्ते सूतकं जनननिमित्तं शुध्यति ॥ मृतके तु उभयं जननं मरणं च शुध्यतीति ॥ तत्र तावद्दशकं ॥ मृतजननोर्माविशाच्छुद्धिरिति ॥ अङ्गिरा अपि–

सूतके मृतके चेत्स्यान्मृतके त्वथ सूतकम् ।
तत्राधिकृत्य मृतकं शौचं कुर्यान्न सूतकम् ॥ इति ॥

७३९ अत्रैव विशेषः–

शावान्तः शावमायातं पूर्वाशौचेन शुध्यति ।
गुरुणा लघु शुध्येत लघुना नैव तद्गुरुः ॥

इति चण्डुनिबन्धात् ॥ स्मृत्यन्तरे–

सूतके सूतकं भूयो यद्यपि स्यात्कथंचन ।
तच्छेषेणैव शुध्यन्ति मृतके मृतकं तथा ॥

तथेति सूतकमपि शुध्येन्मृतकेनेति ॥ शावाशौचमध्ये जननाशौचे सति जननाशौचमध्ये शावाशौचे उत्पन्ने वा शावाशौचाच्छुद्धिः कार्या ॥ तदुक्तं षट्त्रिंशन्मते–

शावाशौचे समुत्पन्ने सूतकं तु यदा भवेत् ।
शावेन शुध्यते सूतिर्न सूतिः शावशोधिनीति ॥

शावमपि स्वसमानकालस्य जाताशौचस्य शुद्धिजनकं नाधिककालस्य ॥ एवं च मिताक्षरायां यदा पुनर्वर्तमानाशौचाद्दीर्घकालमाशौचमन्तरा पतितं तदा दीर्घाशौचेनैव शुद्धिरिति ॥ यथाहोशनाः—

स्वल्पाशौचस्य मध्ये तु दीर्घाशौचं भवेद्यदि ।
न पूर्वेण विशुद्धिः स्यात्स्वकालेनैव शुध्यतीति ॥

न पूर्वेण स्वल्पकालसंबन्धिनाशौचेनेत्यर्थः ॥ ७४० स्मृत्यर्थसारेऽपि ॥ जन्ममरणनिमित्तस्वल्पकालाशौचमध्ये दीर्घकालाशौचे सति दीर्घकालाशौचेनैव शुद्धिः न स्वल्पकालाशौचेन ॥ अत्राशौचस्य स्वल्पत्वं दीर्घत्वं च कालकृतमेव ज्ञेयं न जननमरणनिमित्तकृतं ॥ ततः सूतके जन्मनिमित्ते दीर्घकाले सति स्वल्पकालाशौचं मरणनिमित्तं निवर्त्तते ॥ एतदभिप्रेत्य हारीतेनाप्युक्तं—

जातकं मृतके वा स्यान्मृतकं जातके तथा ।
जातकेन मृतं शुध्येन्न मृतेन तु जातकम् ॥

यत्तु—आद्यानां यौगपद्ये तु गरीयो मरणं भवेत् ।

इत्युक्तं ॥ तज्जननमरणयोराशौचयोः समानकालत्वे वेदितव्यं ॥ मरणं गरीय इति ॥ अतश्च त्रिरात्रसंबन्धिना मरणाशौचेन दशरात्रं जातकं न निवर्त्तते इति रहस्यं ॥ यतः ॥

जनने मरणं चेत्स्यान्मरणे जननं भवेत् ।
तच्छेषेणैव शुध्येत समं न्यूनं न चाधिकमिति ॥—

चण्डुनिबन्धात् ॥ तथा—

न्यूनकालं मृताशौचं जन्माशौचेन शुध्यति । इति ॥

अथ सजातीयान्तः पातित्वेऽपि शावस्य किंचित्पूर्वशेषेण शुद्धेरपवादः ॥ [७४१] यथाह विज्ञानेश्वरः—

शुद्धिः पूर्वसमाप्तितः सदृशयोर्योगेऽग्निदं सूतकं । हित्वेति॥

अग्निदः पूत्र इति केचिदाहुः तदयुक्तं ॥ अग्निदं येन प्रेतस्याग्निर्दत्तः तं विना यतः पुत्रस्य पित्रोराशौचमाशौचान्तरेण न निवर्तते इति स्मृतिषूक्तं ॥ तस्मादग्निदः पुत्रोऽन्यगोत्रोवा ॥ तथा च अन्यगोत्रोऽन्यगोत्रस्याचार्यादेरन्त्येष्टिं करोति तदा दशरात्रमुक्तं मिताक्षरायां ॥

गुरोः प्रेतस्य शिष्यस्तु पितृमेधं समाचरेत् ।
प्रेताहारैः समं तस्य दशरात्रेण शुध्यतीति ॥

मनुस्मरणात् ॥ अत्र शिष्यग्रहणात् पुत्रभाव एवाधिक्रियते ॥ स यदि अन्त्येष्टिं करोति तदा दशरात्रमिति चण्डुनिबन्धे विशेषेण व्याख्यातं ॥ तथा दशकभाष्येऽपि ॥ गोत्रजोऽग्निदाता । स एव प्रेतस्य संस्पर्शात् दशरात्रमेवाशौचवान्॥ यद्यपि पूर्वाशौचेन पश्चिमाशौचमुपरतं तथापि पश्चिमाशौचादग्निदः सूतिकावद्दशरात्रमेवाशौचवान्भवति ॥ तथा—

अन्यगोत्रोऽन्यगोत्रस्य प्रेतस्याग्निं ददाति यः
उदकं पिंडदानं च स दशाहं समापयेदिति ॥

करण्डिकायां ॥ [७४२] तथा पुत्रासन्निधाने येन सगोत्रादिना सदाहः संस्कारः कृतस्तेनैव आदशाहात् प्रेतकर्म कर्तव्यमिति मिताक्षरायां ॥ एतदभिप्रेत्य प्रेतस्पर्शिनो ब्राह्मणस्य दशरात्रमाशौचमिति शङ्खस्मरणात्॥ मातापित्रोराशौचसन्निपाते तु अङ्गिरसा विशेष उक्तः—

मातर्यग्रे प्रमीतायामशुद्धौ म्रियते पिता।

पितुःशेषेण शुद्धिः स्यान्मातुः कुर्यात्तु पक्षिणी ॥ इति॥

अयमर्थः ॥ मातरि पूर्वमृतायां तन्निमित्ताशौचमध्ये यदि पितुर्मरणं स्यात् तदा पित्राशौचेनैव शुद्धिः कार्या न मात्राशौचेन ॥ पितृमृताशौचमध्ये यदि मातुर्मरणं स्यात्तदा पितुराशौचं समाप्याधिकं मातुः पक्षिण्याशौचं कुर्यात् ॥ न पित्राशौचेन शुद्धिरिति ॥ ... मातुः पक्षिण्याशौचं मृतिनिमित्तं ॥ पिंडक्रियाद्यन्ते ... भवेत्पूर्णमाशौचं ॥ [७४३] अन्यथा वाक्यान्तरविरोध इति ॥ एवं सन्निपाताशौचवशात् शुध्यभिधानेऽपि गौतमेन विशेष उक्तः—

रात्रिशेषे सति द्वाभ्यां प्रभाते तिसृभिः स्मृतः। इति ॥

अयमर्थः ॥ पूर्वाशौचे रात्रिमात्रावशेषे यद्याशौचान्तरं सन्निपतेत् ॥ तर्हि पूर्वाशौचं समाप्य अनन्तरं द्वाभ्यां रात्रिभ्यां शुद्धिः ॥ प्रभाते तस्या रात्रेः पश्चिमे यामे जननाद्याशौचान्तरसन्निपाते तिसृभीरात्रिभिः शुद्धिः न पुनः पूर्वाशौचशेषेण ॥ [७४४] शातातपोऽप्येवमाह—

रात्रिशेषे द्र्यहाच्छुद्धिर्यामशेषे शुचिस्त्र्यहात् ।

अत्राशौचप्रकरणे रात्रिग्रहणं अहर्ग्रहणं चाहोरात्रोपलक्षणार्थं ॥

तथा—आद्यभागद्वयं यावत्सूतकस्य तु सूतके।

द्वितीये पतिते चाद्यात्सूतकाच्छुद्धिरिष्यते ॥

अत ऊर्ध्वं द्वितीयात्तु सूतकान्ताच्छुचि स्मृतः ॥

इति ब्रह्माण्डपुराणं ॥ इमानि वाक्यानि पूर्वाशौच

समाप्य अनन्तरं अधिकाशौचाभिधायकानि ॥ तथापि देशाचारानुसारतोऽनुसर्तव्यानि ॥

इति सन्निपाताशौचनिर्णयः ॥

---

## अथानुगमनाशौचनिर्णयः ॥

अथ प्रेतानुगमने निर्हरणे च मनुना विशेष उक्तः ॥

असपिंडं द्विजं प्रेतं विप्रो निर्हृत्य बन्धुवत् ।
विशुध्यति त्रिरात्रेण संविशेत्तद्गृहे यदि ॥

असपिंडमिति अन्यगोत्रजं मातृसपिंडादिकं ॥ ७८५ पितृसपिंडानां तु विहितत्वान्निर्हरणस्य ॥ निर्हरणं श्मशानं प्रति वहनं ॥ बन्धुवदिति स्नेहेन ॥ यदि तद्गृहे संविशेत्तिष्ठेत् तदा त्रिरात्रमाशौचं ॥ तथा स्मृत्यर्थसारे ॥ स्नेहादिना सजातिं प्रेतं निर्हृत्य तद्गृहे स्थितौ त्रिरात्रं ॥ पुनरपि मनुः—

यद्यन्नमत्ति तेषां तु दशाहेनैव शुध्यति ।
अनदन्नन्नमह्नैव न चेत्तस्मिन्गृहे वसेत् ॥

यदि तद्गृहे न वसेत्तदा एकाह इत्येवं स्मृत्यर्थसारे प्रतिपादितमस्ति अत एव दशाहं ॥

निर्हारे मृतवन्मृतान्नरहिते त्रीण्यन्यवासे दिनमिति ॥

एतत्सजातीयप्रेतनिर्हरणविषयं ॥ विजातीयनिर्हरणे तु यज्जातीयं प्रेतं निर्हरति तज्जातीयमाशौचमुक्तं गौतमेन—

अवरश्चेत्परो वर्णः पूर्ववर्णमुपस्पृशेत् ।
पूर्वोऽथवावरस्तत्र शावोक्ताशौचमाचरेत् ॥

तथा ब्राह्मणश्चेद्धर्मबुद्ध्या अनाथं प्रेतं ब्राह्मणं निर्हरति तत्राप्लवनमात्रमाह पाराशरः ॥

अनाथं ब्राह्मणं प्रेतं ये वहन्ति द्विजोत्तमाः ।
पदे पदे यज्ञफलमनुपूर्वं लभन्ति ते ॥
न तेषामशुभं किंचित्पापं वा शुभकर्मणाम् ।
जलावगाहनात्तेषां सद्यः शौचं विधीयत इति ॥

७४६ तथा ब्राह्मणेन क्षत्रियादीनां संस्कारो न कर्तव्यः ॥ तदुक्तं ब्रह्मपुराणे—

ब्राह्मणस्त्वन्यवर्णानां न करोति कदाचन ।
कामान्मोहाद्भयाल्लोभात्कृत्वा तज्जातितां व्रजेत् ॥

अथानुगमनमात्रविषये मनुः—

अनुगम्येच्छया प्रेतं ज्ञातिमज्ञातिमेव च ।
स्नात्वा सचैलं स्पृष्ट्वाग्निं घृतं प्राश्य विशुध्यतीति ॥

ज्ञातिः पितृपक्षः ॥ अज्ञातिरसपिंडः ॥ तथा—

ब्राह्मणेनानुगन्तव्यो न शूद्रो न द्विजः क्वचित् ।
अनुगम्यांभसि स्नात्वा स्पृष्ट्वाग्निं घृतभुक् शुचिः ॥

द्विज इति क्षत्रियवैश्ययोश्च यदि स्नेहादिनानुगच्छति तदा तडागादिस्थे जले स्नात्वाग्निं स्पृष्ट्वा घृतं प्राश्य शुचिर्भवेत् । एतत् घृतप्राशनप्रायश्चित्तं असपिंडद्विजानुगमनविषयं ॥ सपिंडानां तु विहितत्वान्न दोषः ॥ घृतप्राशनं शुध्यर्थमेव न भोजनस्थाने ॥ शूद्रानुगमने त्रिरात्रं वक्ष्यते तथा रोदनेऽपि ॥ ७४७ पारस्करेणोक्तं—

मृतस्य बान्धवैः सार्धं कृत्वा तु परिरोदनम् ।

वर्जयेत्तदहोरात्रं दानं श्राद्धादिकर्म चेति ॥

एतद्दानादिवर्जनं सचैलस्नानाकरणे वेदितव्यं ॥ यतः रोदने स्नानमिति विज्ञानेश्वरः ॥ मृतस्य बान्धवैः सहाश्रुपातं कृत्वा अकृते अस्थिसञ्चयने सचैलस्नानेन शुद्धिरिति विष्णुः॥ कृते सञ्चयने स्नानमथवाऽऽचमनं चेति शङ्खः ॥ तथा—

पादकृच्छ्रः सपिंडस्य प्रेतालङ्करणे कृते ।
अज्ञानादुपवासः स्यादशक्तौ स्नानमिष्यत इति ॥

शङ्खेनोक्तं ॥ स्मृत्यर्थसारे ऽपि ॥ धर्मार्थं ब्राह्मणशवनिर्हरणस्नानालङ्कारवहनदहनादिके कृते सचैलस्नानात्सद्यः शुद्धिः ॥ ७४८ सचैलस्नानप्राणायामैः शुद्धिरिति वा ब्राह्मणविषयं ॥ शुद्रानुगमने तु—

प्रेतीभूतं तु यः शुद्रं ब्राह्मणो ज्ञानदुर्बलः ।
अनुगच्छेन्नीयमानं स त्रिरात्रेण शुध्यतीति ॥
त्रिरात्रे तु ततस्तीर्णे नदीं गत्वा समुद्रगाम् ।
प्राणायामशतं कृत्वा घृतं प्राश्य विशुध्यतीति ॥

पराशरः ॥ तथा क्षत्रियानुगमने वैश्यानुगमने च मानुषास्थि स्निग्धं स्पृष्ट्वा त्रिरात्रमाशौचं ॥ अस्निग्धे त्वहोरात्रमिति वसिष्ठः ॥ तथा क्षत्रियस्य वैश्यानुगमने त्वेकाहं ॥ शुद्रानुगमने पक्षिणी ॥ वैश्यस्य शुद्रानुगमने त्वेकाहमिति स्मृत्यर्थसारात् ॥

इत्यनुगमनाशौचानिर्णयः ॥

---

## अथ पृथग्विजातीयसापिंडाशौचनिर्णयः ॥

सापिंड्येऽपि दशरात्राभावः क्षेत्रजादिषु पुत्रेषु जातेषु मृतेषु अहोरात्राशौचमाह मनुः—

अनौरसेषु पुत्रेषु भार्यास्वन्यगतासु च ।

मृतासु अहोरात्राशौचमनुवर्तते ॥ एतद्विषये सापिंडानामाशौचाभावं प्रजापतिराह—

अनाश्रितेषु दारेषु परपत्नीसुतेषु च ।

गोत्रिणः स्नानशुद्धाः स्युस्त्रिरात्रेणैव तत्पिता ॥ इति॥

७४८ विष्णुः—अनौरसेषु पुत्रेषु जातेषु च मृतेषु च ।

परपूर्वासु भार्यासु प्रसूतासु मृतासु च ॥

त्रिरात्रमत्र प्रकृतं ॥ त्रिरात्रैकरात्रयोः सान्निधिविदेशस्थापेक्षया व्यवस्था ॥ मरीचिः—

सूतके मृतके चैव त्रिरात्रं परपूर्वयोः ।

एकाहस्तु सपिंडानां त्रिरात्रं यत्र वै पितुरिति ॥

यदा पुनः ब्राह्मणस्य क्षत्रियादयः सपिंडाभवन्ति तदा बौधायनाद्युक्तकल्पोऽनुसरणीयो यथा ॥

क्षत्रविट्शूद्रजातीया येस्युर्विप्रस्य बान्धवाः ।

तेषामाशौचे विप्रस्य दशाहाच्छुद्धिरिष्यते ॥

हारीतोऽपि—

दशाहाच्छुध्यते विप्रो जन्महानौ स्वयोनिषु ।

षड्भिस्त्रिभिरप्येकेन क्षत्रविट्शूद्रयोनिषु ॥

इति विष्णुः ॥ क्षत्रस्य विट्शूद्रेषु सपिंडेषु षड्रात्रत्रिरात्राभ्यां वैश्यस्य शूद्रसापिंडे षड्रात्रेण शुद्धिः ॥ हीनवर्णानां

तु उत्कृष्टेषु सपिंडेषु जातेषु मृतेषु वा तदाशौचव्यपगमे शुद्धिः॥ तथा भिन्नजातीया ये भ्रातरो विभक्तधनाश्चेत्पितर्युपरते स्वकीयमाशौचं कुर्युः ॥ ७५० तदाहशङ्खः—

असवर्णास्तु ये पुत्रा द्विजातीनां प्रकीर्तिताः ।
पृथग्धर्मसमाचाराः पृथक्शौचा हि ते स्मृताः ॥

कश्यपः—चातुर्वर्णिकपुत्राणामेकवेश्मनि तिष्ठताम् ।
सर्वेषां पैतृकं शौचं विभक्तानां स्वकं स्वकम् ॥

विजातीनां सापिंड्यं त्रिपुरुषमेव ॥ तदुक्तं—

यथैकजाता बहवः पृथक्क्षेत्राः पृथग्जनाः ।
एकपिंडाः पृथक्शौचाः पिंडस्त्वावर्तते त्रिषु ॥

पृथग्जना भिन्नजातीयाः ॥ प्रतिलोमानां तु नास्त्येवाशौचमिति ॥ प्रतिलोमा धर्महीनाः ॥

पाखण्डमाश्रिताः स्तेना भर्तृघ्न्यः कामगास्तथा ।
सुराप्य आत्मघातिन्यो नाशौचोदकभाजनाः ॥ इति ॥

एतेषां धर्महीनानामपि विधिवद्दहने सत्याशौचं निरूपितं प्राक् चाण्डालादिहतसंस्कारप्रकरणे ॥

## इति पृथग्विजातीयसपिंडाशौचनिर्णयः ॥

---

## ७५१ अथासगोत्राशौचं ॥

असगोत्रेषु मातामहाचार्यमातुलादिषु अतिदेशप्राप्तमाशौचमुच्यते बृहस्पतिः—

त्र्यहं मातामहाचार्यश्रोत्रियेष्वशुचिर्भवेत् ।

त्र्यहं त्रिदिनं । मातामहो मातुः पिता । उपनयनपूर्वकं वे-

दाध्यापक आचार्यः । तस्य पुत्रे पत्न्यां चाहोरात्रं ॥
तदाह मनुः—त्रिरात्रमाहुराशौचमाचार्ये चैव संस्थिते ।
तस्य पुत्रे च पत्न्यां च दिवारात्रमिति स्थितिः ॥
एकशाखास्वाध्यायी श्रोत्रियः ॥
श्रोत्रिये तूपसंपन्ने त्रिरात्रमशुचिर्भवेत् ।
इति मनुः ॥ उपसंपन्न गुणसंयुक्ते ॥ एकाहं सब्रह्मचारिणि समानग्रामिणि श्रोत्रिये इत्यादि आश्वलायनः ॥ एकाचार्योपनीतः स ब्रह्मचारी ॥ एतच्चासन्निधाने एकाहः सन्निधाने त्र्यहमिति ॥ [७५२] तथा याज्ञवल्क्यः—
गुर्वन्तेवास्यनूचानमातुलश्रोत्रियेषु चेति ।
वेदाध्यापकः मंत्र ज्ञानोपदेशकश्च गुरुः। अन्तेवासी शिष्यः। अनूचानो वेदाङ्गानां वक्ता ॥ एतेषु सन्निधानेषूपरतेष्वहोरात्रं ॥ यस्तु मुख्यो गुरुः पिता तदुपरमे दशरात्रं ॥ दानाध्ययने वर्जयेरन् इत्याश्वलायनः ॥ तथा प्रचेताः—
मृते चर्त्विजि याज्ये च त्रिरात्रेण विशुध्यतीति ।
स्मृत्यर्थसारे ॥ मातामहगुर्वाचार्यदौहित्रस्वस्रीयसंबन्धिश्रोत्रियबहुयज्ञक्रतुकर्मकृत्विगाद्येषु गुणिष्वेकग्रामेषु मृतेषु त्रिरात्रं ॥ ग्रामान्तरे पक्षिणी ॥ अगुणिषु एकग्रामे पक्षिणी ॥ ग्रामान्तरे त्वेकाहमिति॥तथा मातुलादौ पक्षिणीमाह मनुः—
[७५३]मातुले पक्षिणींरात्रिं शिष्यर्त्विक्बान्धवेषु च ।
पक्षिणीलक्षणमुभयतोऽप्यहनी पक्षौ इव यस्या रात्रेः सा पक्षिणी ॥
तथा—श्वशुरयोर्भगिन्यां च मातुलान्यां च मातुले ।

पित्रोः स्वसरि तद्वच्च पक्षिणीं क्षपयेन्निशाम् ॥

श्वशुरयोः पित्रोश्चैकशेषः ॥ तथा–

मातुले श्वशुरे मित्रे गुरौ गुर्वङ्गनासु च

आशौचं पक्षिणीं रात्रिं मृता मातामही यदीति ॥

मातुल इति मातृबान्धवग्रहणेनात्मबान्धवाः पितृबान्धवाश्च योनिसंबन्धा उपलक्ष्यन्ते ॥ तथा च गौतमः ॥ पक्षिणीमसपिंडयोनिसंबन्धे सहाध्यायिनि चेति ॥ योनिसंबन्धा मातुलेयमातृष्वस्त्रेयपितृष्वस्त्रेयादय इति मिताक्षरायां ॥

७५४ तथा च–

आत्मपितृष्वसुः पुत्रा आत्ममातृष्वसुः सुताः ।

आत्ममातुलपुत्राश्च विज्ञेया आत्मबान्धवाः ॥

पितुः पितृष्वसुः पुत्राः पितुर्मातृष्वसुः सुताः ।

पितुर्मातुलपुत्राच्च विज्ञेयाः पितृबान्धवाः ॥

मातुः पितृष्वसुः पुत्रा मातुर्मातृष्वसुः सुताः ।

मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवाः ॥

मातुः पितृव्यकसुता विज्ञेया मातृबान्धवा इति ॥

पितुः पितृव्यकसुता विज्ञेयाः पितृबान्धवा इति ॥

एषु मृतेषु पक्षिण्याशौचं ॥ दशाके त्वन्योऽन्यतः पक्षिणीत्युक्तं ॥ तथा मातृष्वसृपतिः पितृष्वसृपतिश्च तयोरप्युक्तं ॥ तत्र शिष्टाचारान्निर्णयः ॥ स्वल्पसंबन्धे स्नानमिति स्मृत्यर्थसारे ॥ तथा वृद्धप्रचेताः–

संस्थिते पक्षिणीं रात्रिं दौहित्रे भगिनीसुते ।

संस्कृतेतु त्रिरात्रं स्यादिति धर्मो व्यवस्थित इति ॥

स्मृत्यर्थसारे ॥ याज्यऋत्विक्दौहित्रसहाध्यायीसहोपनीतात्मबन्धुपितृबन्धुमातृबन्धुश्वशुरमातुलशिष्योपाध्यायानूचानगुरुपुत्राचार्यपुत्रसुमित्रभागिनेयेषु श्वश्रूभगिनीमातामहीषु च मातृष्वसृपितृष्वसृमातुलानीगुर्वाचार्यपत्नीषु च मरणे एकग्रामे पक्षिण्याशौचं ॥ ग्रामान्तरे तु अहोरात्रं ॥ अगुणवत्सु एकग्रामे एकाहं ॥ ग्रामान्तरे स्नानं ॥ तथा वृद्धप्रचेताः—

भगिन्यां संस्कृतायां च भ्रातर्यपि च संस्कृते ।
मित्रे जामातरि प्रेते दौहित्रे भगिनीसुते ॥
शालके तत्सुते चैव सद्यः स्नानेन शुध्यति ।

एषु सद्यइत्यत्यन्तागुणविषयमिति स्मृत्यर्थसारात् ॥ विष्णुः ॥ असपिंडे स्ववेश्मनि मृते एकरात्रमिति॥ ७५६ वृद्धमनुः—

ग्रामेश्वरे कुलपतौ श्रोत्रिये च तपस्विनि ।
शिष्ये पञ्चत्वमापन्ने शुचिर्नक्षत्रदर्शनात् ॥

तथा ॥ प्रेते राजनि सज्ज्योतिर्यस्यस्याद्विषये स्थितिः ॥

ज्योतिषा सह वर्तते इति सज्योतिराशौचं ॥ अन्हि चेद्यावत्सूर्यदर्शनं ॥ रात्रौ मृतश्चेद्यावन्नक्षत्रदर्शनं ॥ तथा—

ग्राममध्यगतो यावच्छवस्तिष्ठति कस्यचित् ॥
ग्रामस्य तावदाशौचं निर्गमे शुचितामियात् ॥

एवमाशौचविशेषप्रतिपादकानि स्मृतिवचनान्यन्वेषणीयानि ॥ इत्थ सगोत्राशौचनिर्णयः ॥ अथ सगोत्रशावादिसंसर्गनिमित्ताशौचं तु अङ्गिरसा विशेष उक्तः—

आशौचं यस्य संसर्गादापतेद्गृहमेधिनः ।
क्रियास्तस्य न लुप्यन्ते गृह्याणां न च तद्भवेत् ॥

तदाशौचं केवलं गृहमेधिन एव पुनस्तद्गृहे भवानां भार्यादीनां तद्द्रव्यादीनां च न भवेदित्यर्थः ॥ तथा—

मासत्रये त्रिरात्रं स्यात्षण्मासे चैव पक्षिणी ।
अहस्तु नवमादर्वाक् पूर्णे दत्त्वोदकं शुचिरिति ॥

इत्यनेन त्रिरात्राद्यतिक्रान्ते आशौचेऽपि अयमर्थः स्मृत्यन्तरे दर्शितः ॥

७५७ अतिक्रान्ते दशाहे तु पश्चाज्जानाति तद्गृही ।
त्रिरात्रं सूतकं तस्य न तद्द्रव्यस्य कर्हिचित् ॥ इति ॥

अतस्तेन द्रव्येण पञ्चमहायज्ञादिः कार्यः सुतादिना ॥

अत्र विशेषो गरुडपुराणात्—

गृहस्थे प्रोषिते यत्र कश्चिच्चेन्म्रियते गृहे ।
आशौचापगमे यत्र प्रारब्धे श्राद्धकर्मणि ॥
प्रत्यागतश्चेज्जानाति तच्च वृत्तं गृही तदा ।

तच्च वृत्तमाशौचं ॥

आशौचं गृहिणस्तस्य न द्रव्यादेस्तदा भवेत् ।
पुत्रादिना यदारब्धं श्राद्धं तत्तेन चाखिलम् ॥
सम्मापनीयं तेनापि गृही तिष्ठेत्तु दूरत इति ॥

अत्र श्राद्धविषये त्वारब्धशब्दोपादानात् गृहिणोऽधिकारविषयं श्राद्धमारब्धं चेत् पुत्रादिः कुर्यात् ॥ अनारब्धं तु शुध्यनन्तरं गृही कुर्यात् ॥

इति संसर्गाशौचेऽतिक्रान्ताशौचे च निर्णयः ॥

## ७५८ अथाशौचे कर्मनिर्णयः ॥

सूतके कर्मणां त्यागः सन्ध्यादीनां विधीयते ।
दानं प्रतिग्रहो होमः स्वाध्यायश्च निवर्तते ॥

इत्यादिना सर्वकर्माधिकारनिवृत्तौ प्रसक्तायां केषुचिदभ्यनुज्ञा प्रदर्श्यते ॥ अत्र सूतकेन शावमप्युपलक्ष्यते ॥ अशुचित्वस्य उभयोस्तुल्यत्वादुभयमाशौचं ॥ पुत्राजन्मनिमित्ताशौचेऽपि श्राद्धं ॥

उद्वाहे पुत्रजनने पित्र्येष्ट्यां सौमिके मखे ।

इत्यादिना ॥ ततः—

तदहर्न प्रदुष्येत पूर्वेषां जन्मकारणादिति ।

तदहः यत्र पुत्रो जातः ॥

आयान्ति देवपितरस्तत्र तं बोधयन्ति च ।
तस्मात्स दिवसः पुण्यः पितॄणां वंशवर्धन इति ॥

अहर्ग्रहणं रात्र्युपलक्षणार्थं ॥ पुत्रजन्मनि रात्रावपि श्राद्धदानादिकं कार्यं ॥ तदाशौचान्तरसन्निपातेऽपि कार्यमेव ॥ तदाह प्रजापतिः—आशौचे तु समुत्पन्ने पुत्रजन्म यदा भवेत् ।
कर्तुस्तात्कालिकी शुद्धिः पूर्वाशौचेन शुध्यतीति ॥

सूतकमिति शेषः ॥ ७५९ तथा व्यासः—

सूतकावासिनिलये जन्मदा नाम देवताः ।
तासां यागनिमित्तं तु शुद्धिर्जन्मनि कीर्तिता ॥
प्रथमे दिवसे षष्ठे दशमे चैव सर्वदा ।
त्रिष्वेतेषु न कुर्वीत सूतकं पुत्रजन्मनि ॥ इति ॥

मार्कण्डेयोऽपि—रक्षणाय तथा षष्ठी निशा तत्र विशेषतः ।

रात्रौ जागरणं कार्यं जन्मदानां तथा बलिः ॥
पुरुषाः शस्त्रहस्ताश्च नृत्यगीतैश्च योषितः ।
रात्रौ जागरणं कार्यं दशम्यां नैव सूतकमिति ॥

तथा पुत्रजन्मनि हिरण्यादिप्रतिग्रहे न दोषः ॥ तदुक्तं याज्ञवल्क्येन—

कुमारजन्मदिवसे विप्रैः कार्यः प्रतिग्रहः ।
हिरण्यभूगजाश्वान्नवासः शय्यासनादिषु ॥

तथा पुत्रजन्माशौचे सिद्धान्नभक्षणे दोषस्तेनैवोक्तः ॥

तत्र सर्वं प्रतिग्राह्यं कृतान्नं तु न भक्षयेत् ।
भक्षयित्वा तु तन्मोहाद्द्विजश्चान्द्रायणं चरेत् ॥

कृतान्नं सिद्धान्नं । जननिमित्ते मरणनिमित्ते वा आशौचे सति सूतकान्नभोजननिषेधस्तु यमेनोक्तः—

७१० उभयत्र दशाहानि कुलस्यान्नं न भुज्यत इति ।

उभयत्र जननमरणयोः । कुलस्य सुतकिकुलस्य । दशाहानीती आशौचविशेषकालोपलक्षणं ॥ यतः ब्राह्मणाशौचे योऽन्नमश्नाति तस्य तावदाशौचं यावत्तेषामिति विष्णुः ॥ मनुरपि—

यद्यन्नमत्ति तेषां तु दशाहेनैव शुध्यतीति ।

एतद्बुद्धिपूर्वविषयं ॥ यद्यबुध्दिपूर्वमाशौचिनां गृहे भुङ्क्ते तस्य यावदन्नं जीर्यते तावदाशौचमुक्तं आङ्गिरसा—

अन्तर्दशाहे भुक्त्वान्नं सूतके मृतकेऽपि वा ।
असंस्पृश्यो भवेत्तावद्यावदन्नं व्रजत्यधः ॥ इति ॥

सूतकान्नभोजने दोषाभिधानमसकुल्यविषयं ॥ सकुल्यानां पुनर्न दोषः ॥

सूतके तु कुलस्यान्नमदोषंमनुरब्रवीत् ।

यमवचनात् ॥ स्मृत्यर्थसारेऽपि सूतकान्नभोजनमसकुल्यानां न कार्यं ॥ स्वकुल्यानां न दोष इति दातृभोक्तृभ्याम विज्ञातं सूतकं दोषजनकं न स्यात् ॥

[७६१] तदुक्तं षट्त्रिंशन्मते—

उभाभ्यामपरिज्ञातं सूतकं नैव दोषकृत् ।
एकेनापि परिज्ञाते भोक्तुर्दोषमुपाहरेत् ॥

दातृभोक्त्रोरन्यतरेण ज्ञाते सूतकान्नभोजने दोषो भोक्तुरेव ॥ सूतकान्नभोजयितृत्वदोषो दातुः न भोजनदोषः इति ॥ तथा गरुडपुराणे—

दात्रा भोक्त्रा च न ज्ञातं सूतकं मृतकं तथा ।
उभयोरपि तद्दोषं नारोपयति कर्हिचित् ॥ इति ॥

ब्रह्मपुराणेऽपि—अपि दातृगृहीत्रोश्च सूतके मृतके तथा ।
अविज्ञाते न दोषः स्याच्छ्राद्धादिषु कथंचनेति॥

तथा षट्त्रिंशन्मते विशेषः—

भुञ्जानेषु तु विप्रेषु अन्तरा मृतसूतके ।
अन्यगेहोदकाचान्ताः सर्वे ते शुचयः स्मृताः ॥ इति॥

[७६२] तथा सूतकिनां केषुचिद्द्रव्येष्वाशौचदोषाभावाद्ग्राह्यत्वमुक्तं मरीचिना—

लवणे मधुनि मांसे च पुष्पमूलफलेषु च ।
तिलौषधाजिने चैव पक्वापक्वे स्वयंग्रहे ॥
पुष्पेषु चैव सर्वेषु नाशौचं मृतसूतक इति ॥

पक्वं भक्ष्यजातं । अपक्वं तण्डुलादि । स्वयंग्रह इति

स्वाम्यनुज्ञातः स्वयमेव गृह्णीयादिति ॥ एतदपक्वान्नादिग्र-
हणमन्नसत्रप्रवृत्तादेव आशौचवतो ग्राह्यं नान्यस्मात् ॥ त-
दाहाङ्गिराः—अन्नसत्रप्रवृत्तानामाममन्नमगर्हितम् ।

भुक्त्वापक्वान्नमेतेषां त्रिरात्रं तु पयः पिबेदिति ॥

अत्र पक्वशब्दः सिद्धान्नविषयः ॥ एवमाशौचे अन्नस-
त्रिणामपि न ग्राह्यं सिद्धान्नादिकं किमुतान्येषामिति ॥
तथा—आपद्गतः संप्रगृह्णन्भुञ्जानोऽपि यतस्ततः ।

न लिप्येतैनसा विप्रो ज्वलनार्कसमो हि स इति ॥

अथ जन्माशौचे सिद्धान्नभोजननिषेधप्रसक्तानुप्रसक्त-
मभिधाय पुनः कर्माभ्यनुज्ञातमभिधीयते ॥ ७६३ यच्चोक्तं स्मृ-
त्यादिषु—सूतके कर्मणां त्यागः सन्ध्यादीनां विधीयते ।
तथा—सर्वकालमुपासीत सन्ध्ययोः पार्थिवेष्यते ।

अन्यत्र सूतकाशौचविभ्रमातुरभीतितः ॥

इत्यादिनाशौचे सन्ध्योपासनादीनां निषेधाभिधानं त-
त्कुशग्रहणादिविधिपूर्वकं नोपासीतेत्यभिप्रायपरं ॥ यतः—

सूतके मृतके चैव रोगोत्पत्तौ तथाध्वनि ।

मानसीं तु जपेत्सन्ध्यां कुशवारिविवर्जितामिति ॥

अनेन स्मृतिवचनेन कुशादिविवर्जितं सन्ध्योपासनं वि-
धीयते ॥ न च विहितप्रतिषिद्धत्वात् अतिरात्रे षोडशिग्रहण-
वत् विकल्पशङ्का कार्या ॥ यत—

सन्ध्यास्नानपरित्यागात्सप्ताहाच्छूद्रतां व्रजेत् ।

तस्मात्स्नानं च सन्ध्यां च सूतकेऽपि न संत्यजेत् ॥

इति स्मृत्यर्थसारवचनेन सन्ध्योपासनं विना शूद्रत्वप्रा-

त्यभिधानात् ॥ अतः सन्ध्यां न त्यजेदिति ॥ [७५४] अमुमेवार्थं पुलस्त्य आह—

सूतके मृतके चैव सन्ध्याकर्म समाचरेत् ।
मनसोच्चारयेन्मंत्रान्प्राणायाममृते द्विज इति ॥

यद्यपि सन्ध्योपासने वारि निषिद्धं तथापि गायत्रीमुच्चार्याञ्जलिप्रक्षेपादिकं कार्यमिति पैठीनसिराह ॥ सूतके सावित्र्या चाञ्जलिं प्रक्षिप्य प्रदक्षिणां कृत्वा सूर्यं ध्यायन्नमस्कुर्यादिति अत्र विशेषः स्मृत्यर्थसारात् ॥ स्मार्तत्वेऽपि सन्ध्यायां सावित्र्याञ्जलिदानं कार्यं ॥ मार्जनं न वा ॥ यद्वा प्राणानायम्य शक्त्या मनसा मंत्रमुच्चारयन् ॥ मार्जनादिकं कृत्वा वाचा गायत्रीमुच्चार्याञ्जलिं दद्यात् ॥ सन्ध्यात्यागे पुलस्त्यः—

सन्ध्यामिष्टिं चरुं होमं यावज्जीवं समाचरेत् ।
न त्यजेत्सूतके वापि त्यजन्गच्छेदधोगतिम् ॥

तथा सूतके अग्निहोत्रहोमादिकं कुर्यात् ॥ [७५५] तदुक्तं मिताक्षरायां—

वैतानोपासनाः कार्याः क्रियाश्च श्रुतिचोदनात् ।

वितानोऽग्नीनां विस्तारस्तत्रभवो वैतानस्त्रेताग्निसाध्यः ॥ अग्निहोत्रदर्शपूर्णमासाद्याः क्रियाः प्रतिदिनमुपास्यन्ते ॥ इत्युपासनो गृह्याग्निस्तत्र भवा औपासनाः सायंप्रातर्होमक्रिया उच्यन्ते ॥ वैतानौपासना वैदिकाः क्रियाः कार्याः ॥ एवमौपासनहोमोऽपि श्रौत इति प्रतिपादितं तत्रैव ॥ अत एव स्मृत्यर्थसारे ॥ औपासनाग्निसाध्याः सायंप्रातर्होमस्थालीपाकाद्याः नित्यनैमित्तिकाः श्रुतिनोदितत्वात्कार्या एव ॥ श्रौ-

तानां च कार्यत्वाभिधानं नित्यनैमित्तिकाभिप्रायेण ॥ यथाह पैठीनसिः॥ [७८६] नित्यानि निवर्तेरन् वैतानवर्ज्यं शालाग्नौ चैक इति ॥ शालाग्निर्गृह्याग्निस्तत्र भवा निवर्तेरन् इत्येक आहुः ॥ अतस्तेषु आशौचं नास्तीति नित्याग्निहोत्रादीनि स्वयमेव कुर्यादिति ॥ अत एव व्याघ्रपादः—

स्मार्तकर्मपरित्यागो राहोरन्यत्र सूतके ।
श्रौते कर्मणि तत्कालं स्नातः शुद्धिमवाप्नुयात् ॥

श्रौतत्वविशेषणोपादानात् स्मार्तक्रियाणां दानादीनामनुष्ठानं गम्यते ॥ सर्वं काम्यं वर्ज्यमेवेति स्मार्तत्वेऽपि पिंडयज्ञादिकमसगोत्रेण कारयेत् स्वयं न कुर्यात् ॥ [७८७] तदाह जातूकर्ण्यः—

सूतके तु समुत्पन्ने स्मार्तकर्म कथं भवेत् ।
पिंडयज्ञं चरुं होममसगोत्रेण कारयेत् ॥

पिंडयज्ञः पिंडपितृयज्ञः ॥ श्रवणाकर्माश्वयुज्यादिकाः स्थालीपाकाश्चेत्यन्येन कारयितव्यानि ॥ श्रौतमपि पिंडयज्ञादिकमन्ये न कारयितव्यं ॥ अन्य एतानि कुर्युरिति पैठीनसिः ॥ बृहस्पतिनाप्युक्तं—

सूतके मृतके चैव अशक्तौ श्राद्धभोजने ।
प्रवासादिनिमित्तेषु हावयेन्न च हापयेत् ॥

अन्यकर्तृत्वेऽपि स्वद्रव्यत्यागात्मकं प्रधानं इष्टिविषये याजमानं च स्वयं कुर्यात् तस्यानन्यनिष्पाद्यत्वात् ॥ यत्पुनः

दानं प्रतिग्रहो होमः स्वाध्यायश्च निवर्तत इति

होमप्रतिषेधः स काम्याभिप्रायो वैश्वदेवाभिप्रायो वा ॥

७६८ अत एव संवर्तः—

विप्रो दशाहमासीत वैश्वदेवविवर्जितः ।
पञ्चयज्ञविधानं तु न कुर्यान्मृत्युजन्मनोरिति ॥

आशौचे पञ्चमहायज्ञानां वर्जनमभिहितवान् ॥ नित्यहोमविषये

होमं तत्र प्रकुर्वीत शुष्कान्नेन फलेन वेति ॥

तेनैवोक्तं ॥ आशौचे दानादि प्रतिषिद्धं ॥ तदुक्तं स्मृत्यर्थसारे ॥ दानप्रतिग्रहपञ्चमहायज्ञनित्यश्राध्यस्वाध्यायादीनां स्मार्तानां त्याग एव ॥ नित्यस्नानादिकं कार्यमेवेत्युक्तं ॥ तत्रैव नित्यस्नानाशौचाचमनभोजननियमान् अस्पृश्यस्पर्शस्नानं च कुर्यादेव ॥ आशौचे क्रियमाणे नित्यस्नानं च कुर्यादेव ॥ आशौचे क्रियमाणे नित्यस्नाने स्नानाङ्गतर्पणं न कार्यं ॥ अस्पृश्यस्पर्शादावदृष्टत्वेन तस्यानियताङ्गत्वात् आशौचविषये अग्निहोत्रादौ कर्मणि स्वल्पकालेऽपि शुद्धिरुक्ता॥

७६९ स्मृत्यन्तरे—

एकाहाद्ब्राह्मणः शुध्येद्योऽग्निवेदसमन्वितः ।
त्र्यहात्केवलवेदस्तु विहीनोदशभिर्दिनैः ॥

ननु इत्यादिना वचनेनाध्ययनयज्ञानुष्ठानयोगिनां त्र्यहादिभिः सर्वात्मना शुद्धिरित्येवं कस्मान्नेष्यते ॥ उच्यते दशाहं शावमाशौचमिति सामान्यप्राप्तदशाहबाधपुरःसरमेव ह्येकाहाद्ब्राह्मणः शुध्येदित्यादिविधायकं भवत्येव बाधस्य चानुपपत्तिनिबन्धनत्वाद्यावति बाधिते अनुपपत्तिप्रशमो भवति तावद्बाधनीयं ॥ अतः कियदनेन बाध्यमित्यपेक्षायां

विशेषणसमर्पणक्षमस्य अग्निवेद समन्वित इति वाक्यशेष-स्य दर्शनादग्निवेदविषये अग्निहोत्रादौ कर्मणि स्वाध्याये च व्यवतिष्ठते न पुनर्दानप्रतिग्रहादौ ॥ एवं च अग्निवेदपदयोः कार्यान्वयिकत्वं भवति ॥ न चेदमाशौचसंकोचविधानं सर्व-संव्यवहारगोचरमित्यलं ॥ तथा जन्ममरणाशौचे विद्यमाने चन्द्रसूर्यग्रहणं चेत्स्यात् तत्र स्नानतर्पणश्राद्धदानादिकं कार्यं ॥ अस्नाने दोषमाह बृहस्पतिः—

ग्रहणे संक्रमे वापि स्नायाद्यदि न मानवः ।
सप्तजन्मनि कुष्ठी स्याद्दुःखभागी च जायते ॥

वृद्धवासिष्ठः—चन्द्रसूर्यग्रहे स्नायात्सूतके मृतकेऽपि वा ।
अस्नायी मृत्युमाप्नोति स्नायी मृत्युं न विन्दति॥

७७० अङ्गिरा अपि—सर्वे वर्णाः सूतकेऽपि मृतके राहुदर्शने ।
स्नात्वा श्राद्धं प्रकुर्वीत दानं शाठ्यविवर्जित इति ॥

वित्तविषय शाठ्यं ब्रह्माण्डपुराणे—

आशौचं जायते नृणां ग्रहणे चन्द्रसूर्ययोः ।
राहुस्पर्शनयोः स्नात्वा दानादौ कल्पते नरः ।

कल्पते योग्यो भवति ॥ यथा जातं मरणेन बाध्यते त-था मरणजन्मनी दिव्येन ग्रहणसूतकेन बाध्येते ॥

एतदभिप्रेत्यालिङ्गपुराणं—

सूतके मृतके चैव न दोषो राहुदर्शने ।
तावदेव भवेच्छुद्धिर्यावन्मुक्तिर्न दृश्यते इति ॥

षट्त्रिंशन्मते—

सर्वेषामेव वर्णानां सूतके राहुदर्शने ।

स्नात्वा कर्म प्रकुर्वीत भूतमन्नं विवर्जयेदिति ॥

भूतमन्नं सिद्धान्नं । सिद्धान्नविषये विशेषः स्मृत्यन्तरात् ॥

उपरागोषितं चान्नं न भोक्तव्यं कदाचन ।

ग्रहणार्वाक् क्षिपेद्दर्भान् ततो भुक्तं न दुष्यति ॥

इति ग्रहणे कर्मनिर्णयः

---

अथ उपनयनोर्ध्वं मृत्यधिकारेनानासूतक निर्णयः ॥

७७१ तथा विवाहादिषु सूतकोत्पत्तेः प्राक् ब्राह्मणार्थं पृथक्कृतमन्नं भोक्तव्यमेव ॥ तदाह बृहस्पतिः—

विवाहोत्सवयज्ञेषु अन्तरा मृतसूतके ।

पूर्वसंकल्पितार्थेषु न दोषः परिकीर्तित इति ॥

तथा अपरोविशेषः षट्त्रिंशन्मते दर्शितः ॥

विवाहोत्सवयज्ञेषु अन्तरा मृतसूतके ।

परैरन्नं प्रदातव्यं भोक्तव्यं च द्विजोत्तमैः ॥

परैःसूतकरहितैः। तथा विवाहाद्युपक्रम्य शेषमन्नं परैर्देयं॥ दातृभोक्तृंश्च न स्पृशेत् सूतकमिति शेष इति मिताक्षरायां ॥ तथा पैठीनसिनापि शुद्धिरुक्ता ॥

विवाहदुर्गयज्ञेषु यात्रायां तीर्थकर्मणि ।

न तत्र सूतकं तद्वत्कर्म यज्ञादि कारयेदिति ॥

तथा प्रारब्धव्रतादिकमन्तरा सूतकापातेऽपि कर्तव्यं ॥ तदाह विष्णुः—व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्चने जपे ।

प्रारब्धे सूतकं न स्यादनारब्धे तु सूतकं ॥ इति ॥

सूतकमिति मृतस्याप्युपलक्षणं॥व्रतादिविषये प्रारंभस्तेनैवोक्तः

प्रारंभो वरणं यज्ञे संकल्पो व्रतसत्रयोः ।
नान्दीमुखं विवाहादौ श्राद्धे पाकपरिक्रियेति ॥

[७७२] तथा—एकविंशत्यहर्यज्ञे विवाहे दश वासरान् ।
चूडोपनयने त्रीणि श्राद्धे पाकप्रवेशनम् ।

इति स्मृत्यन्तरं ॥ अभ्यङ्गादिविवाहेषु नाशौचमिति ॥ तथा अनारब्धेऽप्यवश्यकर्तव्ये विवाहादौ कर्मणि कर्त्ता यद्याशौचवान् स्यात्तदा कूष्माण्डमंत्रैराज्यं हुत्वा वृद्धिश्राद्धादिविवाहमङ्गलं स्यात् ॥ तदाह विष्णुः—

अनारब्धविशुध्यर्थं कूष्माण्डैर्जुहुयाद्घृतम् ।
गां दत्वा पञ्चगव्याशी ततः शुध्यति सूतकी ॥

कूष्माण्डमंत्राः ॥ यद्देवा देवहेडनमित्यादि यजुर्वेदे प्रसिद्धाः॥इदं विधानं वृद्धिश्राद्धाद्यधिकारार्थं सूतकिनः नान्दीमुखं विवाहादावित्युक्तं ॥ तदकरणे अनारंभः ॥ वरस्य कन्यायाश्च वरणलक्षणाभ्यङ्गादिविधानेनारब्धत्वात् वरणलक्षणाभ्यङ्गाद्यकरणे विवाहानुष्ठानं लोकविरुद्धं ॥ अतः वृद्धिश्राद्धाधिकारी सूतकी चेदिदं कृत्वा वृद्धिश्राद्धादि कुर्यात् ॥ यच्च कैश्चिदुक्तं ॥ प्रारंभाभावेऽपि कन्याविवाहविषये एवेदं विधान मुक्तं तदयुक्तं ॥ [७७३] वचनमध्ये विशेषादर्शनात् ॥ तथा—

निमंत्रितेषु विप्रेषु प्रारब्धे श्राद्धकर्मणि ।
निमंत्रितस्य विप्रस्य स्वाध्यायाद्विरतस्य च ॥
देहे पितृषु तिष्ठत्सु नाशौचं विद्यते क्वचिदिति ॥

यद्यपि निमंत्रितेषु विप्रेषु आशौचाभावः प्रतिपादितः तथापि शिष्टाचारपरंपरानुसर्तव्या ॥ तथा दाने च पूर्वसंकल्पि-

तस्य द्रव्यस्य नाशौचं ॥

पूर्वसंकल्पितंद्रव्यं दीयमानं न दुष्यतीति ।

क्रतुस्मरणात् ॥ तथा विवाहाद्युत्सवमात्रेष्वाशौचं न स्यात्तदुक्तं स्मृत्यर्थसारे ॥ विवाहोत्सवयज्ञेष्वन्तरा जन्ममरणाशौचे पूर्वसंकल्पितं द्रव्यं पूर्ववृत्तचौलोपनयनविवाहसंस्कारकर्मसु पूर्ववृत्तयज्ञेषु पूर्ववृत्तप्रतिष्ठारामाद्युत्सर्गमात्रेषु च पूर्ववृत्तवृषोत्सर्गादिपाकयज्ञेषु च युद्धे युद्धार्थविहितशान्तिकर्मसु च स्फोटकादिभिरुपसर्गेण राजभयेन वा देशविप्लवे च विवाहोत्सवदुर्गयज्ञयात्रातीर्थयुध्धकर्मसु च सद्यः शौचं ॥ तत्तदर्थे शान्तिकर्मणि च सद्यःशौचं व्याध्यादिना मुमूर्षावस्थायां तदुपशमनार्थे दाने च सद्यःशौचमिति ॥

७७४ मिताक्षरायामपि—

आपद्यपि च कष्टायां सद्यः शौचं विधीयते ।

इत्यापादि मुख्याशौचकल्पानुष्ठानासंभवेन सद्यः शौचानुकल्पः प्रोक्त इति ॥ कष्टायां व्याध्याद्यभिभवेन मरणावस्थायां ॥ तथा—

ऋत्विजां दीक्षितानां च यज्ञियं कर्म कुर्वताम् ।
सत्री व्रती ब्रह्मचारी दातृब्रह्मविदांस्तथा ॥
दाने विवाहे यज्ञे च सङ्ग्रामे देशविप्लवे ।
आपद्यपि च कष्टायां सद्यः शौचं विधीयते ॥ इति ॥

ऋत्विजो वरणसंभूताः कर्तृविशेषाः । दीक्षणायां संस्कृताः दीक्षिताः ॥ तेषां यज्ञियं यज्ञे भवं कर्म कुर्वतां सद्यः शौचं सत्रिणां व्रतिनां च सत्रे व्रते च शुद्धिर्न कर्ममात्रे सं-

व्यवहारमात्रे वा ॥ तथा—

नित्यमन्नप्रदस्यापि कृच्छ्रचान्द्रायणादिषु ।
निवृत्ते कृच्छ्रहोमादौ ब्राह्मणादिषु भोजने ॥

निवृत्ते प्रवृत्ते इत्यर्थः ॥

गृहीतनियमस्यापि न स्यादन्यस्य कस्यचित् ।

७७५ तथा ॥ ब्रह्मचारी वानप्रस्थः यतिश्च एषां त्रयाणामाश्रमिणां सर्वत्र शुद्धिः विशेषप्रमाणाभावात् ॥ तदपि स्मृत्यर्थसारे ॥ ब्रह्मचर्यादिव्रतानां च यत्किंचिन्नियमस्थानां नित्यदातृणामेतेषां यावदुपाधिस्तावदाशौचं नास्त्येव ॥ ऋत्विगादीनां तदानीं स्नानमस्ति ॥ यजमानस्तु स्नात्वाचम्य उद्देशत्यागं कुर्यात् ॥ तथा अत्यन्तक्षुधया पीड्यमानानां क्षुधाद्युपशमनार्थे प्रतिग्रहे आशौचसंकोचः प्रतिपादितो मनुना ॥

कुसूलधान्यको वास्यात्कुंभीधान्यक एव च ।
त्र्यहैकाहिको वा स्यादश्वस्तनिक एव च ॥

अस्यार्थः ॥ कुसूलधान्यस्य दशाहं । कुंभीधान्यस्य चतुरहः । त्र्यहं सञ्चितधान्यस्य त्र्यहं ॥ एकाहसञ्चितधान्यस्यैकाहः ॥ अश्वस्तनिकस्य सद्यः शौचं ॥ श्वसः स्नुट् चेति श्वस्तनिकः ॥ पश्चान्नञ् ॥ अन्नाभाववतः अन्नरहितस्येत्यर्थः ॥

७७६ अयमाशौचसंकोचो यस्य प्रतिग्रहं विना क्षुधा न निवर्तते तद्विषयो न सर्वत्रेत्यवगन्तव्यं ॥ आशौचानन्तरं सर्वे वर्णाः स्नान्ति ॥ यस्य यावत्कालमाशौचं विहितं तस्यानन्तरं स्नानं ॥ अत्र विशेषमाह मनुः—

विप्रः शुध्यत्यपः स्पृष्ट्वा क्षत्रियो वाहनायुधम् ।

वैश्यः प्रतोदरश्मीन्वा शूद्रश्चैव कृतक्रियः ॥

कृतक्रिय इति प्रत्येकमभिसम्बध्यते कृतस्नान इत्यर्थः ॥
अथ राज्यव्यापारे राज्ञामाशौचं नास्ति ॥ तदुक्तं मनुना—

राज्ञो महात्मिके स्थाने सद्यः शौचं विधीयते ।
प्रजानां परिरक्षार्थमासनं चात्र कारणम् ॥

पञ्चमहायज्ञादौ भवत्येवाशौचं राज्ञां ॥ तथा प्रचेताः—

कारवः शिल्पिनो वैद्याः दासी दासास्तथैव च ।
राजानो राजभृत्याश्च सद्यः शौचाः प्रकीर्तिताः ॥

कारवः शूर्पकारादयः । शिल्पिनश्चित्रकारचैलनिर्णेजकादयः ॥ एतेषां स्वकीयकर्मणि नाशौचं ॥ शातातपः—

शिल्पकारादयः शूद्रा दासी दासास्तथैव च ।
स्नाने शरीरसंस्कारे गृहकर्मण्यदूषिता इति ॥
चिकित्सको यत्कुरुते न तदन्येन शक्यते ।
तस्माच्चिकित्सकः स्पर्शे शुद्धो भवति नित्यश इति ॥

एतैः साध्यमानकर्मणि अमी स्पर्शनयोग्याः न पुनर्धर्मादिविधौ ॥

## इति उपनयनोर्ध्वं मृत्यधिकारे नाना सूतकनिर्णयः ॥

कृतेऽचलद्विवेदेन ग्रन्थे निर्णयदीपके ।
जातः परोपकाराय नाना सूतकनिर्णयः

## [७७७]अथ रजस्वलाशुद्धिरभिधीयते ॥

दिवा रजः स्रावे जनने मरणे वा तद्दिनादिकत्वमशुचि-त्वं स्यात् तदाह कात्यायनः—

उदिते तु यदा सूर्ये नारीणां दृश्यते रजः ।
जननं वा विपत्तिर्वा यस्याहस्तस्य शर्वरी ॥

तथा—रात्रिं कुर्यात्त्रिभागां तु द्वौ भागौ पूर्व एव तु ।
उत्तमांशः प्रभातेन युज्यते ऋतुसूतके ॥

इत्यस्मिन्पक्षान्तरे विद्यमानेऽपि केचन

रात्रावेव समुत्पन्ने मृते रजसि सूतके ।
पूर्वमेव दिनं ग्राह्यं यावन्नाभ्युदितो रविः ॥

इत्युदाहरन्ति संव्यवहरन्ति च ॥ तथापि देशाचारतो व्यवस्था ॥ रजस्वला त्रिरात्रमशुचिः स्यात् ॥

चतुर्थेऽहनि संशुद्धा भवति व्यावहारिकी ।

व्यवहारो भर्तुः स्पर्शनाविषयः ॥ देवपितृकर्मणि तु पञ्चमेऽहनि योग्या इति ॥ तथा स्मृत्यन्तरं—

शुद्धा भर्तुश्चतुर्थेऽन्हि स्नानेन स्त्री रजस्वला ।
दैवे कर्मणि पित्र्ये च पञ्चमेऽहनि शुध्यतीति ॥

पञ्चमेऽहनीति रजोनिवृत्तिकालोपलक्षणं मिताक्षरोक्त-स्याभिप्रायः ॥ रजोनिवृत्त्यभावे तु

सप्ताहात्पितृदेवानां भवेद्योग्या व्रतार्चने ॥

इति गरुडोक्तं द्रष्टव्यं ॥ [७७८] तथा—

साध्वाचारा न तावत्स्याद्रजो यावत्प्रवर्तते ।
वृत्ते रजसि गम्या स्याद् गृहकर्मणि चैन्द्रिये ॥ इति ॥

वृत्ते निवृत्ते। अत्र विशेषः स्मृत्यर्थसारात् ॥ अज्ञाते रजः-स्रावे चतुर्दिनेषु ज्ञाते तु रजःस्रावादिकमशुचित्वं स्यात् ॥ ज-ननादौ तु ज्ञानादिकमशुचित्वं स्यात् ॥ अतो ज्ञानात्पूर्वं रज-स्वलास्पृष्टं दुष्टमेव ॥ एवं सर्वं पापनिमित्तं स्वसत्वादिपापा-पादकं सूतकं तु ज्ञानादिकमेव ॥ सर्वथाज्ञानं चेच्छुचित्वमेव॥ तथा रजस्वलायाः स्नातायाः पुनरपि रजोदृष्टे अष्टादशदि-नादर्वाक् अशुचित्वं नास्ति ॥ अष्टादशे दिने रजोदृष्टौ एकरा-त्रमशुचित्वं नवदशदिने द्विरात्रं विंशतितमे दिने त्रिरात्रं॥

७७९ यथाहात्रिः—रजस्वला यदा स्नाता पुनरेव रजस्वला ।
अष्टादशदिनादर्वागशुचित्वं न विद्यते ॥
एकोनविंशतेरर्वागेकाहं स्यात्ततो द्व्यहम् ।
विंशत्प्रभृत्युत्तरेषु त्रिरात्रमशुचिर्भवेदिति ॥

यत्तु—चतुर्दशादिनादर्वागशुचित्वं न विद्यते ।

इति स्मृत्यन्तरं॥ तत् स्नानप्रभृतित्वमभिप्रेतमतो न वि-रोधः ॥ मिताक्षरायां यस्या विंशतिदिनोत्तरकालमेव प्राय-शो दर्शनं तद्विषये विंशतिमे दिने त्रिरात्रं ॥ यस्याः पुनरा-रूढयौवनायाः प्रागेवाष्टादशदिनात्प्राचुर्येण रजोनिर्गमस्तस्या रजोदर्शनात्त्रिरात्रमेव ॥ स्मृत्यर्थसारे तु विशेषः ॥ त्रयोदश-दिनादूर्ध्वं प्रायशो रजःस्राविणीनां एकादशदिनादर्वाक् अशु-चित्वं नास्ति ॥ एकादशदिने रजोदृष्टौ एकरात्रमशुचित्वं । द्वादशे त्रिरात्रं त्रयोदशादिषु त्रिषु त्रिरात्रमेव ॥ ७८० त-था च यावत्त्रिरात्रं स्नानादिरहितं तया स्थातव्यं॥ तथा हि॥

प्रथमेऽहनि चाण्डालि द्वितीये ब्रह्मघातिनी ।

तृतीये रजकी ज्ञेया चतुर्थेऽहनि शुध्यतीति ॥

स्मृत्यन्तरादेवं ज्ञेयं ॥ तथाचाङ्गिराः—

हस्तेऽश्नीयान्मृन्मये वा हविर्भुक् क्षितिशायिनी ।
रजस्वला चतुर्थेऽन्हि स्नात्वा शुद्धिमवाप्नुयात् ॥

इति स्मृत्यर्थसारात् ॥ रजस्वला चतुर्थेऽन्हि षष्ठिमृत्तिकाभिः शौचं कृत्वा क्षत्रियादिस्त्री पादपादन्यूनमृत्तिकाभिर्विधवा द्विगुणमृत्तिकाभिः शौचं कृत्वा मलं प्रक्षाल्य दन्तधावनपूर्वं सङ्गवे सचैलं स्नायात् ॥ अथ रजस्वलाधर्मे पाराशरः—

स्नाने नैमित्तिके प्राप्ते नारी यदि रजस्वला ।
पात्रान्तरिततोयेन स्नानं कृत्वा व्रतं चरेत् ॥
सिक्तगात्रि भवेदद्भिः साङ्गोपाङ्गा कथंचन ।
न वस्त्रपीडनं कुर्यान्नान्यद्वासश्च धारयेत् ॥ इति ॥

व्रतं रजस्वलाव्रतं ॥ [७८१] तच्च स्मृत्यर्थसारे ॥ रजस्वलात्वञ्जनाभ्यञ्जनस्नानप्रवासदन्तधावननखनिकृन्तनरज्जुस्पर्शव्यापारतांबूलमधुमांसगन्धपुष्पादिदिवास्वापग्रहनक्षत्रनिरीक्षणादिवर्जयेत् ॥ वासिष्ठः ॥ रजस्वला न हसेत् किंचिदाचरेत् अतैजसेन सर्वेण पात्रेणापः पिबेदञ्जलिना वा पात्रेण लोहितायसेन वा इति धर्माः ॥ उशनसाप्यत्र विशेषो दर्शितः ॥

ज्वराभिभूता या नारी रजसा च परिप्लुता ।
कथं तस्या भवेच्छौचं शुद्धिः स्यात्केन कर्मणा ॥

इति आशंक्योक्तं—

चतुर्थेऽहनि संप्राप्ते स्पृशेदन्या तु तां स्त्रियम् ।
सा सचैलावगाह्यापः स्नात्वा स्नात्वा पुनः स्पृशेत् ॥

दश द्वादशकृत्वो वा आचमेत्तु ततः पुनः ॥
अन्ते च वाससां त्यागः स्नाता शुद्धा भवेत्तु सा ।
दद्याच्छक्त्या ततो दानं पुण्याहेन विशुध्यतीति ॥

अयं चातुरमात्रे स्नानप्रकारोऽनुसरणीय इति पराशर आह ॥

आतुरे स्नानमुत्पन्नं दशकृत्वो ह्यनातुरः ।
स्नात्वा स्नात्वा स्पृशेदेनं ततः शुध्येत्स आतुरः ॥

## इति रजस्वलाशुद्धिनिर्णयः ॥

---

## ७८२ अथ रजस्वलानां रजस्वलादिस्पर्शने प्रायश्चित्तमुच्यते ॥

तावद्वृद्धवसिष्ठः—

स्पृष्टे रजस्वलेऽन्योन्यं स्वगोत्रे त्वेकभर्तृके ।
कामादकामतो वापि सद्यः स्नानेन शुध्यतः ॥

असपत्न्योः सवर्णयोर्योनिगोत्रसंबन्धयोरबुध्धिपूर्वकस्पर्शे स्नानमात्रं ॥ तदाह मार्कण्डेयः—

उदक्या तु सवर्णा या स्पृष्टा चेत्स्यादुदक्यया ।
तस्मिन्नेवाऽहनि स्नात्वा शुद्धिमाप्नोत्यसंशयम् ॥

बुद्धिपूर्वकस्पर्शने त्वेकरात्रं निराहारत्वं ॥ योनिगोत्रसंबन्धयोः सवर्णयोः अबुद्धिपूर्वकस्पर्शे स्नात्वा एकरात्रनिराहारत्वं ॥ तदाह कश्यपः—

रजस्वला तु संस्पृष्टा ब्राह्मण्या ब्राह्मणी यदि ।
एकरात्रं निराहारा पञ्चगव्येन शुध्यतीति ॥

पञ्चगव्यप्राशनं शुध्युत्तरकाले अशुद्धौ तन्निषिध्यं ॥ बुध्धिपूर्वकस्पर्शने त्वाशुध्धेर्नाश्नीयादिति ॥ [७८३] स्मृत्यर्थसारे उक्तं ॥ असवर्णयोरन्योन्यस्पर्शे तु वृध्धवसिष्ठः—

स्पृष्ट्वा रजस्वलान्योऽन्यं ब्राह्मणी क्षत्रिया तथा ।
कृच्छ्राद्विशुध्यते पूर्वा उत्तरा तु तदर्धत इति ॥
स्पृष्ट्वा रजस्वलान्योऽन्यं ब्राह्मणी वैश्यजापि वा ।
पादहीनं चरेत्पूर्वा कृच्छ्रपादं तथोत्तरा ॥
स्पृष्ट्वा रजस्वलान्योऽन्यं ब्राह्मणी शूद्रजापि वा ।
कृच्छ्रेण शुध्यते पूर्वा शूद्री दानेन शुध्यति ॥

दानेन पादकृच्छ्रप्रत्याम्नायनिष्कचतुर्थांशेनेति ॥ क्षत्रियादिस्त्रीविषये तु

स्पृष्ट्वा रजस्वलान्योऽन्यं क्षत्रिया वैश्यजा तथा ।
त्रिरात्राच्छुध्यते पूर्वा अहोरात्रेण चोत्तरा ॥

तथा क्षत्रियाशूद्र्योः स्पर्शे क्षत्रियायास्त्रिरात्रं शूद्र्या अहोरात्रमिति ॥ तथा हीनवर्णा स्पृष्टाऽऽशुद्धेर्नाश्नीयात् ॥ यदि भुङ्क्ते पश्चात्प्रतिभोजनमुपवासः तावद्यदा दानं चेति ॥ [७८४] स्मृत्यर्थसारः—रजस्वला तु नाश्नीयात्स्पृष्टा चेदन्यवर्णया ।
यावन्न शुद्धिमाप्नोति शुद्धा स्नानेन शुध्यतीति ॥
प्रचेताः ॥ तथा पतितचाण्डालादिस्पर्शे विशेष उक्तो वृद्धवसिष्ठेन—

पतितान्त्यश्वपाकेन स्पृष्टा चेत्स्याद्रजस्वला ।
तान्यहानि व्यतिक्रम्य प्रायश्चित्तं समाचरेत् ॥

तान्यहान्यतिक्रम्य अनाशकेनेति मार्कण्डेयोऽपि—

अन्त्यजातिश्वपाकेन स्पृष्टा चेत्स्याद्रजस्वला ।
चतुर्थेऽहनि शुद्धायाः प्रायश्चित्तं स्मृतं बुधैः ॥

प्रायश्चित्तमुक्तं बृहस्पतिना—

प्रथमेऽन्हि त्रिरात्रं स्याद्द्वितीये द्व्यहमेव च ।
अहोरात्रं तृतीयेऽन्हि परतो नक्तमाचरेत् ॥

एतद्बुद्धिपूर्वकस्पर्शनविषयं ॥ अबुद्धिपूर्वकस्पर्शने तु बौधायनः—रजस्वला तु संस्पृष्टा चाण्डालान्त्यश्ववायसैः ।
तावत्तिष्टेन्निराहारा यावत्कालेन शुध्यतीति ॥

अन्त्यशब्दः शूद्रवाची सन्नपि अन्त्यजात्युपलक्षकः ॥
तच्चोक्तं मनुना—रजकश्चर्मकारश्च नटो बरट एव च ।
कैवर्तमेदभिल्लाश्च सप्तैते अन्त्यजाःस्मृताः ॥
अयस्कारश्चर्मकारस्तक्षा पाषाणवर्तकी ।
कांस्यताम्रकरास्तन्तुवायाश्च ध्वजिनोन्त्यजाः ॥

[७८५] इति च शब्देन श्ववृकशृगालवानरखरोष्ट्रविड्वराहादयः ॥ वायसशब्देन काककुक्कुटगृध्रश्येनादयः ॥ एतेषां स्पर्शने शुद्धिपर्यन्तं निराहारत्वं एवं स्मृत्यर्थसारे ॥ अमत्या चाण्डालरजस्वलादिस्पर्शे श्वादिस्पर्शे अतिहीनामेध्यादिमलोच्छिष्टस्पर्शने च तदाद्यहन्यभुञ्जानैव कालेन शुध्येत् । अत्र प्रथमादिदिने भुक्तौ कार्यं पादपादन्यूनं कुर्यात् ॥ तत्प्रत्याम्नायान्तं ॥ मत्या स्पर्शने तु तदहन्यभुञ्जानातिक्रम्य प्रथमेऽन्हि त्रिरात्रमित्यादि प्रायश्चित्तं कुर्यान्निमित्तानुसारेणेति ॥

यत्पुनस्तस्य वचनम्—

रजस्वला तु संस्पृष्टा ग्राम्यकुक्कुटवायसैः ।

श्वभिः स्नात्वा क्षिपेत्तावद्यावच्चन्द्रस्य दर्शनमिति ॥

ग्राम्यशब्देन शूद्ररजकादिग्रहणं ॥ कुक्कुटादेः पृथग्विधानात् तदशक्तिविषयं बालापत्यविषयं वा ॥ यत उक्तं स्मृत्यर्थसारे ॥ सर्वत्र स्पर्शे बालापत्याया अभिषेके कृते मुक्तिः स्यात् ॥ पश्चादनशनप्रत्याम्नायः ॥ इतरस्याशुध्धेरभोजनं ॥ भुक्तौ प्रतिभोजनमुपवासः प्रत्याम्नायो वा ॥ तथा चाण्डालरजकादिसंस्पृष्टस्पर्शनेऽपि तदाद्युपभुक्त्यैव त्रिरात्रादि ॥[७८६] तथा—अशक्तौ काञ्चनं दद्याद्विप्रेभ्यो वापि भोजनमिति । सर्वत्र संबध्यते इति ॥ अथ उच्छिष्टयोः परस्परस्पर्शने अत्रिराह—उच्छिष्टोच्छिष्टसंस्पृष्टा कदाचित्स्त्री रजस्वला ।

कृच्छ्रेण शुध्यते पूर्वा शूद्रा दानैरुपोषिता ॥

पूर्वा ब्राह्मणी ॥ भुञ्जानायाः श्वादिस्पर्शने विशेषः स्मृत्यन्तरे—

रजस्वला तु भुञ्जाना श्वान्त्यजादीन् स्पृशेद्यदि ।

गोमूत्रयावकाहारा षड्रात्रेणैव शुध्यतीति ॥

इदं गोमूत्रादिविधानं शुद्ध्युत्तरकाले द्रष्टव्यं ॥ उच्छिष्टद्विजादि स्पर्शने मार्कण्डेयः—

द्विजान् कथंचिदुच्छिष्टान् रजः स्त्री यदि संस्पृशेत् ।

अधोच्छिष्टे त्वहोरात्रमूर्ध्वोच्छिष्टे त्र्यहं क्षिपेदिति ॥

उच्छिष्टस्य ब्राह्मणस्य रजस्वलास्पर्शने प्रायश्चित्तं तदेव उच्छिष्टानाममत्या स्पर्शनेऽपि मत्योच्छिष्टायाः स्पर्शने तद्द्विगुणं॥ [७८७] तथा रजस्वलायां विशेषः पुलस्त्येन दर्शितः—

रजस्वला यदा स्पृष्टा शुना जंबुकवायसैः ।

पञ्चरात्रं निराहारा पञ्चगव्येन शुध्यतीति ॥

ऊर्ध्वं तु द्विगुणं नाभेर्वक्त्रे तु त्रिगुणं तथा ।

चतुर्गुणं स्मृतं मूर्ध्नि दष्टेऽन्यत्राप्लुतिर्भवेत् ॥

अन्यत्र रजस्वलाया इति ॥ अथ अशुचिना रजस्वलादिस्पृष्टे रजोदृष्टौ विशेषः स्मृत्यर्थसारे ॥ सपत्नीं स्पृष्ट्वा रजोदृष्टौ सद्यः स्नात्वा च शुध्येत् ॥ सपत्नीं सवर्णां अधिकवर्णां वा स्पृष्ट्वा रजोदृष्टौ एकरात्रं निराहारत्वं ॥ हीनवर्णां रजस्वलां स्पृष्ट्वा रजोदृष्टौ आशुद्धेरभुक्त्वा पञ्चगव्याशनं वा चाण्डालसूतिकाशवतत्परिचारकरजकादिश्वविड्वराहादिस्पर्शे रजोदृष्टौ आशुद्धेरभुक्त्वा पश्चात्त्रिरात्रादि प्रायश्चित्तं ॥ अन्यास्पृश्योपहतौ रजोदृष्ट्वा उपवासः ॥ ७८८ तथा जाताशौचे मृताशौचे वा मध्ये ऋतुदर्शने तु स्नात्वा भोजनं शुद्धावुपवासः ॥ आर्तवमध्ये जातमृताशौचे तु स्नात्वा भोजनं ॥ अथ प्रारब्धे व्रते रजोदृष्टौ सत्यव्रतः—

प्रारब्धदीर्घतपसां नारीणां यद्रजो भवेत् ।

न तत्रास्य व्रतस्य स्यादुपरोधः कदाचनेति ॥

स्मृत्यर्थसारे ॥ प्रारब्धव्रते रजोदृष्टौ व्रतलोपो नास्ति ॥ देवार्चनादिकं कारयेत् ॥ कृच्छ्रादिव्रतस्था हविर्भोजनादि कुर्यात् ॥

अन्ते कुर्याद्रजोदृष्टा पतिं चान्यं नियोजयेत् ।

इति कालादर्शात् अत्रविशेषः॥रजस्वला श्वादिदृष्टा पञ्चरात्रिं निराहारा पञ्चगव्येन शुध्येत् ॥ नाभेरूर्ध्वं वक्त्रे मस्तके च द्विगुणमिति स्मृत्यर्थसारे ॥ अथ रजस्वलागमने प्रायश्चित्तं ॥ यो रजस्वलांस्वांभार्यां गच्छति स त्रिरात्रिमुपोष्य अन्ते

घृतं प्राश्य शुध्येत् ॥ [७८५]तदाह मनुः—

त्रिरात्रान्तं घृतं प्राश्य गत्वोदक्यां विशुध्यति ।

उदक्या रजस्वला ॥ इदमशुद्धिपूर्वं सकृद्गमनविषयं ॥ तत्रैवाभ्यासे सप्तरात्रं शातातपेनोक्तं ॥ मतिपूर्वं सकृद्गत्वापि सप्तरात्रं अभ्यासेऽतिकृच्छ्रः ॥ तदाह संवर्तः—

रजस्वलां च यो गच्छेद्गर्भिणीं पतितां तथा ।
तस्य पापविशुध्यर्थमतिकृच्छ्रं विशोधनमिति ॥

अत्यन्तानवच्छिन्नाभ्यासे त्रैवार्षिकमिति स्मृत्यर्थसारात्॥ मत्या सकृद्गमने सप्तरात्रं ॥ तथा—

रोगेण यद्रजः स्त्रीणामत्यर्थं च प्रवर्तते ।
अशुद्धा नैव तेन स्याद्यतो वैकारिकं हि तत् ॥

इति स्मृत्यन्तरं ॥

## इति रजस्वलाविषयो निर्णयः ॥

कृतेऽचलद्विवेदेन ग्रन्थे निर्णयदीपके ।
रजस्वलाविशुध्यर्थं निर्णयोऽत्र निरूपितः ॥

---

## [७५०]अथ ग्रहण निर्णयः ॥

राहुणा चन्द्रस्य सूर्यस्य च ग्रसनं ग्रहणमिति ॥ राहुः पूर्णिमाप्रतिपदोः सन्धौ चन्द्रं ग्रसते ॥ दर्शप्रतिपदोः सूर्यं च ॥ तदाह वृद्धगार्ग्यः—

पूर्णिमाप्रतिपत्सन्धौ राहुः संपूर्णमण्डलः ।
ग्रसते चन्द्रमर्कं च दर्शप्रतिपदन्तरे ॥

यावद्घटिकात्मके ग्रहणे पर्वान्त्यकालः स्पर्शकालः ॥
प्रतिपदादिभागो मोक्षकालः सपुण्यः ॥ तदुक्तं ब्रह्मसिद्धान्ते—

यावान्कालः पर्वणोऽन्त्ये तावान्प्रतिपदादि यः ।
रवीन्दुग्रहणेऽनेहाः सुपुण्यो मिश्रणाद्भवेत् ॥

पर्वशब्देनात्रामावास्या पौर्णमासी चेति ॥ अनेहाः कालः ॥ सर्वस्य ग्रहणकालस्य पुण्यत्वमाहमत्स्यः—

नाड्यः षोडश पूर्वेण संक्रान्तेस्तु परेण च ।
राहोस्तु दर्शनं यावत्पुण्यकाल उदाहृत इति ॥

अथग्रहणात्पूर्वमभोजनकालाभिधानवचनेषु तावन्महाभारते—

अर्वाग्यामत्रयादिन्दोर्ग्रहणे भुक्तिमाचरेत् ।
चतुर्यामादधश्चैव राहुग्रस्ते दिवाकरे ॥

चन्द्रग्रहादधो यामत्रयान्तरा न भुञ्जीत सूर्यग्रहादधो यामचतुष्टयान्तरा न भुञ्जीतेत्यर्थः ॥ बालवृद्धातुरेषु विशेषः कालादर्शात्—चन्द्रग्रहादधो यामत्रये यामचतुष्टये ।

सूर्यग्रहे न भुञ्जीत बालादिः प्रहरद्वये ॥ इति ॥

७५१ वृद्धवसिष्ठोऽपि—सूर्यग्रहे तु नाश्नीयात्पूर्वं यामचतुष्टयम् ।
चन्द्रग्रहे तु यामांस्त्रीन्बालवृद्धातुरैर्विनेति ॥

बालवृद्धातुराः प्रहरान्तरात् भुञ्जीरन् ॥ इत्यस्मिन्नर्थे मत्स्यवचनमशनार्थं पञ्चधादिनविभागमाह ॥

मुहूर्तत्रितयं प्रातस्तावानेव तु सङ्गवः ।
मध्यान्हस्त्रिमुहूर्तः स्यादपराण्होऽपि तादृशः ॥
सायान्हस्त्रिमुहूर्तः स्यात्सर्वधर्मबहिष्कृत इति ॥

तत्रैव वचनं—सायान्हे ग्रहणं चेत्स्यादपराण्हे न भोजनम् ।

अपराण्हे न मध्यान्हे मध्यान्हे न तु सङ्गवे ॥
भुञ्जीत सङ्गवे चेत्स्यान्न पूर्वं भोजनक्रिया ।

एतद्बालवृद्धातुरविषयं ॥ दीपिकापि—

वृद्धातुरस्त्र्यर्भकाः प्राश्नीयुर्ग्रहयामतः प्रहरके इति ॥

अथ रात्रौ प्रथमप्रहरादुपरि ग्रहणं चेत्स्यात् मध्यान्हा-त्पूर्वं भुञ्जीत रात्रिपश्चिमप्रहरे चेद्ग्रहणं रात्रिप्रथमप्रहरादधो न भुञ्जीत ॥ ७५२ तदाह वासिष्ठः—

ग्रहणं तु भवेदिन्दोः प्रथमादधियामतः ।
भुञ्जीतावर्तनात्पूर्वं पश्चिमे प्रथमादधः ॥

आवर्तनं मध्यान्हः । यामः प्रहरः ॥ अत्र विशेषः ॥ चन्द्रस्य ग्रस्तोदये दिवैव ग्रहणमिति पूर्वमहनि भोजनं नाचरेत् ॥ तदुक्तं कालादर्शे—

ग्रस्तोदये विधोः पूर्वं नाहर्भोजनमाचरेत् ।
दृष्टे शशिनि भुञ्जीत यदि न स्यान्महानिशा ॥

अहरिति कालाध्वनोरिति द्वितीया ॥ यदा राहुणा ग्रस्तो रविरस्तमियात् तदा पूर्वं दिवा न भुञ्जीत ग्रस्तानन्तरं रात्रौ च तथा चन्द्रमा यदा ग्रस्तोऽस्तं गच्छेत् तदा ग्रस्ता-स्तानन्तरं दिवा न भुञ्जीत ॥ किंतु परतिथौ तयोरुदये सति स्नात्वा भुञ्जीतेत्यत्र कालादर्शीयं वचनं—

ग्रस्तावेवास्तमानौ तु रवीन्दू प्राप्नुतो यदि ।
तदा परे द्युरुदये स्नात्वाभ्यवहरेन्नरः ॥

नर इति सर्ववर्णोपलक्षणं ॥ मनुरपि—

अभुक्तयोरस्तंगतयोर्दृष्ट्वा स्नात्वा परेऽहनि ।

भुञ्जीतेति शेषः ॥ अमुमेवार्थं मार्कण्डेयोऽप्याचष्टे ॥

[७८३] चन्द्रस्य यदि वा भानोर्यस्मिन्नहनि भार्गव ।
ग्रहणं तु भवेत्तस्मिंस्तत्पूर्वं भोजनं नरः ।
नाचरेत्सग्रहे चैव तथैवास्तमुपागते ॥
यावत्तयोर्नोदयः स्यान्नाश्नीयात्तावदेव तु ।
मुक्तिं दृष्ट्वा तु भुञ्जीत स्नानं कृत्वा ततः परमिति ।

तथा गार्ग्यः—

सन्ध्याकाले यदा राहुर्ग्रसते शशिभास्करौ ।
तदहर्नैव भुञ्जीत रात्रावपि कदाचन ॥

शशिनि ग्रस्तास्तमिते अहनि न भुञ्जीत ॥ भास्करे ग्रस्तास्तमिते रात्रौ न भुञ्जीतेत्यर्थः ॥ कदाचनेति धारणपारणाव्रतस्थस्य पौर्णमास्यादितिथिनक्षत्रनिमित्तकाम्योपवासव्रतस्थस्य च निषेधः इति कालादर्शे व्याख्यातं ॥ साग्निकस्य तु पत्नीयजमानौ व्रात्यमश्नीयातां ॥ तथा न हवा अव्रतस्य देवा हविरश्नन्तीत्यादिश्रुतिभिः प्राप्तं ॥ श्रुतिस्मृत्योर्विरोधे श्रुतेः प्राबल्येऽपि ग्रहणभोजनेऽतीव निन्दादिदर्शनात्कथमिति ॥ [७८४] उत्तरं

सन्ध्यायां ग्रसते राहू रविं च शशिनं यदा ।
तदा दिवा न भोक्तव्यमातुरस्त्रीशिशून्विनेति ॥

स्मृतिवचनेन यथा आतुरादीनां भोजनमुक्तं तथा साग्निकैरपि श्रुतिबलात्स्वल्पं किंचिद्व्रतसिद्धिकृन्मात्रमशितव्यं युक्तं ॥ अथवा ग्रहणसमीपे व्रतकाल उपस्थिते भुजिकार्ये अपोऽश्नाति तेन व्रतसिद्धिर्जायते इति केचिदाहुरिति ॥ सूर्ये

ग्रस्तास्तगे ग्रहणात्पूर्वस्मिन्नहनि परस्यां रात्रौ चन्द्रग्रस्तास्तमिते परस्मिन्नहनि पूर्वरात्रौ च एवमहोरात्रं न भुञ्जीत ॥

तदुक्तं विष्णुधर्मे –

अहोरात्रां न भोक्तव्यं ग्रस्तावेवास्तगौ तु तौ ।

मुक्तिं दृष्ट्वा तु भोक्तव्यं स्नानं कृत्वा ततः परमिति॥

रवौ ग्रस्तास्तगे ग्रहणात्पूर्वं भोजनं वक्ष्यामः ॥ [७८५] ननु मेघाच्छादनवशाद्रवीन्दू राहुविमुक्तौ द्रष्टुं न पार्येते तदा भोजनं न स्यात् ॥ शृणु ॥ नात्र दृश्यश्चक्षुर्व्यापारपरत्वं किंतु दृष्ट्वा इत्येतद्विज्ञानोपलक्षणं ॥ तदाह वृद्धगौतमः–

चन्द्रसूर्यग्रहे नाद्यात्तस्मिन्नहनि पूर्वतः ।

राहोर्विमुक्तिं विज्ञाय स्नात्वा कुर्वीत भोजन मिति ॥

नन्वेवं ग्रस्तास्तमाने शास्त्रतो विमुक्त्यवगमात् विमुक्त्यनन्तरमेव भोजनं स्यात् ॥ मैवं अहोरात्रं न भोक्तव्यं तथा यावत्तयोर्नोदयःस्यादिति वचनद्वयादुदयानन्तरमेव भोजनं न विमुक्त्यनन्तरमिति ॥ रविग्रहणे विशेषः॥ रवौ ग्रस्तास्तमिते नोपवासः ॥

तदुक्तं स्मृत्यन्तरे–सायान्हे सङ्गवेऽश्नीयाच्छारदे सङ्गवादधः ।

मध्यान्हे परतोऽश्नीयान्नोपवासो रविग्रहे ॥

शारदोऽपराण्हः ॥ यदपराण्होऽप्यत्र शरदिति श्रुतेः ॥ दिनशेषे ग्रहणनिवृत्तौ तदन्तरं भुञ्जीत ॥ न तु पूर्वमिति उपवासनिषेधः पुत्रवद्गृहीविषयः ॥ तदाह जैमिनि·

आदित्येऽहनि संक्रान्तौ ग्रहणे चन्द्रसूर्ययोः ।

पारणं चोपवासं च न कुर्यात्पुत्रवान्गृही ॥

अथ शास्त्रावगतोऽपि रात्रौ सूर्यग्रहो दिवाचंद्रग्रहश्च तदा देशान्तरस्थितत्वाद्विफल इति तत्र स्नानादिकं न कार्यं॥ तदुक्तं षट्त्रिंशन्मते—

[७८६] सूर्यग्रहो यदा रात्रौ दिवा चन्द्रगहस्तथा।
तत्र स्नानं न कुर्वीत दद्याद्दानं न च क्वचिदिति॥

अत्र रात्रौ दिवेत्युपादानात् तद्विपरीते दिवा सूर्यग्रहे रात्रौ चन्द्रग्रहणे ज्योतिः शास्त्रान्निश्चयावगमे सति मेघाच्छादनादिवशात् अदृष्टेऽपि स्नानादिकं कार्यमिति गम्यते॥

यत्तु—चन्द्रे च यदि वा सूर्ये दृष्टे राहौ महाग्रहे।
अक्षय्यं कथितं पुण्यं तत्रार्के तु विशेषत इति॥

अस्मिन्मार्कण्डेयवचने दृष्ट इति चक्षुषा राहुदर्शने एव स्नानादि विधानं॥ ननु शास्त्रादितोऽधगते रिति कैश्चिन्निरूपितं तन्निरभ्रादिके नभसि दर्शनयोग्येऽपि अदर्शनविषयं॥ शास्त्रतः संदिग्धविषयं चेति भावः॥ तस्माद्यावत्काले चन्द्र सूर्योपरागः शास्त्रप्रतीतस्तावत्कालं पुण्यकाल इत्यर्थः॥

[७८७] अथ॥ ग्रहणकाले तु नाश्नीयात्स्नात्वाश्नीयात्तु मुक्तयोः।
स्नात्वा दृष्ट्वा परेन्ह्यद्याद्ग्रस्तास्तामितयोरिति॥

ग्रहणकालभोजने तु शातातप आह—

नवश्राद्धं ग्रामयाजकान्नं ग्रहणभोजनं।
नारीणां प्रथमे गर्भे भुक्त्वा चान्द्रायणं चरेत्॥

ग्रहणादन्यत्र निषिद्ध कालभोजने कात्यायनः—

चन्द्रसूर्यग्रहे भुक्त्वा प्राजापत्येन शुध्यति।
तस्मिन्नेव दिने भुक्त्वा त्रिरात्रेणैव शुध्यति॥

इति प्राजापत्यत्रिरात्रयोः ग्रहणसन्निकृष्टविप्रकृष्टकालाद्यवस्था ॥ पुत्रवद्गृहीव्यतिरिक्तस्य ग्रहणात्पूर्वमुपवासे गालवः—

यस्त्रिरात्रमुपोष्यैव ग्रहणे चन्द्रसूर्ययोः ।
स्नात्वा दत्वा च विधिवन्मोदते ब्रह्मणा सह ॥
एकरात्रमुपोष्यैव स्नात्वा दत्वा च शक्तितः ।
कञ्चुकादिव सर्पस्य निष्कृतिः पापकोशत इति ॥

ग्रहणे विशेषमाह व्यासः—

सूर्यवारे रवेर्ग्रासः सोमवारे विधोर्ग्रहः ।
चूडामणिरिति ख्यातस्तत्रानन्तफलं भवेत् ॥
वारेष्वन्येषु यत्पुण्यं ग्रहणे चन्द्रसूर्ययोः ।
तत्पुण्यं कोटिगुणितं ग्रहे चूडामणौ स्मृतम् ॥

७५८ अथान्यं विशेषमाह ॥ दर्शश्राद्धमाब्दिकं च सिद्धान्नेन प्राप्तं तत्र ग्रहणसंभवे भोक्तुर्द्विजाभावे गोभिलः—

दर्शे रविग्रहे पित्रोः प्रत्याब्दिक उपस्थिते ।
अन्नेनासंभवे हेम्ना कुर्यादामन वा सुतः ॥

द्विजसंभवे तु भोक्तुर्दोषो दातुरभ्युदय इति मिताक्षरायां ॥ दर्श इति पौर्णमास्युपलक्षक इति ॥

## इति ग्रहणे भोजननिर्णयः

---

## अथ कर्तव्यमुच्यते ॥

ग्रहणे आदौ पूर्वं स्नानं कुर्यात् ॥ तदुक्तं ब्रह्मवैवर्ते—

स्नानं स्यादुपरागादौ मध्ये होमं सुरार्चनम् ।

तथा वचनान्तरं—

ग्रस्यमाने भवेत्स्नानं ग्रस्ते होमो विधीयते ।
मुच्यमाने भवेद्दानं मुक्ते स्नानं विधीयते ॥

अस्नाने दोषमाह वृद्धवसिष्ठः—

ग्रहणे संक्रमे वापि स्नायाद्यदि न मानवः ।
सप्तजन्मनि कुष्ठी स्याद्दुःखभागी च जायते ॥

स्नाने स्पर्शकालः श्रेष्ठो मध्यकालोऽथ मध्यमः मोक्षस्त्वधमस्तदाह व्यासः—

७८५ त्रिदशाः स्पर्शसमये तृप्यन्ति पितरस्तथा ।
मनुष्या मध्यकाले तु मोक्षकाले च राक्षसाः ॥

सर्वस्य ग्रहणकालस्य पुण्यत्वेऽपि स्नानादौ स्पर्शकालः श्रेष्ठ इति भावः ॥ ग्रहणे गङ्गादिमहानदीषु स्नानं कुर्यात् ॥ तदाह वृद्धवसिष्ठः—

इन्दोर्लक्षगुणं प्रोक्तं रवेर्दशगुणं स्मृतम् ।
गङ्गातोये तु संप्राप्ते इन्दोःकोटी रवेर्दश ॥
गवां कोटि प्रदानेन सम्यग्दत्तेन यत्फलम् ।
गङ्गास्नाने तत्फलं स्याद्राहुग्रस्ते निशाकरे ॥
दिवाकरे पुनस्तद्वद्दशसंख्यमुदाहृतम् । इति ॥

कोटिः कोटिगुणं । दशसंख्यं दशकोटिगुणं ॥

तथा मत्स्यपुराणे—

गङ्गा कनखलं पुण्यं प्रयागं पुष्करं तथा ।
कुरुक्षेत्रं तथा पुण्यं राहुग्रस्ते दिवाकरे ॥

ब्रह्मपुराणे—तिस्रो नद्यो महापुण्या गङ्गा गोदा सरस्वती ।

गां हरांशांगतः प्राप्ता गङ्गा इति हि कीर्तिता ॥

तदसंभवे ॥ महानदीष्वप्यन्यासु तीर्थेष्वपि महोदधौ ।
तदसंभवे वाप्यादौ तदाह शङ्खः—

वापीकूपतडागेषु गिरिप्रस्रवणेऽपि वा ।
नद्यां नदीदेवखाते सरसीषूध्धृतांबुनि ॥
उष्णोदकेन वा स्नायाद्ग्रहणे चन्द्रसूर्ययोः ।

उष्णोदकमातुरविषयं ॥ तदाह व्यासः—

आदित्यकिरणैः पूतं पुनः पूतं च वन्हिना ।
अतो व्याध्यातुरः स्नायाद्ग्रहणेऽप्युष्णवारिणा ॥

ग्रहणे यत्र कुत्रापि स्नानं गङ्गास्नानसमं भवेत् ॥

८०० तदाह व्यासः—सर्वं गङ्गासमं तोयं सर्वे विष्णुसमा द्विजाः॥
सर्वं भूमिसमं दानं ग्रहणे चन्द्रसूर्ययोः ॥

स्नात्वा श्राद्धं कुर्यात् ॥ तदुक्तं लिङ्गपुराणे—

व्यतीपातक्षणो यावच्चन्द्रसूर्यग्रहे क्षणः ।
गजच्छाया तु सा प्रोक्ता पितृणां दत्तमक्षयं ॥

महाभारते—सर्वस्वेनापि कर्तव्यं श्राद्धं व राहुदर्शने ।
अकुर्वाणस्तु नास्तिक्यात्पङ्के गौरिव सीदति ॥

ऋष्यशृङ्गोऽपि— चन्द्रसूर्यग्रहे यस्तु श्राद्धं विधिवदाचरेत् ।
तेनैव सकला पृथ्वी दत्ता विप्रस्य वै कर इति ॥

यथाविधीति ग्रहणे हिरण्येन वा आमेन वा श्राद्धं कुर्यात् ॥

सूतके मृतके चैव न दोषो राहुदर्शने ।
तावदेव भवेच्छुद्धिर्यावन्मुक्तिं न चाप्नुयात् ॥

इति जन्ममरणनिमित्तसूतके सत्यपि ग्रहणे श्राद्धं दा-

नं च कुर्यादिति निरूपितं प्राक् सूतकेषु कर्माधिकारि निर्णयप्रकरणे॥ ग्रहणे सन्ध्याकाले रात्रौ च श्राद्धं कुर्यात्॥ तदाह विष्णुः—

सन्ध्यारात्रौ न कर्तव्यं श्राद्धं खलु विचक्षणैः।
द्वयोरपि च कर्तव्यं यदि स्याद्राहुदर्शनमिति॥

[८०१] देवलोऽपि—यथा स्नानं च दानं च सूर्यस्य ग्रहणे दिवा।
सोमस्यापि तथा रात्रौ स्नानं दानं विधीयत इति॥

सूर्यग्रहणे कुरुक्षेत्रे कृतं श्राद्धं दानं चानन्तवृद्धिमत्स्यात्॥ तदाह सुमतिं प्रति मार्कण्डेयः—

सूर्यग्रहणसंयोगे कुरुक्षेत्रे तु यो नरः।
स्नात्वा श्राद्धादिकं कुर्यात्तदानन्त्याय कल्पत इति॥

उक्त्वा पुनः प्राह—भ्रातः किमद्य यदि चेतसि चिन्तसीदं

सीदन्ति मर्त्यगहने स्वहिताय मर्त्याः।
पात्राय तत्तरणि पर्वणि सन्निहत्या
मभ्येत्य यच्छ कणिकामपि काञ्चनस्य॥

पात्रायेति विद्यातपोव्रतसंपन्नो विप्रः पात्रं॥ तदाह याज्ञवल्क्यः—

न विद्यया केवलया तपसा वापि पात्रता।
यत्र व्रतमिमे चोभे तद्धि पात्रं प्रकीर्तितम्॥

एवं विधाय ब्राह्मणाय सुवर्णस्य कणिकामपि देहीत्युक्त्वा पुनः स एवाह—

[८०२] यद्दीयते तरणि पर्वणि सन्निहत्यां
तीर्थे द्विजाय मनुजैर्विषये कुरूणां।

यावत्त्रयोदशदिनानि दिने दिनेत-
दानं त्रयोदशगुणं समुपैति वृध्द्या ॥

तथा ग्रहणे भूम्यादिकं दद्यात् ॥ तदुक्तं महाभारते—

अयने विषुवे चैव ग्रहणे चन्द्रसूर्ययोः ।
पात्रीभूताय विप्राय भूमिं दद्यात्सदक्षिणामिति ॥
भूमिर्गावः सुवर्णं वा धान्यं वा यद्यदीप्सितम् ।
तत्सर्वं ग्रहणे देयमात्मनः श्रेय इच्छता ॥

दानपात्रवशात्तारतम्यं दक्षेणोक्तं—

सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे ।
श्रोत्रिये शतसाहस्रं पात्रे त्वानन्त्यमश्नुते ॥

लक्षणानि चतुर्विंशतिमते—

ब्रह्मवीर्ये समुत्पन्नो मंत्रसंस्कारवर्जितः ।
ज्ञातिमात्रोपजीवी च योऽसावब्राह्मणः स्मृतः ॥

८०३ तथा अनधीतवेदो ब्राह्मणब्रुवः—

गर्भाधानादिसंस्कारैर्वेदोपनयनैर्युतः ।
नाध्यापयति नाधीते स भवेद्ब्राह्मणब्रुवः ॥ इति ॥

ऋग्यजुःसामाथर्वणशाखानामन्यतमशाखाध्यायी श्रोत्रियः ॥ एकशाखाध्यायी श्रोत्रिय इति बौधायनः ॥ गृहीतगायत्रीमात्रो वेदाध्ययनरहितो नामधारकः ॥ तदुक्तं—

गायत्रीसारमात्रा ये सन्ध्यामात्रमुपासकाः ।
अज्ञानाः कृषिकर्माणो ब्राह्मणा नामधारकाः ॥

पात्रासंभवे तु ॥

अश्रोत्रियः श्रोत्रियो वा अपात्रं पात्रमेव वा ।

विप्रब्रुवोऽपि वा विप्रो ग्रहणे दानमर्हतीति ॥
दाने भूम्यपेक्षया गोसुवर्णादेर्न्यूनत्वं ॥ लिङ्गपुराणे—

अग्नेरपत्यं प्रथमं धरित्री
गावः सुवर्णं चरमं च धान्यं ।
श्रैष्ठ्यं क्रमाद्दत्तवता त्विमानि
लोका हि दत्ता न हि संशयोऽत्रेति ॥

८०४ सर्वो वर्णो ग्रहणे सूतकी स्यात्तदुक्तं वृद्धवसिष्ठेन—

सर्वेषामेव वर्णानां सूतकं राहुदर्शने ।
सचैलं च भवेत्स्नानं शृतमन्नं विवर्जयेत् ॥

शृतं पक्वं । तत्रान्ने

ग्रहणादर्वाक् क्षिपेद्दर्भान् ततो भुक्तं न दुष्यतीति ।

ग्रहणे श्राद्धस्नानदानादिकर्तव्यतेति ॥ अथ मार्गादिषु मासेषु विशेषो देवीपुराणात्—

मार्गे तु ग्रहणं पुण्यं वेदिकायां महामुने ।
पौषे तु नर्मदा पुण्या माघे सन्निहती शुभा ॥
फाल्गुने वरणा पुण्या चैत्रे पुण्या सरस्वती ।
वैशाखे चन्द्रभागा च ज्येष्ठे पुण्या तु कौशिकी ।
आषाढे तापिका पुण्या सिन्धुः स्याच्छ्रावणे तथा ॥
भाद्रे च गल्लकी श्रेष्ठा आश्विने सरयू तथा ।
कार्तिके ग्रहण श्रेष्ठं गङ्गायामनसङ्गमे ॥

अथ नक्षत्रविशेषे शुभाशुभत्वमाह गार्ग्यः—

ज्येष्ठा ब्राह्मं तथा मैत्रं प्राग्वैश्वं वासवं तथा ।
वैष्णवं वैश्वदेवं च पुरुहूतस्य मण्डलम् ॥

मण्डलेऽस्मिन्समुत्पन्ने ग्रहणे जगतां शुभे ।
आनन्दः सर्वभूतानां विशेष इति गम्यते ॥

८०४ तथा गर्गः—

तिष्यमाजपदं चैव याम्यं भाग्यं च पैतृकम् ।
ऐन्द्राग्नमग्निदैवं च सप्तैतान्यानलो गणः ॥
आनले मण्डले दृष्टं ग्रहणं रविसोमयोः ।
राज्ञां भयं करं विद्यात् प्रजानां बहुदोषकृत् ॥
अहिर्बुध्न्यं तथा पौष्ण्यं मूलमाप्यं च शाङ्करं ।
वारुणं सर्पदैवत्यं वारुणं मण्डलं स्मृतम् ॥
एतस्मिन्नुपरागः स्यान्मण्डले सोमसूर्ययोः ।
दुर्भिक्षामयनाशस्तु प्रजानामिति निश्चयः ॥
नक्षत्राण्यर्यमादीनि चत्वारि च पुनर्वसू ।
सौम्यं चैवाश्विदैवत्यं वायव्यं मण्डलं स्मृतम् ॥
समरं सभयं चैव दुर्भिक्षं कुरुतेऽचिरात् ।
व्याधिः शस्त्रादिकोपःस्यान्मण्डलेऽस्मिन्नुपप्लव इति॥

एषु मण्डलेषु ग्रहणे सति राज्ञा शान्तिः कार्या ॥ तथा च कश्यपः—

आग्नेये कारयेच्छान्तिं शान्तिं कुर्यात्तु वारुणे ।
वायव्ये शान्तिकं कुर्यात् माहेन्द्रे न तु कारयेत् ॥

८०५ तथा यस्य जन्मराशौ जन्मनक्षत्रे ग्रहणं भवति तेन तदा शान्तिः कार्या ॥ तथा चोक्तं—

होरायां गृह्यते यस्य नक्षत्रे वा निशाकरः ।
प्राणसंदेहमाप्नोति स वा मरणमृच्छति ॥

होरा लग्नं ॥ तथा—

यस्यात्र जन्मनक्षत्रे ग्रस्येते शशिभास्करौ ।
तज्जातानां भवेत्पीडा ये नराः शान्तिवर्जिताः ॥

इति ग्रहणशान्तिकर्माणि मत्स्यपुराणात्—

पूजयेद्वस्त्रगोदानैर्ब्राह्मणानपि शक्तितः ।
होमं चैव प्रकुर्वीत तिलैर्व्याहृतिभिस्तथा ॥
दानं च शक्तितो दद्याद्यदीच्छेदात्मनो हितम् ।

सूर्यग्रहे सूर्यमंत्रैः सोमग्रहे सोममंत्रैर्जप इति ॥ तथा चन्द्ररविग्रहे सति माङ्गल्ये कर्माणि दिनानां नवकं वर्ज्यं ॥

८०७ यथाहुः—त्रयोदश्यादितो वर्ज्यं दिनानां नवकं ध्रुवम् ।
माङ्गल्येषु च सर्वेषु ग्रहणे चन्द्रसूर्ययोरिति ॥

प्रकारान्तरं स्मृतिवचनं—

द्वादश्यादितृतीयान्तो वेध इन्दुग्रहे स्मृतः ।
एकादश्यादिकः सौरे चतुर्थ्यन्तः प्रकीर्तित इति ॥

खण्डग्रहे त्र्यहं ॥ प्राक् पश्चाच्चदिनं ग्रहदिनं चेति ॥ निन्द्यं दिनं खण्डग्रहे तयोरिति वचनात् नित्यनैमित्तिकादौ ग्रहवेधो न भवति ॥ तथा च वचनं—

नित्येनैमित्तिके जाप्ये होमे यज्ञक्रियासु च ।
उपाकर्मणि चोत्सर्गे ग्रहवेधो न विद्यते ॥

## इति ग्रहणनिर्णयः

कृतेऽचलाद्दववेदेन ग्रन्थे निर्णयदीपके ।
इत्थं भाग्यवते तेन कृतो ग्रहणनिर्णयः ॥

## ८०८ अथ उपाकरणनिर्णयः ॥

वेदाध्ययनवन्तो द्विजाश्छन्दसां यातयामतादोषनिवृत्तये श्रावणमासस्य ओषध्यादिप्रादुर्भावे श्रावण्यादिविहितकालेषु उपाकर्म कुर्युः ॥ तदाह याज्ञवल्क्यः—

अध्यायानामुपाकर्म श्रावण्यां श्रवणेन वा ।
हस्तेनौषधिभावे वा पञ्चम्यां श्रावणस्य त्विति ॥

अध्यायानामिति शाखाभिप्रायं बहुवचनं ॥ अत्र सर्वशाखानामेषु कालेषु अविशेषेणोपाकर्मणि प्राप्ते विशेषमाह ॥ अथातोऽध्यायोपाकर्मौषधीनां प्रादुर्भावे श्रवणेन श्रावण्यां पौर्णमास्यां श्रावणस्य पञ्चमीं हस्तेन वा इति पारस्करः ॥

बह्वृचाः श्रवणर्क्षे तु हस्तर्क्षे सामवेदिनः ।

इति गोभिलस्मरणं ॥ तु शब्दात् बह्वृचा हस्तनक्षत्रेऽपि कुर्युः ॥ अथोपाकरणमौषधीनां प्रादुर्भावे हस्तेन श्रवणेन वेति शाङ्खायनगृह्योक्तत्वात् ॥ ८०९ सामगा हस्तनक्षत्रे एव कुर्युः ॥ ओषधीप्रादुर्भावः सर्वेषां तुल्यः ॥ श्रावणशुक्लपक्षे हस्तनक्षत्राद्युक्तकालेषूपाकर्म कार्यं ॥ तदुक्तं निगमे—

श्रावण्यां श्रावणी कर्म यथाविधि समाचरेत् ।
उपाकर्म तु कर्तव्यं कर्कटस्थे दिवाकरे ॥
हस्तेन शुक्लपञ्चम्यां श्रावण्यां श्रवणेन वेति ॥

उपाकर्मकालः पूर्वाण्हः ॥ तथा प्रचेताः ॥ भवेदुपाकृतिः पूर्णिमायां पूर्वाण्ह एवेति ॥ विष्णुपुराणे—

श्रावण्यां श्रवणे हस्ते पञ्चम्यां वेदवेदिनः ।
वेदोपाकरणं कुर्युः पूर्वाण्हे विधिवद्विजाः ॥

अपराण्हे उपाकर्मेति वक्ष्यमाणं सामगविषयं ॥ उत्स-र्गस्य कालान्तरमाह याज्ञवल्क्यः—

पौषमासस्य रोहिण्यामष्टकायामथापि वा ।
जलान्ते छन्दसां कुर्यादुत्सर्गं विधिवद्बहिरिति ॥

८१० तथा—माघशुक्लस्य वा प्राप्ते पूर्वाण्हे प्रथमेऽहनीति मनुः ॥

माघशुक्लप्रतिपद्युत्सर्गमवादि ॥ एतदुत्सर्जनं उपाकर्मदि-ने विकल्पेन कुर्यात् ॥ तदुक्तं खादिरगृह्ये—

एतदुत्सर्जनं कुर्यादुपाकर्मदिनेऽथवेति ।

तथा॥ एतदुपक्रियामुत्सर्जनक्रियां विधिदिने उपाकर्मदिने वि-कल्पेन कुर्यादित्याशयेन दीपिका—

कुर्याद्वैतदुपाक्रियां विधिदिने । इति ॥

प्रातरौत्सर्गिकीं क्रियां इति गोभिलवचनादपि उत्सर्गस्य कालः पूर्वाण्हः॥ अथ निर्णयः ॥ हस्तश्रवणपौर्णमासीनां दि-नद्वयेऽप्युक्तकाल व्यापित्वे परविद्धेषु कुर्यात् ॥

तथा चोक्तं निगमे—

तपो हन्त्युत्तराषाढा उपाकर्मणि वैष्णवे ।
धनिष्ठामिश्रिते कार्यमुपाकरणसंज्ञितमिति ॥

८११ व्यासोऽपि—

श्रवणे न तु यत्कर्म उत्तराषाढसंयुतम् ।
संवत्सरकृताध्यायस्तत्क्षणादेव नश्यति ॥
धनिष्ठासंयुतं कुर्यात् श्रावणं कर्म यद्भवेत् ।
तत्कर्म सफलं विद्यादुपाकरणसंज्ञितमिति ॥

तथा हस्तस्य द्वैधे चित्रायुक्ते कुर्यात् ॥ तदुक्तं परिशिष्टे—

धनिष्ठा प्रतिपद्युक्तं त्वाष्ट्रर्क्षेण समन्वितम् ।

श्रावणं कर्म कुर्वीरन् ऋग्यजुः सामपाठका इति ।

त्वाष्ट्रर्क्षेण समन्वितं चित्रासंयुक्तं हस्तमित्यर्थः ॥ धनिष्ठा-युक्तं श्रवणं यद्यपि प्रतिपद्युक्तं पर्वेत्युक्तं तथापि पौर्णमासी दिनद्वये तं कालं व्याप्नोति तैत्तिरीयाणां परा इतरेषां पूर्वेति ॥ तदाह गोभिलः—

पर्वण्यौ दयिके कुर्युः श्रावणं तैत्तिरीयकाः ।

बह्वृचाः श्रवणे चैव ग्रहसंक्रान्तिवर्जित इति ॥

अत्र तैत्तिरीयकपदमन्येषामपि यजुः शाखिनामुपलक्षक-मिति कैश्चिदुक्तं तदयुक्तं ॥ [११२] यतो दीपिकाकारेण काल-निर्णयकाराभिप्रायं बुध्वैवाभाणि ॥ द्यहगा तु कर्मसमयं व्याप्नोति साचेन्न वा कार्या तैत्तिरशाखिभिः परदिने पूर्वेत-रैर्याजुषैः॥ सा पूर्णिमा ॥इतरैर्याजुषैर्यजुर्वेदिभिः पूर्वा कार्येति भावः ॥ एतेन चतुर्दशीयुक्तस्य पर्वणो निषेधाऽभिधायकं निर्णयामृतोदाहृतं कालिकापुराणवचनमपि तैत्तिरीयकशा-खाविषयमिति सूचितं ॥ अथवा भवतु वा कालिकापुराणव-चनं सर्वयजुःशाखापरं विहितं प्रतिषिद्धं च विकल्पितं भ-वतीति न्यायाद्विकल्पेन तैत्तिरीयव्यतिरिक्तयजुःशाखिनां चतुर्दशीवेधेऽपि प्राप्तमुपाकरणं तथापि श्रवणनक्षत्रविहित-मुपाकर्म कुर्वतां न तु चतुर्दशीवेधशङ्कापीति॥पर्वणो वेधाभि-धानात् ॥ अथ हस्तश्रवणपर्वसु ग्रहणसंक्रान्ति युतेषु तदुपाक-र्म न कुर्युः ॥ [११३] तथा च स्मृतिः—

उपाकर्म न कुर्वीरन् क्रमात्सामर्ग्यजुर्विदः ।

ग्रहसंक्रान्तियुक्तेषु हस्तश्रवणपर्वसु ॥

अथ चेद्दोषसंयुक्ते पर्वणि स्यादुपक्रिया ।

दुःखशोकामयग्रस्ता राष्ट्रे तस्मिन्द्विजातय इति ॥

उपक्रिया उपाकर्म । पर्वणीति हस्तश्रवणयोरप्युपलक्षणं ॥ दोषयुक्ते काले न कुर्युः कालान्तरे कुर्युरितिभावः ॥ अथ शाखाभेदेनोक्तस्योपाकर्मणः काले ग्रहणसंक्रान्ती भवेयातां तदा कालान्तरमाह—

यदि स्याच्छ्रावणं पर्व ग्रहसंक्रान्तिदूषितम् ।

स्यादुपाकरणं शुक्ल पञ्चम्यां श्रवणस्य त्विति ॥

संक्रान्तिर्ग्रहणं वापि यदि पर्वणि जायते ।

तन्मासे हस्तयुक्तायां पञ्चम्यां च तदिष्यते ॥

एतच्च यजुःशाखिषु वाजसनेयाभिप्रायं ॥ यत उक्तं स्मृतिमहार्णवे—

संक्रान्तिर्ग्रहणं वापि पौर्णमास्यां यदा भवेत् ।

उपाकृतिस्तु पञ्चम्यां कार्या वाजसनेयिभिः ॥ इति ॥

अत्र बह्वृचोपलक्षणार्थस्तुशब्दः ॥ श्रावणे शुक्लपञ्चम्यां बह्वृचा अपि कुर्युः ॥ [१४] तथा चोक्तं दीपिकायां—

नभो मासः सितापञ्चमी॥ ग्राह्या वाजसनेयिबह्वृचमुखै

र्हस्तान्विता केवला वान्या हस्तयुता तिथिरिति ॥

हस्तेन युक्तेऽन्यस्मिन्नहनि चेति भावः ॥ अत्र केचिदाहुः—

हस्तेनौषधिभावे वा पञ्चम्यां श्रावणस्य त्विति ॥

सर्वशाखासामान्येन प्रवृत्तयाज्ञवल्क्यवचनात् सर्वेषां श्रावणशुक्लपञ्चम्यामेवेति न एवं चेत् भाद्रपदे विधायका-

नि ऋषिवाक्यान्यनर्थकानि स्युः ॥ किंच श्रावणपञ्चमी तैत्तिरीयाणां निषिद्धेति ॥ तदुक्तं—

श्रावणे शुक्लपञ्चम्यां न कुर्युस्तैत्तिरीयकाः ।

श्रावण्यां दुष्टायां तैत्तिरीयकैः प्रौष्ठपद्यामुपाकर्म कार्यमिति कालनिर्णयकृदुक्तिरस्ति ॥ अतः श्रावणोक्तकाले ग्रहसंक्रान्तिदूषिते तत्र कारणासंभवे वा सर्वे भाद्रपदे कुर्युः ॥

(१५ तदुक्तं बह्वृचपरिशिष्टे—

अवृष्ट्यौषधयस्तस्मिन्काले न तु भवन्ति चेत् ।

तदा भाद्रपदे मासि श्रावणे न तदिष्यते ॥

अत्रौषध्यभावः संक्रान्त्यादिदोषाणामुपलक्षकः ॥ अथातः स्वाध्यायोपाकर्म श्रावण्यां प्रौष्ठपद्यां वेति वसिष्ठः ॥ तथा च कालनिर्णयकारैरुपसंहृतं ॥ तस्माद्ग्रहणसंक्रान्तिदूषितायां श्रावण्यां प्रौष्ठपद्यामुपाकर्म कार्यमिति ॥ मनुरपि—

श्रावण्यां प्रौष्ठपद्यां वाप्युपाकृत्य यथाविधि ।

युक्तश्छन्दांस्यधीयीत विप्रो मासार्धपञ्चमानिति ॥

अर्धः पञ्चमो मासो येषां ते अर्धपञ्चमाः तान् उपाकर्मप्रभृति सार्धांश्चतुरो मासान् स्वाध्यायदिनेष्वधीयीतेत्यर्थः ॥ अपिशब्दात् भाद्रपदसंबन्धिहस्तश्रवणपञ्चमीनामुपसंग्रहः ॥ एषु कालेषु कुर्यात् ॥

(१६ तथा चोक्तं—

निमित्ताच्छ्रावणे मासि न कृता चेदुपाकृतिः ।

स्वशाखाविहिते काले भाद्रे कुर्युरुपाकृतिम् ॥

उपाकृतिमुपाकर्म । भाद्रे भाद्रपदे । अतः स्वशाखाविहिते

काले करणासंभवे श्रावणभाद्रपदयोः कस्मिश्चिद्दिने ग्रहण सङ्क्रान्तिवर्जिते अन्यशाखोक्तेऽपि काले कार्यं॥ पारक्यमविरोधि यत् इति न्यायात् कर्मणो न लोपः कार्यः ॥ इति सामवेदिनामुपाकर्म हस्तनक्षत्रे भवतीत्युक्तं प्राक् ॥

अत्र विशेषमाह–अध्यायानां भाद्रपदे मिलिताः श्रावणे तथा।

कुर्युरारंभं छन्दोगा हस्ते पुष्ये विसर्जनम् ॥

छन्दोगाः सामवेदिनः । हस्तनक्षत्रे अध्यायानामारंभं कुर्युः ॥ ततः पूर्वं पुष्यनक्षत्रे विसर्जनं कुर्युः श्रावणभाद्रपदयोः प्रकृतत्वात् ॥

[८१७]तदाह गोभिलः–

छन्दोगा मिलिताः कुर्युः प्रातरौत्सर्गिकीं क्रियां ।

अपराण्हेऽप्युपाकर्म पुष्यहस्तर्क्षयोर्द्विजाः ॥

हस्तर्क्षे उपाकर्म पुष्यर्क्षे उत्सर्जनं कुर्युः॥ तथा च परिशिष्टे–

मासे प्रौष्ठपदे हस्तात्पुष्यः पूर्वो भवेद्यदा ।

तत्तदा श्रावणे कुर्यादुत्सर्गं छन्दसां बहिरिति ॥

प्रौष्ठपदीं प्राप्य हस्तेनोपाकरणमिति गोभिलः–

उपाकर्मापराण्हे स्यादुत्सर्गः प्रातरेव तु ।

तदाह गोभिलः–अध्यायानामुपाकर्म कुर्यात्कालेऽपराण्हिके ।

पूर्वाण्हे तु विसर्गः स्यादिति वेदविदो विदुः ॥

कालवृद्धावपि तेषां छन्दोगानां सिंहे रवावेवोत्सर्जनं कृत्वोपाकर्म हस्ते स्यात् ॥ तदाह गार्ग्यः–

सिंहे रवौ च पुष्यर्क्षे पूर्वाण्हे विचरेद्बहिः ।

छन्दोगा मिलिताः कुर्युरुत्सर्गं स्वस्वछन्दसां ॥

शुक्लपक्षे तु हस्तेन उपाकर्मापराण्हिकमिति ।

अत्र कालवृद्धौ नोत्कर्ष इति ॥ अतः ॥

[८१८] दशाहरासु नोत्कर्षश्चतुर्ष्वपि युगादिषु ।

उपाकर्म महाषष्ठ्यामेतदिष्टं वृषादित इति ॥

इदं ऋष्यशृङ्गवचनं उपाकर्मानुत्कर्षविधायकं छन्दोगविषयं ॥ तेषां कालवृद्धावपि गार्ग्यीयवाक्येन सिंहार्के पञ्चोत्सर्जनविधानादिति भावः ॥ छन्दोगव्यतिरिक्तविषये तु उत्कर्षः स्यात् ॥ तदाह कात्यायनः—

उत्कर्षः कालवृद्धौ स्यादुपाकर्मादिकर्मणि ।

अभिषेकादिवृद्धीनां न तूत्कर्षो युगादिषु ॥

इदं युगादिषु अनुत्कर्षाभिधानं नक्षत्रवारादिभिः संपादितालभ्ययोगविषयं ॥ तत्र अलभ्ययोगोक्तं व्रतादि कुर्यात्॥ श्राद्धमप्येवमेव भवेत् ॥

मन्वादौ च युगादौ च तन्मासोरुभयोरपि ॥

इति वचनात् ॥ यत्तु श्रावण्यां पौर्णमास्यामाषाढ्यां वोपाकृत्य छन्दांस्यधीयीतेति बौधायनवचनं [८१९] तच्छ्रावण्यां प्रोष्ठपद्यां चन्द्रग्रहादिदुष्टायां सत्यां बौधायनशाखाध्यायिभिराषाढ्यां कर्तव्यमित्येवंपरं ॥ कैश्चिदुक्तं शाखाधिकरणन्यायेन यजुः शाखिनामाषाढ्यां विधानमित्यलं ॥ अत्र विशेषः ॥ सूर्यग्रहणे दिनचतुष्टयं पूर्वं पश्चाच्च एवं नवदिनानि वेधः ॥ त्र्यहं खण्डग्रहे वेध इति निरूपितं ग्रहणनिर्णये ॥ तथा सति चतुर्दश्यां श्रवणर्क्षे ग्रहणवेधदूषितत्वाद्दृग्भिरुपाकर्म न कार्यमिति चेन्न उपाकर्मणि वेधदोषो न भवति ॥ तदुक्तं—

नित्ये नैमित्तिके जाप्ये होमयज्ञक्रियासु च ।
उपाकर्मणि चोत्सर्गे ग्रहवेधो न विद्यते ॥

इत्युपाकर्म ॥ [२०]अथात्र कर्तव्यं ॥

उपाकर्मणि चोत्सर्गे पूज्या दर्भमहर्षयः ।

दर्भकृता महर्षयः पूज्याः ॥ तदाह कार्ष्णाजिनिः—

उपाकर्मणि चोत्सर्गे यथाकालं समेत्य च ।
ऋषीन्दर्भमयान् कृत्वा पूजयेत्तर्पयेत्तत इति ॥

बौधायनोऽपि—

गौतमादीन् सप्त कृत्वा ऋषीन् दर्भमयान्पुनः ।
पूजयित्वा यथाशक्ति तर्पयेद्वंशमुद्धरन् ॥

अत्र गौतमादीनिति स्वशाखोक्तऋषीणामुपलक्षणं ॥

भविष्योत्तरे—संप्राप्ते श्रावणस्यान्ते पूर्णमास्यां दिनोदये ।
स्नानं कुर्वीतमतिमान् श्रुतिस्मृतिविधानतः ॥

## इत्युपाकर्मनिर्णयः ॥

---

अथ रक्षाबन्धननिर्णयः श्रावण्याः पौर्णमास्या निर्णये निरुपितः ॥

---

## [२१]अथोत्सर्जनकालः ॥

पौषमासस्य रोहिण्यामष्टकायामथापि वा ।
जलान्ते छन्दसां कुर्युरुत्सर्गं विधिवद्बहिरिति ॥

याज्ञवल्क्यः प्रकारान्तरं—

पुष्ये तु छन्दसां कुर्याद्बहिरुत्सर्जनं द्विजः ।
माघशुक्लस्य वा प्राप्ते पूर्वाण्हे प्रथमेऽहनीति मनुः ॥
माघशुक्लप्रतिपद्यपराजितायां दिशि बह्वौषधिके देशे इति शाङ्खायनः ॥ अत्रोपाकर्मकालभेदादुत्सर्जनस्य कालभेदाः युक्तश्छन्दांस्यधीयीत विप्रो मासार्धपञ्चमान् ।
इत्यपेक्षया इति ॥ अथवा उपाकर्मदिने एवोत्सर्गं कृत्वा उपाकर्म कार्यमित्युक्तं प्राक् ॥ कात्यायनः—
प्रत्यब्दं यदुपाकर्म सोत्सर्गं विधिवद्द्विजैः ।
क्रियते छन्दसां तेन पुनराप्यायनं भवेत् ॥

इत्युपाकर्मोत्सर्जनानिर्णयः ॥

---

## ॥ अथ चातुर्मास्यकालः ॥

[८२२] महाभारतात्—
आषाढे सितपक्षे तु एकादश्यामुपोषितः ।
चातुर्मास्यव्रतं कुर्यात् यत्किंचिन्नियतो नरः ॥ इति ॥
यत्किंचिदिति एकभक्तायाचितपर्णभोजनकिंचिद्भक्ष्यद्रव्यवर्जनादिना व्रतप्रारंभं मंत्रेण कुर्यात् ॥
मंत्रमाह सनत्कुमारः—
इदं व्रतं मया देव गृहीतं पुरतस्तव ।
निर्विघ्नं सिद्धिमायातु प्रसन्ने त्वयि केशव ॥
गृहीतेऽस्मिन्व्रते देव यद्यपूर्णो म्रियाम्यहम् ।
तन्मे भवतु संपूर्णं त्वत्प्रसादाज्जनार्दनेति ॥

तथारंभकालविशेषमाह सनत्कुमारः—

एकादश्यां तु गृह्णीयात्संक्रान्तौ कर्कटेऽपि वा ।
आषाढ्यां वा नरो भक्त्या चातुर्मास्योदितं व्रतम् ॥

एषु कालेषु आरंभासंभवे तुलार्के कार्तिके कुर्यात् ॥ [२३]

तदुक्तं महाभारते—

वार्षिकांश्चतुरो मासान् व्रतं किंचित्समाचरेत् ।
असंभवे तुलार्केऽपि कर्तव्यं तत्प्रयत्नतः ॥
वार्षिकांश्चतुरो मासान् वाहयेत्केनचिन्नरः ।
व्रतेन नोचेदाप्नोति कल्मषं वत्सरोद्भवम् ॥

वाराहपुराणे—चातुर्मास्यव्रतं कुर्यान्नरः किंचिन्महीपते ।
नान्यथा रवाब्दिकं पापं विनिहन्त्यप्रयत्नतः ॥ इति॥

तथा—चतुर्धा गृह्य वै चीर्णं चातुर्मास्यव्रतं नरः ।
कार्तिके शुक्लपक्षे तु द्वादश्यां तत्समापयेत् ॥

मंत्रश्च—इदं व्रतं मया देव कृतं प्रीत्या तव प्रभो ।
न्यूनं संपूर्णतां यातु त्वत्प्रसादाज्जनार्दनेति ॥

चतुर्धेति एषु चतुर्षु कालेषु उपक्रान्तं तद्व्रतं सुवर्णनिर्मित-वर्जनद्रव्यगोप्रभृतिदानेन मंत्रवत्समापयेत् ॥ तथा गुरौ शुक्रे चास्तगे वापि बाले वृद्धे च खण्डतिथावपि चातुर्मास्यव्रत-प्रारंभं समापनं च कुर्यात् ॥ [२४] तदाह वृद्धगार्ग्यः—

न शैशवं न मौढ्यं च शुक्रगुर्वोर्न वार्धके ।
खण्डं न चिन्तयेच्चातुर्मास्यव्रतविधौ नरः ॥

ननु अग्न्याधेयं प्रतिष्ठां चेति मार्कण्डेयेन व्रतनिषेधात् कथं चातुर्मास्यव्रतारंभः ॥ उत्तरं विशेषवचनबलात् ॥ सा-

मान्यवचनानां बलमितरव्रतविषयमिति ज्ञेयं ॥ विशेषो मत्स्यपुराणे—

शेते विष्णुः सदाषाढे भाद्रे च परिवर्तते ।
कार्तिके च प्रबुध्येत शुक्लपक्षे हरेर्दिने इति ॥

इति चातुर्मास्यनिर्णयः ॥

---

## अथ नदीनां रजोदोषनिर्णयः ॥

कर्कटसंक्रमान्मासद्वये सर्वा एव नद्यो रजस्वलाःस्युः ॥ अतस्तासु स्नानतर्पणादिकमप्रशस्तत्वान्नकार्यं ॥ [८२५] तदाह मरीचिः—

कर्कटे सरितः सर्वा भवन्तीह रजस्वलाः ।
अप्रशस्तं ततः स्नानं वर्षादौ नववारिणीति ॥

ततस्तासु मार्कण्डेयोऽपि—

नभो नभस्ययोर्मध्ये सर्वा नद्यो रजस्वलाः ।
तासु स्नानं न कुर्वीत देवर्षिपितृतर्पणमिति ॥

योगी याज्ञवल्क्यः—

रजोदुष्टेंभसि स्नानं वर्ज्यं नद्यादिषु द्विजैः
कदर्थितं रजस्तेषां संध्योपास्तिश्च तर्पणं ॥

कदर्थितं कुत्सितं । गार्ग्यः—

वर्षादौ सरितः सर्वा भवन्तीह रजस्वलाः ।
तासु स्नानं न कुर्वीत वर्जयित्वा तु गौतमीम् ॥

गौतमीति समुद्रगामिनद्युपलक्षणं ॥ अतस्तासु रजोदोषो नास्ति ॥ तदाह व्याघ्रपादः—

सिंहकर्कटयोर्मध्ये सर्वा एव रजस्वलाः ।

तासु स्नानं न कुर्वीत वर्जयित्वा समुद्रगाम् ॥

समुद्रगाव्यतिरिक्तास्वपि नदीषु सर्वासु वर्षास्वविशेषेण रजः प्राप्तौ नदीविशेषेण कालविशेषाभिधानमुच्यते ॥ (२) तावत्स्मृत्यर्थसारे—

शुष्यन्ति याः कुसरितो ग्रीष्मकाले नवोदकैः ।

पूर्यन्ते चैव वर्षासु दशाहं ता रजस्वलाः ॥

तथा ॥ एकयोजनगादिषड्योजनगाः ताः सरितः कुल्याः । ततो द्वादशयोजनगाः ताः अल्पनद्यः । तदधिकयोजनगाः ताः नद्य इति ॥

कुल्याल्पनद्यो नद्यश्च सप्ताहं ता रजस्वलाः ।

पक्षं मासं चेत्यन्ये आहुः ॥

महानदी समाख्याता याश्रिता च महानदीमिति ॥

महानदीषु विशेषो महाभारते—

महानद्यो वेदिका च कावेरी वेणिका तथा ।

रजस्वलाः प्रदुष्टाः स्युः कर्कटादौ त्र्यहं नृप इति ॥

महानद्यस्त्र्यहं त्रीणि दिनानि रजस्वलाः स्युः ॥ तथा च भविष्यत्पुराणे—

आदौ कर्कटके देवि महानद्यो रजस्वलाः ।

त्रिदिनं तु चतुर्थेऽन्हि शुद्धाः स्युर्जान्हवी यथेति ॥

जान्हवी गङ्गा । ननु चतुर्थेऽन्हि शुद्धाःस्युर्यथा जान्हवीति ॥ अस्माद्वचनात् गङ्गाया रजो दोषः प्रतीयते॥ मैवं ॥ शुद्धिमात्रे दृष्टान्तोऽयं न तु रजोदोषेऽपि ॥ (२७) अत्र सर्वमहानदीषु

प्रसक्तावपि गङ्गादिमहानदीषु रजोदोषो न भवति ॥

तदाह निगमः—गङ्गा धर्मप्रवीणा च यमुना च सरस्वती ।
अन्तर्हितरजोदोषाः सौरभेया इवामलाः ॥

मार्कण्डेयोऽपि—कालिन्दी गौतमी गङ्गा वेणिका च सरस्वती।
सामर्थ्यादाभिजात्याच्च रजो नाभिभवत्यमूः ॥

आभिजात्यं देवसंभूतत्वं ॥ मरीचिः—
आदित्यदुहिता गङ्गा प्लक्षजा च सरस्वती ।
रजसा नाभिभूयन्ते वेणी च नदसंज्ञिता ॥

आदित्यदुहिता यमुना । प्लक्षजा गौतमी । नदसंज्ञिता इति नदाः पुमांस इति रजोदोषो नास्तीत्यर्थः ॥ एवं प्रस्रवणादिषु नदीशब्दवाच्येष्वपि स्वल्पत्वाद्रजोदोषो न भवति॥
८२८ अत एव स्मृत्यर्थसारे क्षुद्रनद्यः सर्वा न रजस्वला इति ॥

कालादर्शेऽपि—
आसिंहं कर्कटान्नद्यः सर्वा एव रजस्वलाः ।
त्रिदिनं स्युर्महानद्यो गोदां वेणीं सरस्वतीम् ॥
भागीरथीं च कालिन्दीं नदान् शोणादिकान्विना ।

कात्यायनः—जान्हव्यादित्यसंभूता प्लक्षजा च सरस्वती ।
रजसा नैव दुष्यन्ति नदाः कृष्णा च वेणिकेति ॥

ब्रह्मपुराणे—गोदावरी भीमरथी तुङ्गभद्रा च वेणिका ।
तापी पयोष्णी विन्ध्यस्य दक्षिणे तु प्रकीर्तिताः
भागीरथी नर्मदा च यमुना च सरस्वती ।
विशोका च वितस्ता च विन्ध्यस्योत्तरतः स्थिताः ॥
द्वादशैता महानद्यो देवर्षिक्षेत्रसंभवाः ।

यात्रास्नानादियोगेन पापिनः पावयन्ति ताः इति ॥

स्मृत्यर्थसारे तु विशेषः॥ [२५]स्मृतिपुराणादिषु तु गङ्गा यमुना सरस्वतीशब्दोऽस्ति ॥ तत्रापि रजोदोषो नास्तीत्याहु अतीरनिवासिनामपि ॥ तीरनिवासिनां तु रजोदुष्टेऽपि न निषेधः ॥ व्याघ्रपादः—

अभावे कूपवापीनामनपायिपयोभृताम् ।
रजोदुष्टेऽपि पयसि ग्रामभोगो न दुष्यति ॥ इति ॥

रजोदुष्टमपि तोयं पुण्यनदीसङ्गतमदुष्टं भवति ॥
तदुक्तं मत्स्यपुराणे—

पुण्यामसा समायोगात् दुष्टमप्यंबुपावनमिति ।

महाभारते—अपवित्रमपि प्राप्य गङ्गां याति पवित्रतामिति॥
कालादर्शे—रजोदुष्टं नदीतोयं गौतम्याद्यंबुसङ्गतम् ।

न दूषयति वार्यन्यत् स्वमदुष्टं हि सङ्गतम् ॥

अन्यनदीसङ्गतं स्वमदुष्टं भवति ॥ नान्यनदीवारि दूषयतीति भावः ॥ रजसा दुष्टे नद्यादिवारिणि स्नानं संध्योपासनं देवर्षिपितृतर्पणं च न कुर्यात् ॥ [३०]तदुक्तं—

तासु स्नानं न कुर्वीत देवर्षिपितृतर्पणमिति ॥

नदीरजोदोषप्रसङ्गात् तडागादिषूच्यते ॥ वर्षाकाले नवोदकं त्रिदिनमशुचि ॥ अकाले दशाहमशुचि ॥
तथा स्मृतिसङ्ग्रहे—

काले नवोदकं शुद्धं न पिबेच्च त्र्यहं तु तत् ।
अकाले तु दशाहं च पीत्वा नाद्यादहर्निशम् ॥

तथा कालादर्शे—तडागादिस्थितं तोयं प्रत्यग्रमशुचि त्र्यहम् ।

काले त्वकाले दशाहममिश्रं पूर्ववारिणा ॥ इति ॥
समेन महता वापि पूर्ववारिणा मिश्रं नवोदकं शुद्धं ॥
तदुक्तं भविष्यत्पुराणे—

महदंबु समं वापि यदि तिष्ठेत्पुरातनम् ।
नवांबुमिश्रितं तेन न दुष्टमिति सूरयः ॥ इति ॥

रजोदुष्टे वारिणि संध्योपासनं देवर्षिपितृतर्पणं च न कार्यमिति शेषः ॥ अत्र विशेषः व्याघ्रपादः—

उपाकर्मणि चोत्सर्गे प्रेतस्नाने तथैव च ।
चन्द्रसूर्यग्रहे चैव रजोदोषो न विद्यते ॥

तथा—आजीवने वाप्यगतौ रजोदोषो न विद्यते ॥

आजीवनं ग्रामोपभोगः । अगतौ गत्यन्तराभावे आजीवने च रजोदोषो नास्ति ॥

॥ इति नदीनां रजोदोषनिर्णयः ॥

---

## [८३] अथ अगस्त्यर्घविधिः ॥

मत्स्यपुराणात्—

अगस्त्यः सभार्यो विप्रैः संवृतो मलयाचलस्यैकदेशे तपस्तेपे समुद्रं च पीतवान् ततः संतुष्टैः शङ्करब्रह्मादिभिः वरं वृणीष्वेत्युक्तोऽगस्त्य उवाच—

यावद्ब्रह्मसहस्राणां पञ्चविंशतिकोटयः ।
वैमानिको भविष्यामि दक्षिणापथवर्त्मनि ॥
मद्विमानोदये कुर्याद्यः कश्चित्पूजनं मम ।

स सप्तलोकाधिपतिः पर्यायेण भविष्यति ॥

एवमस्त्विति तेऽप्युक्त्वा जग्मुर्देवा यथागतम् ।
संपूज्यार्घ्यं प्रदातव्यमगस्त्याय सदा बुधैः ॥
उदयात्सप्तरात्रोर्ध्वं कन्यासंक्रान्तितः पुरा ।
अगस्त्यार्घः प्रदातव्यः पूजां कृत्वा सदा बुधैः ॥

पूजाविधिस्तु ॥ प्रत्यूषसमये विद्वान् कुर्यादस्योदये निशि ।
स्नानं शुक्लतिलैः कुर्याच्छुक्लमाल्यांबरो गृही ॥
स्थापयेदव्रणं कुंभं माल्यवस्त्रविभूषितम् ।
पञ्चरत्नसमायुक्तं घृतपात्रसमन्वितम् ॥
नाना भक्ष्यफलैर्युक्तं चूतपल्लवसंयुतम् ।
अङ्गुष्टमात्रं पुरुषं तथैव सौवर्णमूर्त्यायतबाहुदण्डम् ।
चतुर्भुजं कुंभमुखे निधाय धान्यानि सप्ताङ्कुरसंयुतानि ॥
कृत्वा प्रत्यूषसमये घटं नीत्वा जलाशये ।
आगत्यार्घः प्रदातव्यो रात्रौ संपूज्य भक्तितः ॥
सकांस्यपात्राक्षतशुक्लयुक्तं मंत्रेण दद्याद्विजपुङ्गवाय ।
उत्क्षिप्य लंबोदरदीर्घबाहुमनन्यचेता यमदिङ्मुखः सन् ॥

[८३१] अर्घमंत्रः—काशपुष्पप्रतीकाश वन्हिमारुतसंभव ।
मित्रावरुणयोः पुत्र कुंभयोने नमोऽस्तु ते ॥
वातापी भक्षितो येन समुद्रः शोषितः पुरा ।
लोपामुद्रापतिः श्रीमान् योऽसौ तस्मै नमो नमः ॥
विन्ध्यवृद्धिक्षयकर मेघतोयविषापह ।
रत्नवल्लभदेवर्षे लङ्कावास नमोऽस्तु ते ॥
लंङ्कावास नमस्तुभ्यं ऋषीणामुत्तमैः सह ।

उदितो लङ्काद्वारे च अर्घो मे प्रतिगृह्यताम् ॥
राजपत्नी सदाचारा ऋषिपत्नी पतिव्रता ।
लोपामुद्रापतिः श्रीमान् यो सौ तस्मै नमो नमः ॥
येनोदितेन पापानि विलयं यान्ति व्याधयः
तस्मै नमोऽस्त्वगस्त्याय सशिष्याय सपुत्रिणे ॥
कुंभोद्भव महाभाग देवानां शान्तिदेश्वर ।
पितृरूप जगन्नाथ अर्घो मे प्रतिगृह्यताम् ।
वंशपात्रस्थितं रत्नं सप्तधान्यसमन्वितम् ।
फलसप्तसमोपेतं अर्घो मे प्रतिगृह्यताम् ॥
अनेन विधिना यस्तु पुमानर्घं निवेदयेत् ।
सप्तैव लोकानाप्नोति सप्तार्घान् यः प्रयच्छति ॥
यावदायुश्च यः कुर्यात्स परब्रह्म गच्छति । इति ॥
शक्त्या कुर्यात्तु गोदानं होमं ब्राह्मणभोजनमिति ॥

निर्णयामृते—

श्वेतां च दद्याद्यदि शक्तिरस्ति रौप्यैः खुरैर्हेममुखां सवत्सां ।
धेनुं बहुक्षीरवतीं प्रणम्य सवस्त्रघण्टाभरणां द्विजातये ॥
आसप्तरात्रादुदयेऽर्घमस्य दातव्यमेतत्सकलं नरेण ।
यावत्समाः सप्तदशाथ वा स्युरथार्घमप्येव वदन्ति केचित् ॥

## इत्यगस्त्यार्घः ॥

कृतेऽचलद्विवेदेन ग्रन्थेनिर्णयदीपके ।
उपाकर्मादि चत्वारो वर्णिता निर्णयाः शुभाः ॥

## ॥ अथ संक्रान्तिनिर्णयः ॥

संक्रान्त्यो द्वादशेति तदुक्तं ॥

कर्कटो मकरः सिंहः कुंभोऽलिर्वृषभस्तुला ।
मेषः कन्या धनुर्मीनो मिथुनश्चेति संक्रमाः ॥

अलिर्वृश्चिकः ॥ अत्र विशेषः—

अयने द्वे विषुवे द्वे चतस्रः षडशीतयः ।
चतस्रो विष्णुपद्यः स्युः संक्रान्त्यो द्वादश स्मृताः ॥

तत्र मकर उदगयनं । कर्कः दक्षिणायनं ॥ तुलामेषा विषुवसंज्ञकौ ॥ वृषसिंहवृश्चिककुंभेषु सूर्यसंक्रमो विष्णुपदं नाम ॥ कन्यामिथुनधनुर्मीनेषु संक्रमः षडशीति मुखमिति ॥ तदाह वृद्धवसिष्ठः—

मृगकर्कटसंक्रान्ती द्वे तूदग्दक्षिणायने ।
विषुवे द्वे तुलामेषौ गोलामध्यं ततोऽपराः ॥

मृगो मकरः ॥ गोला राशिचक्रं ॥

वृषवृश्चिककुंभेषु सिंहे चैव रवेर्गतिः ।
एतद्विष्णुपदं नाम विषुवादधिकं फलम् ॥
कन्यायां मिथुने मीने धनुष्यपि रवेर्गतिः ।
षडशीतिमुखाः प्रोक्ताः षडशीतिगुणाः फले ॥

संक्रान्तिषु स्नानदानाकरणे दोषमाह शातातपः—

[834] सूर्यसंक्रमणे पुण्ये न स्नायाद्यदि मानवः ।
सप्तजन्मानि रोगी स्याद्दुःखभागी च जायते ॥
संक्रान्तौ यदि दानानि हव्यकव्यानि मानवः ।
तानि तस्मै ददात्यर्कः सप्तजन्मसु निश्चयम् ॥

इत्यादिवचनेभ्यः स्नानादिचिकीर्षायां संक्रान्तिकाल-स्यातिसूक्ष्मत्वाज्ज्ञातुमशक्ये शक्ये वापि तावति काले स्नाना-दिविधानासंभवात्सन्निहितस्य कालस्य पुण्यतामाह देवलः—

संक्रान्तिसमयः सूक्ष्मो दुर्ज्ञेयः पिशितेक्षणैः ।
तद्योगाच्चाप्यधश्चोर्ध्वं त्रिंशन्नाड्यः पवित्रिताः॥ इति ॥

सामान्यतोऽस्मिन्वचने विद्यमाने स्मृत्यन्तराद्विशेषः ॥

आदिभागो वृषे सिंहे वृश्चिके कर्कटे घटे ।
मध्ये मेषतुलायां च शेषास्त्वन्ते प्रकीर्तिताः ॥

[८३५]तथा च गालवोऽपि—

(आर्या) मध्ये विषुवति दानं विष्णुपदे दक्षिणायने चादौ ।
षडशीतिमुखेऽतीते तथोदगयने च भूरिफलम् ॥

तथात्र विशेषः ॥ कर्कसंक्रान्तौ पूर्वास्त्रिंशन्नाड्यः पुण्याः ॥ मकरे तु उत्तरा विंशतिर्नाड्यः पुण्याः इति ॥ वसिष्ठः—

अतीतानागते पुण्ये द्वे तूदग्दक्षिणायने ।
त्रिंशत्कर्कटके नाड्यो मकरे विंशतिः पराः ॥

मकरे पराश्चत्वारिंशन्नाडिका इति निबन्धान्तरे ॥ तथा विष्णुपदीषु प्राक् षोडश ऊर्ध्वं च षोडश नाडिकाः पुण्याः ॥ तदाह वृद्धवसिष्ठः—

पुण्यायां विष्णुपद्यां तु प्राक् पश्चादपि षोडश ।

तथा तुलामेषयोर्विषुवयोः पूर्वं दश पश्चाद्दश च पुण्याः स्युरिति स एवाह—

वर्तमाने तुलामेषे नाड्यस्तूभयतो दश ।

[८३६]भविष्योत्तरेऽपि—

दशार्वाक् नाडिकाः पुण्याः पश्चादपि विषुवति । इति॥

तथा कन्यामिथुनधनुर्मीनादिसंक्रान्तिषु षडशीत्याख्यासु अतीतासु षष्टिर्नाडिकाः पुण्या इति ॥ तदाह वसिष्ठः—

षडशीत्यां व्यतीतायां षष्टिरुक्तास्तु नाडिका इति ॥

अत्र षडशीतिमुखानां चतसृणां संक्रान्तीनां मिलितानां षष्टिर्नाड्यः पुण्याः प्रत्येकं पञ्चदशेत्यर्थः॥यतो दानखण्डे—

षडशीत्यां व्यतीतायामष्टिरुक्ताश्च नाडिकाः ।

अष्टिः षोडशेति व्याख्यातं वा षडशीत्यां व्यतीतायामिति पुण्यभूयस्त्वाभिप्रायेण षडशीतिमुखेऽपि पूर्वमपि पुण्यकाल इति दानखण्डेऽभिहितं ॥ अतः ॥

पूर्वतोऽपि परतोऽपि संक्रमात्पुण्यकालघटिकासु षोडश॥ इतिज्ञेयं ॥ विषुवादिषु फलातिशयपरं सूक्ष्मं पुण्यकालमाह गालवः—

८३७ विषुवे षण्मुहूर्तं स्यात्षडशीतिमुखे द्वयम् ।
तथा विष्णुपदे त्रीणि पुण्यानि मुनयो विदुः ॥

प्रकारान्तरेण कालविभागः कालादर्शात्—

संक्रमोऽहन्यहः कृत्स्नं पुण्यं स्नानादिकर्मसु ।

अहनि यदि संक्रमः संक्रान्तिः स्यात् तदा कृत्स्नं अहः स्नानादिकर्मणि पुण्यं ॥ आदिशब्दाच्छ्राद्धदानदेवतोपासनादीनां परिग्रहः ॥ वृद्धवसिष्ठोऽपि—

अहः संक्रमणे पुण्यमहः कृत्स्नं प्रकीर्तितम् ।
या याः सन्निहिता नाड्यस्तास्ताः पुण्यतमाः स्मृताः॥

इति सर्वासु संक्रान्तिषु संबध्यते ॥ त्रिंशत्षोडशनाडि-

काद्युक्तपुण्यकालापेक्षया सन्निहिताः पुण्यतमा इति संबध्यते ॥ अयं निर्णयो दिनसंक्रमणे रात्रौ संक्रमणे विशेषोऽभिहितो वृद्धवसिष्ठेन—

रात्रौ संक्रमणे पुण्यं दिनार्धं स्नानदानयोः ।
अर्धरात्रादधस्तस्मिन्मध्यान्हस्योपरिक्रिया ॥
ऊर्ध्वे संक्रमणे चोर्ध्वमुदयात्प्रहरद्वयम् ।

तथा—आसन्नसंक्रमं पुण्यं दिनार्धं स्नानदानयोः ॥

[८३८] अयमर्थः ॥ पूर्वरात्रिसंक्रमणे तु पूर्वस्यान्हः उत्तरार्धे स्नानदानादिकं कार्यं ॥ अपररात्रार्धकालसंक्रमणे तु उत्तरदिवसस्य मध्यान्हपर्यन्तं स्नानादिकं चेति ॥ यत्तु वचनं—

विष्णुपद्यां धनुर्मीन नृयुक्कन्या तु वै यदा ।
पूर्वोत्तरगतौ रात्रौ भानोः संक्रमणं भवेत् ॥
पूर्वाण्हे पञ्चनाड्यस्तु पुण्याः प्रोक्ता मनीषिभिः ।
अपराण्हे तु पञ्चैव श्रौते स्मार्ते च कर्मणि ॥

नृयुङ्मिथुनराशिः ॥ रात्रेः पूर्वोत्तरभागे संक्रमणे पूर्वोत्तरयोर्दिवसयोः पञ्चघटिकाभिधानं तत्तु पुण्यत्वातिशयपरं ॥ एवं च सर्वासु संक्रान्तिषु अतीतानागतत्वं चानादृत्य यत्र दिनार्धे आदिभोगिन्यंत्यभोगिनी वा संक्रान्तिः सन्निहिता भवति ॥ तत्र स्नानदानादिकमिति सिद्धं ॥ यदा निशीथे अर्धरात्रे संक्रान्तिस्तदाहवसिष्ठः—

[८३९] संक्रमस्तु निशीथे स्यात्षड्यामाः पूर्वपश्चिमाः ।
संक्रान्तिकाला विज्ञेयास्ततः स्नानादिकं चरेत् ॥

इति स्पष्टार्थः ॥ वृद्धवसिष्ठोऽपि—

पूर्णे चैवार्धरात्रे तु यदा संक्रमते रविः ।
प्राहुर्दिनद्वयं पुण्यं मुक्त्वा मकरकर्कटाविति ॥

अत्र यद्यपि निशीथे मध्यरात्रौ संक्रमे तु दिनद्वयं पुण्यं स्नानदानादि कर्मणीति प्राप्तं ॥ तथापि संक्रान्तिकाले पूर्वतिथिश्चेत्पूर्वदिनं पुण्यं ॥ भिन्नायां तिथौ परदिने पुण्यं ॥ तथा चोक्तं—आदौ पुण्यं विजानीयाद्यद्यभिन्ना तिथिर्भवेत् ।
अर्धरात्रे व्यतीते तु विज्ञेयमपरेऽहनि ॥

अर्धरात्रे व्यतीते तु परदिनमेव रात्रौ संक्रमणे पुण्यं दिनद्वयमिति निश्चयो मकरकर्कटव्यतिरिक्तसंक्रान्तिविषयः ॥ मकरकर्कटयोर्विशेषः ॥ [८४०] तावत्कालादर्शात्—

प्रत्यूषे वा निशीथे वा यदि कर्कटसंक्रमः ।
पूर्वस्मिन्नह्नि कुर्वीत स्नानदानादिकं नरः ॥
प्रदोषे वा निशीथे वा मकरः संक्रमः परे ।

अन्हीत्येव ॥ नर इति सर्ववर्णोपलक्षणं ॥ भविष्योत्तरे—

मिथुनात्कर्कसंक्रान्तिर्यदि स्यादंशुमालिनः ।
प्रभाते वा निशीथे वा कुर्यादहानि पूर्वतः ॥

पूर्वतः पूर्वेद्युः ॥ वृद्धगार्ग्योऽपि—

अर्धरात्रे तदूर्ध्वं वा संक्रान्तौ दक्षिणायने ।
पूर्वमेवदिनं ग्राह्यं यावन्नोदयते रविरिति ॥

मकरसंक्रमणे स एवाह—

यद्यस्तमयवेलायां मकरं याति भास्करः ।
प्रदोषे वार्धरात्रे वा स्नानं दानं परेऽहनि ॥

प्रदोषे रजनीमुखे ॥ [८४२] एवं पुराणेऽपि—

कार्मुकं तु परित्यज्य झषं संक्रमते रविः ।
प्रदोषे वार्धरात्रे वा स्नानं दानं परेऽहनि ॥ इति ॥

कार्मुकं धनुः । झषं मकरं । अत्रोच्यते ॥ अर्धरात्रे मकरकर्कटसंक्रमे वसिष्ठोक्तेन यदि विंशति त्रिंशत्घटिकानां विद्यमानत्वात् भवतु परपूर्वयोर्दिवसयोः पुण्यत्वं ॥ यदा तु प्रत्यूषे कर्कसंक्रमः प्रदोषे मकरसंक्रमः तदा मकरकर्कटोक्त विंशतित्रिंशद्घटिकातिरिक्तयोः परपूर्वयोरन्होः कथं पुण्यत्वं॥ शृणु ॥ मिथुनात्कर्कसंक्रान्तिरित्यादिना वाक्येन पुण्यत्वं विधीयते सामान्यविशेषन्यायेन ॥ आसन्नसंक्रमं पुण्यमित्यादि सर्वसंक्रान्तिसामान्यं ॥ मिथुनात्कर्कसंक्रान्तिरित्ययनमात्रविषयत्वाद्विशेषशास्त्रं ॥ [४२]मैवं ॥ यद्यपि न्यायाद्विप्रकृष्टयोरन्होः पुण्यकालता भवेत् परन्तु सन्निकृष्टभागपुण्यकालत्वाभिधायकैर्वक्ष्यमाणैरनन्तभट्टीयादिवचनैर्विरोधः ॥ अयनसंक्रमे रात्रावपि सन्निकृष्टभागस्य पुण्यत्वमुक्तं ॥ कालादर्शे यथा तथानिर्णयामृतेऽपि च ॥ कर्कमकरयोः रात्रि संक्रमणे सति विप्रकृष्टयोरपि पूर्वापरयोरन्होरुक्ते पुण्यत्वे सन्निकृष्टस्य रात्रिभागस्य पुण्यत्वं कैमुत्यन्यायेन सिद्धं॥ अयने रात्रावपि स्नानादीति पारिजातेऽप्युक्तं ॥ किंच ॥ विप्रकृष्टदिनपुण्यत्वाभिधायकैरेतैरेववाक्यैर्व्याख्याविशेषतो रात्रावपि पुण्यकालता भवति ॥ यथा वचनानि—

प्रत्यूषे वा निशीथे वा यदि कर्कटसंक्रमः ।
पूर्वस्मिन्नन्हि कुर्वीत स्नानदानादिकं नरः ॥
प्रदोषे वा निशीथे वा मकरः संक्रमः परे ।

अन्हीत्येव ॥ [८४३] तथा मिथुनात्कर्कसंक्रान्तिः ॥ तथा यद्यस्तसमयवेलायामित्यादिपूर्वोदाहृतवाक्येषु प्रभातप्रदोषशब्दौ तु संक्रान्तिसमयात् पूर्वापरकालातिशयद्योतकौ कर्कमकरयोः संक्रमात् ॥ तथा प्रभाते संक्रमणे सति पूर्वस्मिन्नहनि इति ॥ प्रदोषे सति परेऽहनीति सप्तमी विप्रकृष्टत्वात् पुण्यकालाधिकरणमसंभवन्ती दशम्यां जातस्य नामविदध्यादितिवत् दिनमतीत्य परित्यज्येत्येवं विषयातीतलक्षणया सन्निकृष्टस्य रात्रिभागस्य पुण्यकालतां द्रढयति ॥ तस्मादयने रात्रावपि स्नानादि कुर्यादिति ॥ तदङ्गीकृतं च दानखण्डे यथा लिखितं ॥

रात्रौ स्नानं न कुर्वीत दानं चैव विशेषत इति ॥

रात्रौ दानादिप्रतिषेधो अन्यसंक्रान्तिविषयः ॥ यत्तु श्रूयते संक्रान्त्यादिरात्रावपि स्नानादिकं कुर्यादिति ॥ तद्दक्षिणायनोत्तरायणविषयः ॥ अत एव चोक्तं ॥ [८४४] मुक्त्वा मकरकर्कटाविति ॥ ततश्च मकरकर्कटयोः रात्रावपि स्नानदानानुग्रहे या याः सन्निहिता नाड्यः इति अवधेयमिति ॥ दानखण्डे ॥ अतश्चायनसंक्रमणाश्रितरात्रिभागाजहल्लक्षणया सन्निहितयोः पूर्वपरयोः पुण्यत्वं ॥ एवं च दानखण्डोक्तमिथुनात्कर्कसंक्रान्तिरित्यादिवचनैः सर्वमनुगृहीतं भवति ॥ अथवा अयनसंक्रमे रात्र्यजहल्लक्षणाभिप्रायेण भविष्योत्तरेऽधिकः पुण्यकालोऽभिहितः ॥ यथा—

प्रत्यूषे कर्कटं भानुः प्रदोषे मकरं यदि ।
संक्रमेत्षष्टिनाड्यः स्युः पुण्याः पूर्वोत्तराः स्मृताः ॥

अत्र विशेषः ॥ अयनसंक्रमणसन्निहितरात्रिभागे स्नानादिविधानासंभवे सन्निहितदिने कार्यं ॥ [४५] तदुक्तं कालनिर्णयदीपिकायां—

अथायनमथः पश्चान्निशार्धाद्ववेद्यद्यासन्नदिनं तदर्धमथवेति ।
इदमयनद्वयसाधारणं ॥ अनन्तभट्टे पुनर्विशेषः ॥

धनुर्मीनावतिक्रम्य कन्यां च मिथुनं तथा ।
पूर्वोत्तरविभागेन रात्रौ संक्रमते रविः ॥
अपराण्हे पञ्च नाड्यः पुण्याः प्रोक्ता मनीषिभिः ।
उदिते तु तथा पञ्च दैवे पित्र्ये च कर्मणि । इति ॥

अस्यार्थः ॥ धनुर्मीनातिक्रमे मेषमकरयोः संक्रमणं भवति ॥ कन्यामिथुनातिक्रमे तुलाकर्कटयोः संक्रमणं भवति ॥ अत्र द्वे अयनसंज्ञके द्वे विषुवसंज्ञके चेति ॥ आसां रात्रेः पूर्वभागसंक्रमणे अपराण्हे पञ्चनाड्यः । उत्तरभागसंक्रमणे उदिते पञ्च नाड्यः पुण्या इति ॥ अत्र पञ्चेति भूयः पुण्यकालाभिप्रायेण ॥ नन्वेवं सपुण्यत्वे सति मिथुनात्कर्कसंक्रान्तिः ॥ [४६] तथा यद्यस्तमयवेलायामित्यादिवाक्यान्यनर्थकानीति मा जानीहि ॥ एषां वाक्यानामयनविषये रात्रावपि स्नानदानादि विषयकत्वेन सार्थकत्वमिति ब्रूमः ॥ अतश्च दानखण्डकालादर्शपारिजातनिर्णयामृतादिग्रन्थकर्तृभिर्मिथुनात्कर्कसंक्रान्तिरित्यादिवचनगणार्थपर्यालोचनया रात्रावप्ययने पुण्यकालता प्रतिपादिता स्नानश्राद्धादिषु वचनानि संमुग्धाकारेणलिखितानि न व्याख्यातानि रात्रौ पुण्यतारूपोऽर्थो गृहीत इति ॥ एषु ग्रन्थेषु अयनविषये रात्रिभागपुण्यत्वाभिधायका-

नां विशेषवाक्यानामदर्शनात् । चेदन्यत्रास्ति काहानिरिति ॥ एतद्वचनगणार्थोऽत्र व्याख्यातः प्राक् ॥ एवं च मुक्त्वामकर-कर्कटाविति ॥ [४७]अस्यायमर्थः ॥ मकरकर्कटयोः रात्रौ दि-वा च स्नानश्राद्धादिकं कार्यं ॥ अन्यसंक्रान्तौ दिवैव न रा-त्राविति संक्रान्तिविषये रात्रौ स्नानादिविधायकानि वच-नान्ययनविषयाणीति ज्ञेयं ॥ तथा–

त्रिंशत्कर्काटके नाड्यो मकरे विंशतिः पराः ।
वर्तमाने तुलामेषे नाड्यस्तूभयतो दश ॥

इतीदं वसिष्ठवाक्यं वर्तमाने उभयत इति कर्कटादि-भिः संवध्यत इति दानखण्डे व्याख्यातं ॥ अतः मकरकर्क-टयोः पूर्वपरतश्च पुण्यकाल इति ॥ तस्मादयनस्य रात्रिसं-क्रमणे सति रात्रावपि स्नानश्राद्धादिकमिति शेषः ॥ अन्ये सन्निहितदिने पुण्यत्वादयो धर्माः सर्वसंक्रान्तिसाधारणाः ॥

अर्धरात्रादधस्तस्मिन्मध्यान्हस्योपरि क्रियाः ।
ऊर्ध्वं संक्रमणे पुण्यमुदयात्प्रहरद्वयम् ॥

इत्यादिकाः अयनयोः प्रत्यूषादिकालविशेषसंक्रमणे ग्र-हणवदयनेइति वचनाद्रात्रावपि संक्रमणसन्निधानकालमनप-हाय सन्निहितदिनभागयोः पुण्यत्वं ॥ सन्निहितदिनात्रिभागे स्नानश्राद्धादिकमिति ॥ या याः सन्निहिता नाड्य इति व-सिष्ठवाक्यात् ॥स्मृत्यर्थसारे॥ मकरसंक्रमणे पूर्वमपि पुण्यका-ल इत्यभिधानात् ॥ कर्कटे तूत्तरत्रापीति ॥ [४८] इत्ययनविषयो विशेषः ॥ अत्र त्रिंशत्कर्काटक इत्यादिवचनं नाम्ना वि-शिष्टसंक्रमानुद्दिश्य स्नानादिकालं विदधाति ॥ अर्धरात्रादध

इत्यादिवचनं तु कालतो विशिष्टानुद्दिश्य स्नानादिकालं विदधाति ॥ अतस्तुल्यबलत्वादनयोर्वचनयोरेतद्विहितकालयोर्विकल्पः स्वीकार्यः ॥ अथ संक्रान्तिसाधारणं ॥

या याः सन्निहिता नाड्यस्तास्ताः पुण्यतमाः स्मृताः।
संक्रान्तौ पुण्यकालस्तु षोडशोभयतः कलाः ॥
चन्द्रसूर्योपरागे तु यावद्दर्शनगोचर इति ॥

यत्तुवचनं-अन्हि चेद्रात्रियुग्मंस्याद्रात्रौ चेद्वासरद्वयम् ।
संक्रान्तिः पक्षिणी ज्ञेया दानाध्ययनकर्मसु इति ॥

अत्र वाक्ये निबन्धान्तरे वेदाध्यापनाख्ये दाने अध्ययन कर्मणि च दिनद्वयं मकरकर्कटयोः पुण्यं इत्यभिधाय तदपि न युक्तिसहमित्युक्तं ॥ यतः—

अयने विषुवे चैव शयने बोधने तथा ।
चातुर्मास्यद्वितीयासु वेदाध्ययनं विवर्जयेत् ॥

नित्यविहिते अनध्यायो न भवति ॥ तदुक्तं स्मृत्यन्तरे—

वेदोपाकरणे चैव स्वाध्याये चैव नैत्यिके ।
नानुरोधोऽस्त्यनध्याये होममंत्रेषु चैव हि ॥ इति ।

इति निर्णयः ॥ [८४५] अत्र कर्तव्यमुच्यते ॥

स्नानं श्राद्धं च दानं च ग्रहणे संक्रमेष्वपि ।

कुर्यात् ॥ राहुदर्शनसंक्रान्तिविवाहात्ययवृद्धिषु ।

स्नानदानादिकं कुर्यान्नित्यकाम्यव्रतेषु चेति ॥

आदिशब्दाद्देवार्चनजपहोमादि ॥ वसिष्ठः—

उपोष्यैव तु संक्रान्त्यां स्नातो योऽभ्यर्चयेद्धरिं ।
प्रातः पञ्चोपचारेण स काम्यफलमश्नुते ॥

अयने विषुवे चैव त्रिरात्रोपोषितो नरः ।

स्नात्वा च पूजयेदीशं सर्वान्कामान्समश्नुते इति ॥

स्नानादेः फलमाह वृद्धवसिष्ठः—

अयने कोटिगुणं स्याल्लक्षं च विषुवे फलम् ।

शडशीत्यां सहस्रं तु फलं विष्णुपदीषु च ॥ इति ॥

भारद्वाजः—षडशीत्यां तु यद्दानं यद्दानं विषुवद्वये ।

दृश्यते सागरस्यान्तस्तस्यान्तो नैव दृश्यते ॥

शातातपः—कुर्यात्सदायने मध्ये विष्णुपद्यां विषुवति ।

षडशीत्यामन्त्यभागे स्नानादिर्विधिरादृत इति ॥

न केवलमादित्यस्यैव संक्रमसमये पुण्यकालो भवति ॥ ८५० किंतु सर्वेषामपि ग्रहाणां नक्षत्रासंक्रमणे पुण्यकालो भवतीति ॥ तदुक्तं ज्योतिःशास्त्रे ॥ तदत्रार्थतोऽभिधीयते ॥ आदित्यस्यार्वाक् परतश्च षोडश नाड्यः पुण्याः॥ तथा चन्द्रस्यापि राशिनक्षत्रगमने घटिकैका पलानि त्रयोदश अर्वाक् परतश्च पुण्यकालः ॥ एवं मङ्गलस्य घटिकाश्चतस्रः पलमेकं पुण्यकालः ॥ तथा बुधस्य तिस्रो घटिकाश्चतुर्दश पलानि बृहस्पतेरपि सार्धचतस्रो घटिकाः सप्त पलानि ॥ शुक्रस्य चतस्रो घटिकाः पलमेकं ॥ शनैश्चरस्यापि द्व्यशीतिघटिकाः पलानि सप्त पुण्यकाल इति ॥ एषु कालेषु आद्यन्तमध्ये जपदानहोमं कुर्वन्नाप्नोति सुरेन्द्रधामेति ॥

## इति संक्रान्तिनिर्णयः ॥

कृतेऽचलद्विवेदेन ग्रन्थे निर्णयदीपके ।

स्नानादिकालज्ञानेन जातः संक्रान्तिनिर्णयः ॥

[८५१]अथेदानीमाधिमासो निर्णीयते ॥

तदुक्तं—तत्र तावत्ते मासाश्चतुर्विधा इति ॥

दर्शावधिं मासमुशन्ति चान्द्रं सौरं तथा भास्करराशियोगात् ।

नाक्षत्रमिन्दोर्भगणप्रचारात्त्रिंशद्दिनं सावनकं वदन्ति ॥

एतेषां प्रमाणान्युक्तानि ब्रह्मसिद्धान्ते—

चान्द्रः शुक्लादिदर्शान्तः सावनस्त्रिंशता दिनैः ।
एकराशौ रविर्यावत्कालं मासः स भास्करः ॥
सर्वर्क्षपरिवर्तैस्तु नाक्षत्रो मास उच्यते । इति ॥

शुक्लकृष्णपक्षप्रारंभभेदेन चान्द्रस्यापि द्वैविध्यं वदन्ति ॥

तदाह त्रिकाण्डमण्डनः—

चान्द्रोऽपि शुक्लपक्षादिः कृष्णादिर्वेति च द्विधा ।
कृष्णपक्षादिकं मासं नाङ्गीकुर्वन्ति केचन ॥

केचन विन्ध्याद्दाक्षिणतो वासिनः॥ तैः शुक्लप्रतिपदादिमासोऽङ्गीक्रियते न कृष्णप्रतिपदादिः॥शुक्लप्रतिपदादिरमावास्यान्तश्चान्द्रोमासः ॥ स यदा रविसंक्रान्तिरहितो भवति तदा अधिमासस्त्रयोदशो मास इति कथ्यते॥ [८५२] ननु द्वादश वै मासाः संवत्सर इति श्रुतेः कथं त्रयोदशो मास इति॥ सत्यं॥ अस्ति त्रयोदशो मास इति ॥ श्रुतावपि त्रयोदशमासाभिधानमुक्तं॥ तस्मात्स एव अधिमासो मलमासो मलिम्लुच इति पर्यायैरुच्यते ॥ अयमधिमासागमे कालनियमो ज्योतिःसागरात्—

त्रिंशत्षट्त्रिंशन्मासस्य बाह्याभ्यन्तरयोर्द्वयोः ।
अधिमासोऽवकल्पेत बादरायणिकीर्तितः ॥ इति ॥

त्रिंशन्मासादूर्ध्वं षट्त्रिंशन्मासाभ्यन्तरे इत्यर्थः ॥ वसिष्ठसिद्धान्ते तु विशेषः

द्वात्रिंशद्भिर्गतैर्मासैर्दिनैः षोडशभिः सह ।
घटिकानां चतुष्केणावपतत्यधिमासक इति ॥

अधिमासादारभ्येति शेषः ॥ एवं सति—

पक्षद्वयेऽर्कसंक्रान्तिर्यदि न स्यात्सितासिते ।
अधिमासस्तदा ज्ञेयो निन्दितः सर्वकर्मसु ॥

अत्र वचनान्तरं—अमावास्यामहोरात्रं यदा संक्रमते रविः ।
स तु मासः पवित्रः स्यादतीतेऽप्यधिको भवेदिति ॥

[५४] अस्यार्थः ॥ अमावास्यां प्राप्य यदाहनि वा रात्रौ वा रविः संक्रामति तदा स चान्द्रो मासः पवित्रः स्यात् ॥ यदा पुनरमावास्याव्याप्तेः अतीते सति प्रतिपदि संक्रामति ॥ तदा चान्द्रो मासोऽधिमासः स्यादिति व्याख्यातं ॥ अनन्तभट्टेऽपि अधिमासोऽधिकोमासस्त्रयोदशोमासः सर्वकर्मसु बहिष्कृतः ॥ तदाह पैठीनसिः—

श्रौतस्मार्तक्रियाः सर्वा द्वादशे मासि कीर्तिताः ।
त्रयोदशे तु सर्वास्ता निष्फला इति कीर्तिताः ॥
तस्मात्त्रयोदशे मासि कुर्यात्ता न कथंचन ।
कुर्वन्ननर्थमेवाशु कुर्याज्जन्मविनाशनमिति ॥

भृगुणाप्युक्तं—

एकराशिस्थिते सूर्ये यदा दर्शद्वयं भवेत् ।
हव्यकव्यक्रियाहन्ता तदा ज्ञेयोऽधिमासक इति ॥

स एवायं मलिम्लुचः मलमासोऽपि च ॥

तदुक्तं गृह्यपरिशिष्टे—

मलिम्लुचस्तु पापोऽसौ मलिकः पापसंभवः।
गर्हितः पितृदेवेभ्यः सर्वकर्मसु संत्यजेत् ॥

सोऽपि चान्द्र एव ॥ ८५४ तदुक्तं ज्योतिः शास्त्रे—

द्वौ तिथ्यन्तावेकवारे यस्मिन्सः स्याद्दिनक्षयः
चान्द्रो मासोऽप्यसंक्रान्तो मलमासः प्रकीर्तितः इति ॥

तथा—चान्द्रः स्याद्रविसंक्रमेण रहितो
मासः सितादिः क्रियाबाह्य इति दीपिका ॥

गार्ग्यः—अमावास्याद्वयं यत्र रविसंक्रान्तिवर्जितम् ।
मलमासः स विज्ञेयो मासः शुद्धाख्य उत्तरः ॥

मैत्रेयसूत्रेऽपि अमावास्याद्वये यद्येकराशिं संक्रमेतादित्यः तत्राद्योमलिम्लुचः शुद्धोऽन्त्य इति ॥ व्यासः—

सिनीवालीमतिक्रम्य यदा संक्रमते रविः ।
पूर्वमासं परित्यज्य कलामात्रोत्तरः स्मृतः ॥

उत्तरोऽधिमासः ॥ अत्र सिनीवालीति समग्रदर्शोपलक्षणं ॥ यतो दर्शस्य कलामात्राशेषे रविसंक्रमणे सति असंक्रान्तो न भवति ॥ तदुक्तं—

दर्शे कलावशेषे तु यदा संक्रमते रविः
तदा संक्रान्तमासोऽयं विद्वद्भिः परिगीयते ॥

अनन्तोक्तं—

रविणा लङ्घितो मासश्चान्द्रः ख्यातो मलिम्लुचः ।
तत्र यद्विहितं कर्म उत्तरे मासि कारयेत् ॥
एवं षष्टिदिनो मासस्तदर्धं तु मलिम्लुचम् ।

त्यक्त्वा तदुत्तरे कुर्यात्पितृदैवादिकाः क्रियाः ॥

[८५५]ज्योतिः पितामहोऽपि—

षष्ठ्या तु दिवसैर्मासः कथितो बादरायणैः ।
पूर्वार्धं तु परित्यज्य कर्तव्या उत्तरे क्रियाः ॥

तथा ऋष्यशृङ्गोऽपि—

संवत्सरातिरेको वै मासश्चैव त्रयोदशः ।
असुराणां तु मासोऽसौ तस्मादेव विगर्हितः ॥
तस्मात्त्रयोदशे श्राद्धं न कुर्यान्नोपतिष्ठति ।

इत्यादिस्मृतिवाक्यैरधिमासे सर्वकर्मणां निवृत्तिप्राप्तौ सत्यां केषुचिदभ्यनुज्ञा प्रदृश्यते ॥ तावद्बृहस्पतिः—

नित्यं नैमित्तिकं कुर्यात्प्रयतः सन्मलिम्लुचे ।

नित्यमावश्यकं यन्मासविशेषनामनिरपेक्षमेव विहितं ॥ यथा ॥ अहरहः श्राद्धं पञ्चमहायज्ञदेवार्चनातिथिपूजादि ॥ मत्स्यपुराणेऽप्युक्तं—

दर्शे वाहरहः श्राद्धं दानं च प्रतिवासरम् ।
गोभूतिलहिरण्यानां मासेऽपि स्यान्मलिम्लुचे ॥

तथा स्मृत्यन्तरोक्तं ॥ [८५६]कालादर्शात्—

मन्वादिषु च यद्दानं दानं दैनं दिनं च यत् ।
तिलगोभूहिरण्यानां संध्योपासनयोः क्रिया ॥
पर्वहोमश्चाग्रयणं साग्नेरिष्टिश्च पर्वणोः ।
नित्याग्निहोत्राहोमश्च देवताऽतिथिपूजनम् ॥
स्नानं च स्नानविधिनाप्यभक्ष्यापेयवर्जनम् ।
तर्पणं च निमित्तस्य नित्यत्वादुभयत्र च ॥

पर्वहोमः पार्वणस्थालीपाकः। आग्रयणमापस्कालविषयं॥ एतेषामाजीवनादेर्निमित्तस्य विहितत्वान्नित्यत्वं ॥
तथा च गोभिलः—

नित्यं नैमित्तिकं दानं नरः कुर्यान्मलिम्लुचे ।
तीर्थे स्नाने ग्रहादौ च श्राद्धं दैनंदिनं च यत् ॥

आदिशब्दाद्युगादिमन्वादीनामुपसंग्रहः ॥ यत्तु ऋष्यशृङ्गेणाधिमासे दर्शश्राद्धं निषिद्धं

संवत्सरातिरेकेण मासोयस्मिन्मलिम्लुचः
तस्मिंस्त्रयोदशे श्राद्धं न कुर्यादिन्दुसंक्षय इति ।

तदमावास्योक्तकाम्यश्राद्धविषयं ॥ ८५७ एवमाह जाबालिः—

नित्यं नैमित्तिकं चैव श्राद्धं कुर्यान्मलिम्लुचे ।
तिथिनक्षत्रवारोक्तं काम्यं नैव कदाचनेति ॥

तथा—जातकर्माणि यच्छ्राद्धं दर्शश्राद्धं तथैव च ।
मलमासेऽपि तत्कार्यं व्यासस्य वचनं यथा

स्मृतिसङ्ग्रहे—जातकर्म च पुंसूतिः सीमन्तोन्नयनव्रतम् ।
मलिम्लुचे च कुर्वीत निमित्तं यदि जायते ॥

चशब्देनालभ्ययोगोक्तव्रतानां कृच्छ्रात्मव्रतानां चोपसङ्ग्रहः ॥ अत एव मरीचिः—

योगे वालभ्ययोगे च सीमन्ते पुंसवेऽपिच ।
यद्दानादि समुद्दिष्टं पूर्वत्रापि न दुष्यतीति ॥

अलभ्ययोगे अर्धोदयमहाव्यतीपातकपिलाषष्ठ्यादौ विहितानि श्राद्धव्रतानि च ॥ तथा—

रोगशान्तिरलभ्ये च योगे श्राद्धं व्रतानि च ।

प्रायश्चित्तं निमित्तस्य वशात् पूर्वं परत्र चेति ॥

रोगशान्तिः रोगनिवृत्त्यर्थं नक्षत्रशान्तिर्ग्रहपूजनादिकं च निमित्तवशात् ॥ निमित्तानन्तरं नैमित्तिकमिति ॥ पूर्वमासेऽपरमासे वा यदा उत्पद्यते तदा प्रायश्चित्तं कार्यं ॥ तथा अग्निनाशानन्तरं पुनराधानं च कार्यं ॥ [८५८] मत्स्यपुराणे—

चन्द्रसूर्यग्रहे चैव मरणे पुत्रजन्मनि ।
मलमासेऽपि देयं स्याद्दत्तमक्षयकारकमिति ॥

व्यासः—तीर्थस्नानं जपो होमो जातकर्मादिकाः क्रियाः ।
मघा त्रयोदशी श्राद्धं प्रत्युपस्थितिहेतुकम् ॥
अनन्यगतिकत्वेन कर्तव्यं स्यान्मलिम्लुचे ।

तीर्थस्नानं पूर्वदृष्टतीर्थविषयं ॥ यतः—

मलमासेऽप्यनावृत्ततीर्थयात्रां विवर्जयेत् ।

अपूर्वदेवावलोकनं च वर्जयेत् ॥ काण्वगृह्यपरिशिष्टे—

मलेऽनन्यगतिं कुर्यान्नित्यनैमित्तिकीं क्रियां इति ॥

तथा—चन्द्रसूर्यग्रहे स्नानं श्राद्धं दानं जपादिकम् ।
कार्याणि मलमासेऽपि नित्यं नैमित्तिकं तथा ॥

गृह्यपरिशिष्टे—अवषट्कारहोमाश्च पर्व चाग्रयणं तथा ।
मलमासेऽप्यकर्तव्यं काम्या इष्टीश्च वर्जयेत् ॥

अवषट्कारहोमाः अग्निहोत्रहोमादयः पर्वेष्टिः आग्रयणं। दुर्भिक्षे
गर्भे वार्धुषिके प्रेते श्राद्धकर्मणि मासिके ।
सपिंडीकरणे नित्ये नाधिमासं विवर्जयेत् ॥ इति ॥

काम्येष्ट्यादिकं मलमासे न कार्यं ॥ [८५९] तदाह व्यासः—

श्रौतस्मार्तक्रिया यास्तु द्वादशे मासि कीर्तिताः ।

मलमासेऽपि कर्तव्याः काम्या इष्टीर्विवर्जयेत् ॥ इति ॥
तथा ॥ मलमासे मृतानां दाहादि प्रेतकार्यं कर्तव्यं ॥ दाहादिकमाब्दिकमखिलं प्रेतस्य कार्यं तथेति दीपिका ॥ सत्यव्रतः--

मलिम्लुचाह्वये मासि विपद्येत यदि द्विजः ।
तस्मिन्नपि च कर्तव्याः पिंडदानोदकक्रियाः ॥ इति ॥

द्विज इति वर्णमात्रोपलक्षणं ॥ कालादर्शे ॥ मरणादारभ्य दहनाग्न्याच्छादनतिलोदकपिंडदाननवश्राद्धद्वादशाहषोडशश्राद्धसपिंडीकरणान्तं कर्म कार्यं ॥ सत्यव्रतः—

अब्दमंबुघटं दद्यादन्नमाज्येन संयुतम् ।
संवत्सरे प्रवृद्धेऽपि प्रतिमासं च मासिकमिति ॥

मासिकं नैमित्तिकं अन्यदपि नैमित्तिकं मलमासे कार्यं॥ तदुक्तं गभस्तिना—

न कुर्यान्मलमासेऽपि कामी कर्म कथंचन ।
मुक्त्वा नैमित्तिकं श्राद्धं तद्धि तत्रैव कीर्तितमिति ॥

प्रेतश्राद्धं नैमित्तिकं ॥ अतश्च काठकगृह्यपरिशिष्टे—

प्रेतमृत्यादिमारभ्य श्राद्धपिंडोदकक्रियाः ।
सपिंडीकरणान्ताश्च यथाकालं प्रकीर्तिताः ॥ इति ॥

यथाकालमिति यदैवनिमित्तं तदैवेति ॥ ८६० तथाह हारीतः—

असंक्रमे तु कर्तव्यमाब्दिकं मासिकं तथा ।
शावं सपिंडनान्तं च वत्सरोदघटादिकमिति ॥

संवत्सरे प्रवृद्धेऽपि संवत्सरमध्ये पतिते मलिम्लुचे एकं मासिकं कृत्वा द्वितीये मासि शुद्धेऽपि अन्यदधिकं कुर्यात् ॥ तदाह वसिष्ठः ॥ संवत्सरमध्ये यद्यधिमासो भवेत् तदा मा-

शिकार्थं दिनमेकं वृद्धिं नयेत् ॥ वृद्धवसिष्ठोऽपि—

श्राद्धीयेऽहनि संप्राप्ते अधिमासो भवेद्यदि ।
श्राद्धद्वयं प्रकुर्वीत एवं कुर्वन्न दुष्यतीति ॥

श्राध्धद्वयमिति प्रेतश्राध्धद्वयं ॥ पूर्वमासोत्तरमासयोरिति ॥ व्याख्यातमनन्तभट्टेन ॥ अतः आद्यमासिकं तस्मिन्कृतं कृतमेव ॥ द्वितीयमासिकत्रिपक्षादिक्रमो मलमासप्राथम्यानुरोधेन भवतीत्यर्थः ॥

भविष्यत्पुराणे—अर्वागब्दात्प्रमीतस्य तस्य मासास्त्रयोदश ।
श्राद्धं तस्यापि कर्तव्यं प्रतिमासं तु वत्सरम् ॥
चक्रवत्परिवर्तेत सूर्यः कालवशाद्यतः ।
अतः सांवत्सरं श्राद्धं कर्तव्यं मासचिन्हितम् ॥
मासचिन्हं तु कर्तव्यं पौषमाघाद्यमेवहीति ॥

८६१ व्यासोऽपि—अधिमासे विपन्नानां सौरं मासं समाश्रयेत् ।
स एव तस्य मासोऽपि श्राद्धपिंडोदकादिषु ॥

यदा पुनर्मृतमासात्रयोदश एवाधिमासो भवति तदा तस्मिन्मलिम्लुचे सर्वं श्राद्धं समाप्य प्रथमाब्दिकं कुर्यात् ॥ तदप्युक्तं वृद्धवसिष्ठेन—

असंक्रान्तेऽपि कर्तव्यमाब्दिकं प्रथमं द्विजैः ।
तथैव मासिकं श्राद्धं सपिंडीकरणं तथेति ॥

द्वादशाहादौ सपिंडीकरणमकृतं चेन्मलमासेऽपि कृत्वा आब्दिकं कार्यं ॥ वर्षमध्येऽधिमासागमे अर्थाच्चतुर्दशमासे प्रथमाब्दिकं ॥

आब्दिकं प्रथमं यस्मान्न कुर्वीत मालिम्लुचे ।

त्रयोदशे तु संप्राप्ते कुर्वीत पुनराब्दिकम् ॥

तथा मलमासमृतानां पुनर्गच्छता कालेन मलमासे प्राप्ते पुनः प्रतिसंवत्सरं श्राद्धं मलमास एव कार्यं ॥ न शुद्धे मासि ॥ तदाह भृगुः—

मलमासमृतानां तु श्राद्धं यत्प्रातिवत्सरम् ।
मलमासेऽपि कर्तव्यं नान्येषां तु कदाचनेति ॥

अन्येषां मलमासादन्यत्र मासि मृतानां मलमासे एव न कार्यं किंतु उभयत्रापि इति वक्ष्यते मलमासमृतप्रत्याब्दिकाभिप्रायेण ।

शातातपः—एकसंज्ञौ यदा मासौ स्यातां संवत्सरे क्वचित् ।
तत्राद्ये पितृकार्याणि देवकार्याणि चोत्तरे ॥

[६९१] तथा सत्यव्रतः—

वर्षे वर्षे तु यच्छ्राद्धं मृताहे तन्मलिम्लुचे ।
कुर्यात्तत्र प्रमीतानामन्येषामुत्तरत्र तु इति ॥

अन्येषामिति मलमासादन्यत्र मृतानां शुद्धमास एव कार्यमित्यर्थः ॥ अन्यान्यपि मलमासे प्रत्याब्दिकविधायकानि मलमृतविषयाणीति ज्ञेयं ॥ मलमासमृतस्य प्रतिसंवत्सरादौ मलमासाभावे शुद्धे मासि कुर्यात् ॥ तदाह व्याघ्रः—

अधिमासे विपन्नानां सौरमानं समाश्रयेत् ।
स एव तस्य दिवसः श्राद्धपिंडोदकादिषु ॥

तथा च स्मरणं—

मासपक्षतिथिस्पष्टे यस्मिन्यो म्रियतेऽहनि ।
प्रत्यब्दं तु तथाभूतं क्षयाहं तस्य तं विदुः ॥

मलव्यतिरिक्तानां प्रत्याब्दिके मलमासे सति विशेषः

सत्यव्रतवचनं—वर्षे वर्षे तु यच्छ्राद्धं मातापित्रोर्मृतेऽहनि ।

मलमासे न तत्कार्यं व्याघ्रस्य वचनं यथा ॥

एतद्द्वितीयाब्दिकपरं ॥ प्रथमाब्दिकं मलमासे कुर्यादि-त्युक्तं प्राक् ॥ अत्रैव विशेषः [८६३] सत्यव्रतवचनात्—

जातकर्मणि यच्छ्राद्धं नवश्राद्धं तथैव च ।

प्रतिसंवत्सरश्राद्धं मलमासेऽपि तत्स्मृतम् ॥

अपिशब्दादयमर्थः ॥ न केवलं शुद्धे मासि मलमासेऽपि त-त्कार्यं ॥ मृताहलक्षणस्य निमित्तस्य उभयत्र विद्यमानस्य मलमासप्रमीतानां मलमास एव ॥ अन्यमासप्रमीतानामु-भयत्रेति कालादर्शे व्याख्यातं ॥ कात्यायनोऽपि—

गर्भे वार्धुषिके प्रेते श्राद्धकर्मणि मासिके ।

आब्दिके च तथा नित्ये नाधिमासं विवर्जयेत् ॥

व्यासः—षष्ट्या तु दिवसैर्मासः कथितो बादरायणैः ।

उत्तरे देवकार्याणि पितृकार्याणि चोभयोः ॥

यद्यपि पितृकार्यं श्राद्धं उभयत्रेत्युक्तं तथापि पूर्वमासं प्र-ति संबन्धित्वेन क्षयदिनस्य शून्यतादोषनिरासार्थं ब्राह्मणान् भोजयित्वा शुद्धे मासि श्राद्धं कुर्यात् इत्यनन्तभट्टादावुक्तं॥ तथा बृहत्पाराशरः—

पिंडवर्ज्यमसंक्रान्तौ संक्रान्तौ पिंडसंयुतम् ।

प्रतिसंवत्सरं श्राद्धमेवं मासद्वयेऽपि चेति ॥

तथा क्षयाहव्यतिरिक्तेऽपि युगादौ मासद्वयेऽपि श्राद्धं कु-र्यात् ॥ तदुक्तं स्मृतिसंग्रहे—

योगादिकं मासिकं च श्राध्धं वापरपाक्षिकम् ।
मन्वादिकं तैर्थिकं च कुर्यान्मासद्वयेऽपि चेति ॥

अत्र सर्वमासविषयो अपरपक्षो गृह्यते ॥ सर्वेष्वेवापरपक्षेषु दत्तं पितॄन् प्रीणातीति वचनेन न महालयापरपक्षः ॥

महालयाष्टकेचेति न कुर्याद्भानुलङ्घिते ।

इति वचनात् ॥ यत्राष्टकाकर्तव्यमुक्तं तत्र द्वादशाष्टका इति वाक्यात् यदि द्वादशाष्टकाः क्रियन्ते तदा मलमासे कार्या ॥ नान्यदा

मरीचिः—प्रतिमासं मृताहे च यच्छ्राद्धं प्रतिवत्सरम् ।
मन्वादौ च युगादौ च तन्मासोरुभयोरपीति ॥

[८५५] यत्तु जाबालिवचनं—

एकराशौ स्थिते सूर्ये यदि मासोऽधिको भवेत् ।
एकोद्दिष्टं तु पूर्वत्र न परत्र कदाचनेति ॥

अस्याप्ययमर्थः ॥ पूर्वमासनिमित्ताधीनमेकोद्दिष्टमन्यत्र न कुर्यादिति ॥ उत्तरे देवकार्याणि पवित्रारोपणनागपूजादिकुलधर्मप्राप्तानि यान्युत्तरे क्रियमाणानि न दुष्यन्ति न च लुप्तविधिकानि भवन्ति गृह्यपरिशिष्टात्—

मलं वदन्ति कालस्य मलमासविदो जनाः ।
न हि तत्र विशेषेज्यामन्यत्रावश्यकाद्विधेः ॥

आवश्यका दर्शपूर्णमासादि विधेरन्यत्र विशेषेज्यां मलमासे नाचरेत् ॥ यस्यामुत्तरे मासि क्रियमाणायां नास्ति विधिलोपः ॥ यथा वसन्ते विहितस्य ज्योतिष्टोमस्य द्वितीये वैशाखे क्रियमाणस्य वसन्त एव कृतत्वान्नास्ति विधिलोपः ॥

[८६६] यथा हारितः—

उपाकर्म तथोत्सर्गं काम्यमुत्सवमष्टकाः ।
मासवृध्धौ पराः कार्या वर्जयित्वा तु पैतृकम् ॥
ईशानस्य बलिं विष्णोः शयनं परिवर्तनम् ।
दुर्गेन्द्रस्थापनोत्थाने ध्वजोत्थानं च वज्रिणः ॥
पूर्वं च प्रतिषिध्धानि परत्रान्यच्च दैविकामिति ।
दमनारोपणं सर्पवलिः। अवरोहकर्म आग्रहायण्य इति॥

तथा चात्र वर्ज्यत्वेनोक्तं ॥ तदुच्यते परिशिष्टात्—

सोमयागादिकर्माणि नित्यान्यपि मलिम्लुचे ।
तथैवाग्रयणाधाने चातुर्मास्यादिकान्यपि ॥

मलिम्लुचे वर्जयेदिति शेषः तथा—

उपाकर्म च हव्यं च कव्यं पर्वोत्सवं तथा ।
उत्तरे नियतं कुर्यात् पूर्वे तन्निष्फलं भवेत् ॥

पराशरः—पक्षक्षयेऽर्कसंक्रान्तिर्यदा न स्यात्सितासिते ।
तदा तन्मासिकं कार्यमुत्तरे मासि कारयेत् ॥

तन्मासिकशब्देन यन्मासविशेषनामसंबन्धेन विहितं ॥

[८६७] यथा वैशाखे अक्षय्यतृतीयादिव्रतस्य तन्मलमासे वैशाखे अनारंभः ॥ ज्येष्ठे सावित्रीव्रतस्य आषाढे चातुर्मास्यव्रतानां श्रावणे जन्माष्टमीव्रतस्येत्यादीनामनारंभः ॥ तथा ग्रन्थान्तरे—

स्पष्टमासविशेषाख्यं विहितं वर्जयेन्मले इति ।

तथा आरब्धकाम्यकर्माणि समाप्तिकालादर्वाक् मध्ये पतितेऽधिमासेऽपि काम्यं कर्म कार्यं ॥ यथा चातुर्मास्यव्रतानां कार्तिकावधिकानां संकल्पितानां मध्ये परित्यागस्य संकल्प-

विरोधेन अन्याय्यत्वादित्यनन्तभट्टे ॥ काम्यानामारंभंसमाप्तिं च मलमासे न कुर्यात् ॥ तत्र पुराणस्मरणं—

असूर्या नाम ये मासा न ते वै मम संमताः ।
व्रतानां चैव यज्ञानामारंभाय समाप्तय इति ॥

कालादर्शेऽपि—व्रतारंभं समाप्तिं च कर्म काम्यं च पाप्मनः।
प्रायश्चित्तं च सर्वस्य मलमासे विवर्जयेत् ॥

पाप्मनः प्रायश्चित्तस्य वर्जनमतिक्रान्तं न कुर्यात् ॥ तदानीमुत्पन्नं कुर्यादेव ॥ [५६८] ज्योतिः पराशरः—

अग्न्याधानं प्रतिष्ठां च यज्ञदानव्रतानि च ।
वेदव्रतवृषोत्सर्गचूडाकरणमेखलाः ॥
माङ्गल्यमभिषेकं च मलमासे विवर्जयेत् ॥

प्रतिष्ठा देवारामतडागवापीकूपादीनां । यज्ञोऽग्निष्टोमादिः॥ दानानि महादानत्वेन यानि शास्त्रे प्रसिध्धानि षोडश॥ तथा जलघृतदधिक्षीरादिधेनवः ॥ यानगृहोभयतो मुखादि ॥ ग्रन्थान्तरे॥ व्रतानि काम्यानि ।तथा वेदव्रतानि व्रातिकादीनि च।वृषोत्सर्गः काम्यः न तु नैमित्तिकः॥तदाह बौधायनः॥अथ वृषोत्सर्जनं॥ तच्च द्विविधं ॥ काम्यं नैमित्तिकं च ॥एकादशाहे नैमित्तिकं॥ कार्तिक्यां वैशाख्यां ग्रहणे संक्रमेऽपि च क्रियमाणं काम्यं ॥ चूडाकर्म प्रसिध्धं॥ मेखलामौञ्जीबन्धनं॥ अभिषेको राज्याभिषेकः प्रथमः ॥ तानि वर्जयेत् ॥ तदाह वसिष्ठः—

वापीकूपतडागादिप्रतिष्ठा यज्ञकर्म च ।
न कुर्यान्मलमासे तु महादानव्रतानि च ॥

[५६९] गार्ग्यः—नामान्नप्राशनं चौलं विवाहं मौञ्जीबन्धनम् ।

निष्कामं जातकर्मापि काम्यं वृषविसर्जनम् ॥

न कुर्यादिति ॥ निष्कामं चतुर्थे मासि कुमारस्य ॥ मरीचिः—

गृहप्रवेशगोदानस्थानाश्रममहोत्सवान् ।
न कुर्यान्मलमासेऽपि गुरौ शुक्रे तथास्तगे ॥

आश्रमो वानप्रस्थयत्याश्रमः ॥ दैववशादतिक्रान्तमपि महोत्सवं मलमासे न कुर्यात् ॥ अतिपन्नं देवमहोत्सवमिति कालादर्शवचनात् ॥ मत्स्यः—

आधानं यज्ञकर्मापि प्रायश्चित्तव्रतानि च ।
न कुर्यान्मलमासेऽपि शुक्रगुर्वोरुपप्लवे ॥

उपप्लवः अस्तमयः ॥ [८७०] गार्ग्यः—

अनादिदेवतामिष्ट्वा शुचः स्युर्नष्टभार्गवे ।
मलमासेऽप्यनावृत्ततीर्थयात्रां विवर्जयेत् ॥

भार्गव इत्येतद्गुरोरप्युपलक्षणं ॥ तथा—

अस्तं गते गुरौ शुक्रे वृद्धे बाले मलिम्लुचे ।
उद्यापनमुपारंभं व्रतानां नैव कारयेत् ॥

स्मृतिसंग्रहे—आरंभं दर्शपूर्णेष्ट्योरग्निधानस्य चादिमम् ।
प्रतिष्ठाः पञ्च कूर्माद्याः मलमासे च वर्जयेत् ॥

कूर्मशिलाप्रतिष्ठाद्याः पञ्च ॥ ॥ गार्ग्यः—

नामकर्म च जातेष्टिं यथाकालं समाचरेत् ।
अतिपाते तु कुर्वीत प्रशस्ते मासि पुण्यदे इति ॥

श्रीमहाभारते—राज्ञोऽभिषेकः प्रथमः शुद्धकालमपेक्षते ।
प्रत्याब्दिकं तु नित्यत्वात् कालमात्रेऽपि वा भवेत् ॥

[८७१] अथ नित्यनैमित्तिकेष्वत्र विशेषमाह हारीतः—

अधिमासे न कर्तव्यं श्राद्धमभ्युदयं तथा ।
तथैव यत्काम्यकर्म वत्सरात्प्रथमादृते ॥

काम्यकर्म मलमासे नारभेत् ॥ वत्सरात्प्रथमादृते प्रथमसंवत्सरं विहाय आभ्युदयिकं श्राद्धं मलमासे न कर्तव्यं॥ प्रथमे संवत्सरे मलमासे प्राप्ते सपिंडीकरणं विहितं तदुत्तरदिने विहितमाभ्युदयिकं मलमासेऽपि कार्यं ॥

भ्राता वा भ्रातृपुत्रो वा सपिंडः शिष्य एव वा ।
सपिंडनक्रियां कृत्वा कुर्यादाभ्युदयं ततः ॥

आभ्युदयमाभ्युदयिकं श्राद्धं विश्वरूपाचार्येण विभागप्रकरणे निरूपितं ॥ तथा

सपिंडीकरणादूर्ध्वं यत्किंचित् श्राध्धिकं भवेत् ॥
इष्टं वाप्यथवा पूर्तं तन्न कुर्यान्मलिम्लुचे ।

तथापि अमावास्याश्राध्धे तु मलमासे मृतस्य द्वादशाहे कृतसपिंडने सति मलमासेऽप्यमावास्यारंभः स्यात् ॥

जातकर्माणि यच्छ्राध्धं दर्शश्राध्धं तथैव च ॥

इति व्यासवचनात् ॥ एवमधिमासनिर्णयः ॥ [८७२] पुनरत्रैव विशेषो ज्योतिःसिध्धान्ते—

घटकन्यागते सूर्ये वृश्चिके वाथ धन्विनि ।
मकरे वाथ कुंभे वा नाधिवासो विधीयते ॥

अस्यार्थः ॥ घटः तुलादिराशिषु कुंभान्तेषु स्थिते सूर्ये अधिमासः स्वभावतो नास्ति ॥ भाद्रपदामावास्यायां कन्यागतः सूर्यो भूत्वा अन्यां अमावास्यां विलङ्घ्य प्रतिपदि द्वितीयायां वा तुलां गच्छति तदा अश्विनोऽधिमासो भवति ॥

तदा—कन्यागते सवितरि यान्यहानि तु षोडश ।

क्रतुभिस्तानि तुल्यानि पितृणां दत्तमक्षयं ॥ इति ॥

षोडशश्राध्धपूरणं आश्विनप्रतिपदि भवति ॥ तच्छ्राध्धं प्रति विद्यमानोऽपि मलमासो नास्तीत्यर्थः ॥ कन्यासंक्रान्तिनिमित्तानां श्राध्धानां षोडशसु दिवसेषु निमित्तत्वात् नैमित्तिकस्य श्राध्धस्य मलमासेऽपि न प्रतिषेधः ॥

यथाह प्रजापतिः—

न कुर्यादधिके मासि काम्यं कर्म कदाचन ।

त्यक्त्वा नैमित्तिकं श्राध्धं तध्धि तत्रैव कीर्तितमिति ॥

आर्यप्रतिपच्छ्राध्धं तु आश्विनप्रतिपन्निमित्तत्वेन पूर्वमासे न स्यात् पितृकत्वेन उभयोर्वा स्यात् ॥ अथ यस्मिन्वर्षे आश्विनोऽधिमासो भवति तस्मिन्वर्षे द्विसंक्रान्तमासः संभवेत् ॥ मलमास इति क्षयाख्य इति कथ्यते ॥ तावद्ग्रन्थान्तरे—

संक्रान्तिद्वययुङ्मासो मलमासः क्षयस्तथा ।

संक्रान्तिद्वययुक् योगो यस्येति विग्रहः ॥ मासः सितादिश्चान्द्र एव ॥ यस्मिन्मासे रवी राशिद्वयवान् भवेत् स मलमास इति ॥ तदुक्तं सत्यव्रतेन—

राशिद्वयं यत्र मासे संक्रमेत दिवाकरः ।

नाधिमासो भवेदेष मलमासस्तु केवल इति ॥

असावधिमासो न भवति ॥ केवलमाससंज्ञा तस्येत्यर्थः ॥ ८७३ तथा काठकगृह्ये—

यस्मिन्मासे न संक्रान्तिः संक्रान्तिद्वयमेव वा ।

मलमासः सविज्ञेयो मासस्त्रिंशत्तमो भवेत् ॥

कुत्रचित्तु मासः स्यात्तु त्रयोदश इति पाठ ॥ अयं द्वि-संक्रान्तिमासः क्षयसंज्ञक इति ॥ तदुक्तं ज्योतिः सिद्धान्ते—

अशंक्रान्तमासोऽधिमासः स्फुटः स्यात्
द्विसंक्रान्तिमासः क्षयाख्यः कदाचित् ।
क्षयः कार्तिकादित्रयं नान्यतः स्या-
त्तदा वर्षमध्येऽधिमासद्वयं च ॥

द्विसंक्रान्तमास इति यस्मिन्मासे रवेः संक्रान्तिद्वयं भवति स साकलकर्महृत् ॥ मलमासः क्षयाख्य इति वा स क्षयमासः कार्तिकादिषु त्रिष्वेव मासेषु भवेत् ॥नान्यत्र॥ य-स्मिन्वर्षे क्षयमासो भवति तदा तस्मिन्वर्षमध्ये क्षयमासा-त्पूर्वत्रये च एकोऽधिमासः उत्तरत्र भागे एवमधिमासद्वयं भवतीत्यन्वयः ॥ एवं त्रयोदशमासात्मके वर्षे अधिमासशब्दः क्षयमासादूर्ध्वभाविअसंक्रान्तमासे प्रवर्तते न पूर्वभाविनि ॥ तदुक्तं तत्रैव—

एकत्र मासद्वितयं यदि स्याद्वर्षाधिकस्तत्र परोऽधिमासः ।
त्रयोदशं तु श्रुतिराह चेदंचतुर्दशः क्वापि न चास्ति दृष्टः ॥ इति ॥

यदा आश्विनादिषट्के असंक्रान्त एकः चैत्रादिषट्के अ-न्यः तदा वचनान्तरेणापि द्वितीयोऽधिमासः ॥ [८७४] तथा च ब्रह्मसिद्धान्ते—

चैत्रादर्वाङ्नाधिमासः परतस्त्र्यधिको भवेत् ।
दृष्टा हि सर्वशास्त्रेषु तस्मिन्पूर्तिस्त्रयोदशी ॥ इति ॥

तस्मिन्नुत्तरास्मिन्नेव त्रयोदशी पूर्तिः न पूर्वस्मिन्निति ॥ यदा आश्विनादिषट्क एव क्षयमासात्पूर्वं पश्चाच्चैवमधि-

मासद्वयमितिचोक्तं ॥ तदाप्यधिमाससंज्ञः पर इति ॥ चैत्रादिषट्के अधिमासद्वयं न भवत्येव ॥ तस्य क्षयमासस्योभयपार्श्ववृत्तित्वात् क्षयमासवर्षमध्येतूत्सवमङ्गलादिषु द्वावसंक्रान्तरुपावधिमासौ क्षय इति त्रयं त्याज्यं ॥ तदुक्तं ज्योतिः शास्त्रे -यद्वर्षमध्ये त्वधिमासयुग्मंतत्कार्तिकादित्रितये क्षयाख्ये। मासत्रयं त्याज्यमिदं प्रयत्नाद्विवाहयज्ञोत्सवमङ्गलेषु ॥इति॥

[८७५]एवं दीपिकापि ॥ तत्र द्वावधिमासकौक्षय इति त्याज्यं त्रयं कर्मसूद्वाहेश्र्युत्सवमङ्गलेषु चेति ॥ तथा ग्रन्थान्तरे—

यस्मिन्मासो द्विसंक्रान्तोऽधिकं मासद्वयं तदा ।
तद्धि मासत्रयं दुष्टं सर्वेषु शुभकर्मसु ॥

यस्मिन्वर्षे द्विसंक्रान्तो मासः तस्मिन्नधिकमासद्वयं भवति ॥ शेषं सुगमं ॥ तथा तस्मिन्वत्सरे असंक्रान्तमासद्वयं। संक्रान्तिद्वययुक्त एको मासस्तत्राद्यः असंक्रान्तः संसर्पसंज्ञः द्विसंक्रान्तोअहंस्पतिसंज्ञोऽन्योऽधिमास इति कालनिर्णयकृद्भिरभिधानपूर्वं प्रसिद्धविवाहादिकर्मसु त्रयोऽपि निन्दिताः इति ॥ तथा च बृहस्पतिज्योतिर्ग्रन्थेऽपि—

यस्मिन्मासे न संक्रान्तिः संक्रान्तिद्वयमेव वा ।
संसर्पांहस्पती मासावधिमासश्च निन्दिताः इति ॥

संसर्पांहस्पती संज्ञे इति वचनात् ॥

दर्शद्वयेऽधिके यस्मिन् सौरे संसर्पको भवेत् ।
अंहस्पतिर्यदैकस्मिंश्चान्द्रे द्वौ संक्रमौ तदा ॥

अंहो मलः तत्पतिरिति ॥ [८७६] तथा यत्तु—

मासद्वयेऽब्दमध्ये तु संक्रान्तिर्न यदा भवेत् ।

प्राकृतस्तत्र पूर्वः स्यादधिमासस्तथोत्तरः ॥

यस्मिन्वर्षे द्वावसंक्रान्तौ भवतः तयोः पूर्वः प्राकृतः शुद्धः ॥

तथा–संसर्पाऽहस्पती चेति द्विविधावधिमासकौ ।

मासौ पूर्वपरौ दुष्टौ परपूर्वौ शुभावहौ ॥

इत्यंहस्पतेः पूर्वोऽधिमासः शुभावह इति ॥ अत्रोच्यते॥ अत्र च ग्रन्थान्तरेषु च क्षयमासादिमासस्यासंक्रान्तस्य यत् शुभत्वाभिधानं तत् द्वात्रिंशन्मासोर्ध्वभाविमलमासकालादर्वाक् भावित्वेन तस्मिन्मलमासशब्दाप्रवृत्तिरित्येवं परं स्वकालागतस्याधिमासस्य मलत्वाभिधानात् ॥ तथा चोक्तं परिशिष्टे–

मलं वदन्ति कालस्य मासं कालविदोऽधिकम् । इति ॥

एतदभिप्रायेण जाबालिः–

एकस्मिन्नपि वर्षे वा द्वौ मासावधिकौ यदि ।

पूर्वो मासः प्राकृतः स्यादधिमासस्तथोत्तरः ॥

अधिमासादारभ्य द्वात्रिंशन्मासादूर्ध्वं योऽसंक्रान्तः ततोर्वाग्योऽसंक्रान्तःस प्राकृतः शुद्धो नाधिमास इति कालनिर्णयकृद्भिर्व्याख्यातं च॥ यत्तु आचार्यैश्छन्दोविरोधात् पूर्वाऽसंक्रान्तेऽधिमासशब्दः प्रयुक्तः ॥ स त्वसंक्रान्तवचन एव न मलमासवचन इति दीपिकाविवरणे ॥ एवं शुभत्वबुद्ध्या द्वात्रिंशन्मासादूर्ध्वं कालभावी सन्नपि यः क्षयाख्यात्पूर्वोऽसंक्रान्तः स शुद्ध इति मूलग्रन्थदर्शनात् दीपिकाकारेणाऽप्यभाणि ॥

[८७७] बहुकालतोऽपि भवन्पूर्वाधिमासः शुभः ॥

एवं पूर्वोदाहृतवचनैः शुभकर्मसु निन्दितेऽपि पूर्वासंक्रा-

न्ते शुभशब्दं प्रयुञ्जानानामयमाशयः ॥ क्षयाख्योत्तराधिमा-
सापेक्षया पूर्वासंक्रान्तस्य शुभत्वमिति ॥ सर्वं कर्मार्हशुद्धता-
भिधाने तु

मासत्रयं त्याज्यमिदं प्रयत्नाद्विवाहयज्ञोत्सवमङ्गलादिषु॥

इत्यादि ज्योतिःशास्त्राद्युक्तं विरुध्यते ॥ किं च—

मासः कन्यागते भानावसंक्रान्तो भवेद्यदि ।
दैवं पित्र्यं तदा कर्म तुलास्थे कर्तुरक्षयमिति ॥

ज्योतिः पितामहस्मरणेनापि देवपितृसंबन्धि कर्म तूत्त-
रत्रमास्यभिहितं ॥ कन्यागते भानावसंक्रान्त आश्विन एवे-
ति ॥ आश्विनस्यासंक्रान्तत्वं क्षयमासे भाविनि संभाव्यते ॥
नान्यथा ॥ [७४]यत उक्तं ज्योतिः सिद्धान्ते—

घटकन्यागते सूर्ये वृश्चिके वाथ धन्विनि ।
मकरे वाथ कुंभे वा नाधिमासो विधीयत इति ॥

कन्यादिराशिस्थिते सूर्ये स्वभावात् अधिमासस्य निषे-
धात् अनन्तभट्टेनाप्याश्विनस्याधिमासतामभिधाय तत्र का-
म्यं न कुर्यादित्युक्तं ॥ ग्रन्थसमापनसमये कार्तिकादि असं-
क्रान्तेष्वेवं बोध्यव्यं ॥ तत्रासंक्रान्तेऽपि प्रतिपद्विहितं दीपो-
त्सवाख्यं कर्म भवति शुद्धे मासि प्रारब्धत्वात् प्रारंभान्नियम
इति कात्यायनः ॥ तथा—

संलग्नमेतत्कर्तव्यं दीपोत्सवदिनत्रयम् ।
विभेदं कुरुते यस्तु नरके स निमज्जति इति ॥

दिनत्रयं चतुर्दश्यादीति निरूपितं दीपोत्सवनिर्णये ॥ इ-
ति निर्णयः ॥ [७५]क्षयमासात्पूर्वासंक्रान्तमासविषयं किंचिदु-

क्त्वा क्षयमासविषयमप्यभिधीयते ॥ द्विसंक्रान्तेऽपि मलमा-सवद्वर्ज्यावर्ज्यविवेकः स्यात् ॥ तदुक्तं—

मलमासे द्विसंक्रान्तेः शंक्रान्तिरहितेऽथ वा ।
कार्यवर्ज्यविवेकः स्यादिति शास्त्रविदो विदुः ॥

संक्रान्तिरहिते मासे यथा कार्यवर्ज्यविवेकः तथैव द्वि-संक्रान्ते संक्रान्तिद्वययुक्तेऽपि मासे स्यादिति धर्मशास्त्रविदो विदुः काठकगृह्येऽपि—

रविसंक्रमहीने यो वर्ज्यावर्ज्यविधिः स्मृतः ।
स एव तु द्विसंक्रान्ते मलमासेऽप्युदीरित इति

अतः मलमासोक्तं कर्तव्याकर्तव्यविधानं सर्वत्राप्यनुस-न्धेयमित्येवं कालादर्शेऽप्युक्तं ॥ प्रथमाब्दिकं मलमासवद-त्रापि भवति ॥ द्वितीयाब्दिकादौ विशेषः स्मृत्यन्तरात्—

एक एव यदा मासः संक्रान्तिद्वयसंयुतः ।
मासद्वयगतं श्राद्धं मलमासेऽपि शस्यते ॥ इति ॥

द्विसंक्रान्तिकृते अमुकेऽमुकैकत्वमासे इत्यभिधाय पश्चा-त्स्वमाससंबन्धप्रयोगः ॥ गालवोऽपि—

वर्षे वर्षे तु यच्छ्राद्धं मातापित्रोर्मृतेऽहनि ।
मासद्वयेऽपि तत्कुर्याद्व्याघ्रस्य वचनं यथा ॥

अत्र मासद्वयेऽपि संक्रान्तिद्वययुक्तत्वात् मासद्वयात्मके क्षयाव्हमासे इत्यर्थः ॥ इति व्याख्यातं निबंधान्तरे ॥ अत्रैव विशेषः ॥ क्षयमासमध्ये मरणे सति सांवत्सरिकादौ मरण-मासज्ञानोपायः ॥ क्षयमासस्थांतिथिं द्विधाविभज्य पूर्वार्धे म-रणं चेत्पूर्वो मासः द्वितीयार्धे चेदुत्तरो मासो ज्ञेयः ॥

१८० तथा चोक्तं—

तिथ्यर्धे प्रथमे पूर्वो द्वितीयेऽर्धे तदुत्तरः ।
मासाविति बुधैश्चिन्त्यौ क्षयमासस्य मध्यगाविति ॥

एवं पक्षः ॥ शुक्ले शुक्लः कृष्णे कृष्णः इति ॥ तत्र जन्मनि प्रतिवर्षं जन्मदिवसोत्सवेऽप्येवं ॥ एवं दीपिकापि—

नष्टानां क्षयमासगासु तिथिषु प्रागन्त्ययोरर्धयो-
र्ग्राह्यास्तत्तिथयः क्षयाहविधये प्रागूर्ध्वमासास्थिताः ।
एवं तद्व्रतवर्धनेऽपीति ॥

अत्र काम्यविषयो विशेषः ॥ काम्यस्य कर्मणः क्षयमासे प्रथमारंभं न कुर्यात् द्वितीयारंभं कुर्यात् ॥ आरब्धं च समापयेत् ॥ तदुक्तं काठके—

प्रवृत्तं मलमासात्प्राग्यत्काम्यमसमापनम् ।
आयाते मलमासेऽपि तत्समाप्यमसंशयमिति ॥

अन्यथा कार्तिकस्य क्षयमासान्तःपातिचातुर्मास्यव्रतानामसमाप्तिः प्रसज्येत ॥ पौषस्य क्षयमासान्तःपातिपूर्ववर्षे पौषे प्रारब्धस्य माघस्नानव्रतस्य पुनरनारंभः प्रसज्येत ॥ प्रारंभान्नियमो दोषश्चासमाप्तौ स्यादिति कात्यायनः ॥

इति क्षयमासनिर्णयः ॥

---

कृतेऽचलद्विवेदेन ग्रन्थे निर्णयदीपके ।
निरूपितो निर्णयोऽत्र क्षयमासाधिमासयोः ॥

---

## [८८१] अथ गुरुशुक्रयोर्मौढ्यनिर्णयः

मौढ्यं नामास्तः सूर्यमण्डलप्रवेशनं ॥ तयोरपि सूर्यमण्डलप्रवेशे बाल्ये वृद्धत्वे च मलमासेवर्ज्यत्वेनोक्तानि कर्माण्यत्रापि न कुर्यात् ॥ तदुक्तं कालादर्शे—

मलमासे निषिद्धानि कर्माण्यत्रापि वर्जयेदिति ।

नारदीयेऽप्युक्तं—

यदा रवेर्मण्डलमेति काव्यो विनष्टतेजा गुरुरप्यथैवम् ।
कालः स दीक्षाव्रततीर्थयात्राविवाहयज्ञोत्सवनाशहेतुः॥

विनष्टतेजा इत्यनेन वृद्धत्वं बाल्यत्वं च सूचितं ॥

तथा ब्रह्मसिद्धान्ते—

रविणासत्तिरन्येषां ग्रहाणामस्त उच्यते ।
ततोऽर्वाग्वार्धकं मौढ्यादूर्ध्वं बाल्यं प्रकीर्तितम् ॥

मौढ्यात्पूर्वावस्था वार्धकं उर्ध्वावस्था बाल्यमित्यर्थः ॥

बाल्यवार्धकयोः प्रमाणमुक्तं [८८२] ब्रह्मसिद्धान्ते—

पक्षं प्राग्दिशि वृद्धत्वं पश्चात्पञ्चदिनं कवेः ।
शैशवं प्राक् च पञ्चाह पश्चाद्दशादिनं स्मृतम् ॥

प्राक्दिशि पूर्वस्यां वृद्धत्वं पश्चाद्वारुण्यां पञ्चदिनानि वृद्धत्वं ॥ तथा प्रागुदिते पञ्चाहं शैशवं ॥ पश्चादुदिते दशादिनं शैशवं ॥ एतत्कवेः शुक्रस्य ॥ गुरोस्तु प्राक् पश्चादपि बाल्यत्वं वृद्धत्वं च पक्षमिति ॥ तदुक्तं तत्रैव—

शैशवं वार्धकं पक्षं प्राक् पश्चाच्च बृहस्पतेरिति ।

अत्र पक्षान्तरं बार्हस्पत्ये—

प्राक् पश्चादुदितः शुक्रः पञ्च सप्त दिनं शिशुः ।

विपरीतं तु वृद्धत्वं तद्वदेव गुरोरपि ॥

दामोदरीये तु—

प्राक् बालो दिवसत्रयं दशदिनं पश्चात्सितो वृद्धतां
पक्षे वासरपञ्चके च लभते पक्षे गुरुः सर्वतः ।
तत्पश्चाद्गुरुशुक्रयोर्विमलयोः कुर्याद्विवाहं सिते
कृष्णे वासरपञ्चकं च शिवदं न स्याद्दशाहः पर इति॥

९८३ एवं रत्नमालायां—

प्रागुद्गतः शिशुरहस्त्रितयं सितः स्या-
त्पश्चाद्दशाहमथ पञ्च दिनानि वृद्धः ।
प्राच्यां च पक्षममरेन्द्रगुरुस्तु पक्षं
प्रागप्यवागपि वदन्ति वसिष्ठमुख्याः ॥

इत्यादिवाक्येषूक्ताः कालास्ते देशभेदेन आपत्कालभेदेन वा लघुकाला ग्राह्याः ॥ तदुक्तं मिहिरेण—

बहवो दर्शिताः काला ये बाल्ये वार्धकेऽपि वा ।
ग्राह्यास्तथाधिकाः शेषा देशभेदादुतापदि ॥

देशभेदेन विशेषमाह गार्ग्यः—

शुक्रो गुरुःप्रागपराक् च बालो विन्ध्ये देशेऽवन्तिषु सप्तरात्रम् ।
वङ्गेषु हूणेषु च षट् च पञ्च शेषे च देशे त्रिदिनं वदन्ति ॥

वृद्धत्वमप्येतत्प्रमाणं अतो येऽधिकाः कालास्ते देशभेदेन व्यवस्थिताः इति ॥ तथा तीर्थे कालविशेषाभिप्रायं पक्षान्तरं ज्योतिःशास्त्रे ॥ पञ्च दिनानि वसिष्ठः ॥ शौनक एकदिनं ॥ दिनत्रयं गर्गः ॥ यवनमते पञ्चमुहूर्तानि भृगुसुत इत्याह ॥ ९८४ एवमुक्तप्रमाणेषु गुरुशुक्रमौढ्यवार्धकशैशवेषु

अग्न्याधानं प्रतिष्ठां चेति नामान्नप्राशनं चेति ॥ अस्तगे च गुरौ शुक्र इति मलमासानिषिद्धान्यत्रापि वर्जयेत् ॥ तथा च दीपिका—

आधानाद्युदितं च तन्न तनुयाच्छुक्रस्य बाल्यादिके ॥इति॥

एवं च गुरुशुक्रास्तादिवत्सिंहस्थे जीवे धनुर्मीनस्थेऽर्के च विवाहादिशुभकर्म न कुर्यात् ॥ तदुक्तं व्यवहारसारे—

रविक्षेत्रगते जीवे जीवक्षेत्रागते रवौ ।
ऊढा वैधव्यमाप्नोति शुक्रस्य दुहिता यदि ॥

इति रविक्षेत्रं सिंहः ।जीवक्षेत्रं धनमीनौ ॥ न केवलं विवाहं किंतु चौलव्रतबन्धादीन्यपि न कुर्यात्॥ तदुक्तं लल्लेन—
सिंहस्थिते देवगुरौ न कुर्यात् विवाह चौलव्रतदीक्षणादीन् ।
यात्रा प्रतिष्ठाः क्रतुवास्तुपूजा धनुः स्थितेऽर्के झषके च तद्वत् ॥

८८५ तथा च वृद्धगार्ग्यः—

मीने धनुषि सिंहे च स्थिते सप्ततुरङ्गमे ।
क्षौरमन्नं न कुर्वीत विवाहं गृहकर्म चेति ॥

इत्यादिवचनैर्मीनास्थितेऽर्के कर्मणां निषेधाभिधानेऽपि चैत्राख्यकालविशेषे तूपनयस्यानुज्ञावचनानि ज्योतिःशास्त्रात्—

गोचराष्टकवर्गाभ्यां यस्य शुद्धिर्न जायते ।
तस्योपनयनं कार्यं चैत्रे मीनगते रवौ ॥

अत्र यस्य शुद्धिर्न जायत इत्यभिधानात् शुद्धौ सत्यां गार्ग्योक्ते माघादिपञ्चके कार्यं ॥ तेषु अशुद्धौ तत्रेति ज्ञेयं ॥ अशुध्द्या कालातिक्रमणे तु पुनस्तत्रैवोक्तं—
चैत्रे मासे भास्करे मीनसंस्थे कुर्यान्मौञ्जीबन्धनं वाडवानाम्

शुक्रस्यास्तं वाक्पतेर्नावलोक्यं नैव ग्राह्या चन्द्रगुर्वोस्तु शुद्धिः ॥

एतदभिप्रायतः ॥

माघादिमासषट्केषु मेखलाबन्धनं मतम् ।

इति वृद्धगार्ग्येण मासषट्कमुक्तं ॥ तथा कुलाचारतश्चूडाकर्माप्यत्रकार्यं ॥ [८८] तदुक्तं रत्नमालायां–

क्षौरर्क्षेषु स्वकुलविधिना चौलमाहुर्मुनीन्द्राः ॥ इति ॥

आश्वलायनः ॥ तृतीये वर्षे चौलं यथा कुलधर्मं वा मौञ्जीबन्धनं चौलं च सिंहस्थिते देवगुरौ न कुर्यात् ॥ अतस्तत्रैवोक्तं–

उद्यानचूडाव्रतबन्धदीक्षाविवाहयात्रा च वधूप्रवेशः ।

तडागकूपत्रिदशप्रतिष्ठा बृहस्पतौ सिंहगते न कुर्यात् ॥

इति वचनात् ॥ तथा मकरस्थेऽपि गुरौ विवाहादि न कुर्यादित्युक्तं ज्योतिषे–

सिंहस्थं च मकरस्थं गुरुं यत्नेन वर्जयेत् ।

विवाहादाविति शेषः ॥ अत्र विशेषमाहतुर्वराहलल्लौ–

(आर्या) गोदावर्युत्तरतो यावद्भागीरथीतटं याम्यम् ।

सिंहस्थे देवगुरौ नैव विदध्याद्विवाहादि ॥

आदिशब्दाद्व्रतबन्धचौलादीनां ग्रहणं ॥ अतः–

गङ्गाया उत्तरे कूले गोदावर्यास्तु दक्षिणे ।

विवाहादौ देवगुरुः सिंहस्थोऽपि न दुष्यतीति ॥

तथा–नर्मदापूर्वभागे तु शोणस्योत्तरदक्षिणे ।

गल्लक्याः पश्चिमे भागे मकरस्थो न दोषकृदिति ॥

[८८७] यत्तु त्रिविक्रमवचनं–

सिंहस्थेऽपि मघासंस्थं गुरुं यत्नेन वर्जयेत् ।
अन्यत्र सिंहभागे तु विवाहादिर्विधीयते ॥ इति ॥

एतद्गयात्रिविषये वायुपुराणे विशेषः—

गयायां सर्वकालेषु पिंडान्दद्याद्विचक्षणः ।
अधिमासे जन्मदिने अस्ते च गुरुशुक्रयोः ॥

एतच्च परंपरया नादृतं ॥ सिंहमात्रास्थिते गुरौ विवाहादिशुभकर्मसु त्याज्यताभिधायकानां बहूनां वचनानां दर्शनात् गुरुशुक्रयोः ॥

न त्यक्तव्यं गयाश्राद्धं सिंहस्थे च बृहस्पतौ ।

अत्र श्राद्धस्य यात्रापूर्वकत्वात् गयां प्रति यात्रा अनिषिद्धेत्यर्थः ॥

यत्तु वचनं—नीचस्थे वक्रसंस्थेऽप्यतिचरगते बालवृद्धास्तगे वा
सन्न्यासो यज्ञयात्रा व्रतनियमविधिः कर्णवेधोऽपि दीक्षा ।
मौञ्जीबन्धोऽङ्गनानां परिणयनविधिर्वास्तुदेवप्रतिष्ठा
वर्ज्याः सद्भिः प्रयत्नात्रिदशपतिगुरौ सिंहराशिस्थिते च ॥

नीचस्थो मकरस्थः ॥ अत्र मकरस्थबालवृद्धास्तविषयेषु गुरुः शुभकर्मसु त्याज्य इत्युक्तं निरूपितं च प्राक् ॥ वक्रातिचारयोर्वादिनां विप्रतिपत्तिः ॥ अत्र केचन आहुः—

“सर्वराशिषु वक्रातिचारगते गुरौ शुभकर्म न कार्यं ॥ अपरे तु सिंहराशेर्वक्रातिचारगते सिंहराशिस्थिते च देवगुरौ विवाहादि प्रागुक्तं शुभकर्म न कार्यमिति वदन्ति ॥ अत्र विशेषो ज्योतिःशास्त्रे—

नायाति पूर्वराशिं चेदतिचारगतो गुरुः ।

शुभकर्म तदा हन्ति सर्वं आहुर्मनीषिणः ॥

अतिचार इति वक्रस्याप्युपलक्षणं ॥ तथा भूपालवल्लभे—

यदा नैति पुनस्तस्मिन्लुप्तसंवत्सरस्तु सः ।
तत्रोद्वाहादिकर्माणि न कुर्याच्छुभवाञ्छकः ॥

स इति गुरुः यदा वक्रातिचारगतः पूर्वराशिं एति आगच्छति तदा वक्रातिचारगतेऽपि उद्वाहादि कर्म कुर्यादिति ॥ नन्वेतत्सिंहस्थेऽपि समानमिति चेत् मैवं वद ॥ सिंहस्थिते जीवे शुभकर्मणां वर्ज्यत्वाभिधानादतस्ततः सिंहाद्वक्रातिचार गतेऽपि गुरौ विवाहादिशुभकर्माणि न कार्याणीति चिरन्तना ज्योतिर्विद आहुः इति ॥ "एवं जीवस्य वक्रातिचारयोः कर्मणां विधायकानि प्रतिषेधकानि च वाक्यान्युक्तविषये व्यवस्थाप्यानीति ॥ यत्तु वचनं—

वक्रातिचारगाश्चैव भौमाद्याः पञ्च खेचराः ।
पूर्वराशेः फलं दद्युर्वर्जयित्वा बृहस्पतिमित्यादि ॥

तद्गोचरगतशुभाशुभादिफलावबोधपरं ॥

इति गुरुशुक्रास्तनिर्णयः ॥

---

## अथोपनयनकालो निर्णीयते ॥

गर्भाधानाज्जन्मतो वा विप्राणां वासरेऽष्टमे ।
राज्ञामेकादशे मौञ्जीबन्धनं द्वादशे विशाम् ॥

याज्ञवल्क्यः—गर्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्योपनायनम् ।
राज्ञामेकादशे विशां द्वादशे च यथाकुलम् ॥

अत्र मेधादिकामनया वृद्धगार्ग्यः कालान्तरमाह—

मेधाकामी पञ्चमेऽब्दे वीर्यकामी च सप्तमे।
धनकाम्यष्टमे कुर्यात् विप्रादीनामुपायनम् ॥

मेधाकामी ब्राह्मणः पञ्चमेऽब्दे। वीर्यकामी क्षत्रियः सप्तमेऽब्दे। धनकामी वैश्योऽष्टमे इति ॥ तथा निबन्धान्तरे—

पञ्चमे वत्सरे प्राप्ते ब्राह्मणानां विशेषतः।
सप्तमे वाष्टमे वापि क्षत्रियाणां विशां तथा ॥
त्रिगुणेष्वपि कुर्वीत विप्रादीनामुपायनमिति ॥

त्रिगुणेष्वपीत्युक्तं ॥ तेन पञ्च त्रिगुणाः पञ्चदश ॥ पञ्चदशाब्दो विप्रस्य गौणः कालः ॥ एवमेकविंशत्यब्दः क्षत्रियस्य। चतुर्विंशत्यब्दो विशामिति॥ अत ऊर्ध्वं उपनयनादि न कुर्यात् ॥ ८० तदाह वसिष्ठः ॥ आषोडशाद्वर्षाद्ब्राह्मणस्यानतीतः कालः आद्वाविंशात्क्षत्रियस्याचतुर्विंशाद्वैश्यस्यात ऊर्ध्वं पतितसावित्रीका भवन्ति नैनानुपनयेयुरिति गार्ग्येयगृह्यात् ॥ उपनयनं व्याख्यास्यामो गर्भाष्टमेषु ब्राह्मणमुपनयीत। गर्भैकादशेषु राजन्यं। गर्भद्वादशेषु वैश्यं ॥ वसन्तो ग्रीष्मः शरद ऋतवो वर्णानामानुपूर्व्येणेति ॥

तथा कालादर्शे—

वसन्तो ब्राह्मणानां स्याद्राज्ञां ग्रीष्मो विशां शरत्।
उपानयनकालः स्यात्सर्वेषामुत्तरायणे ॥

तथा—विप्रस्य क्षत्रियस्यापि मौञ्जीस्यादुत्तरायणे।
दक्षिणे तु विशां कुर्यान्नानध्याये न संक्रमे॥ गार्ग्यः—
विप्रं वसन्ते क्षितिपं निदाघे वैश्यं घनान्ते व्रतिनं विदध्यात्।

माघादिशुक्लादिकपञ्च मासाःसाधारणा वा सकलद्विजानाम्॥
वृद्धगार्ग्यः—माघादिमासषट्केषु मेखलाबन्धनं मतम् ।

चूडाकरणमन्नं च श्रावणादौ विवर्जयेत् ॥

श्रावणादौ सिंहधनुर्मीनेषु चौलान्नप्राशनादि न कार्यमुक्तकालेऽपीति ॥ [८९१] ननु उपनयने तूत्तरायणस्य स्वतंत्रकालत्वं न संभवति ॥ यथा अमावास्यायां पितृणां श्राद्धं कुर्यादपराण्हे पितृणां श्राद्धं कुर्यादिति कालद्वयविधानेऽपि अमावास्याकालस्य स्वावयवभूतापराण्हद्वारा साधनत्वेऽमावास्याविधेः सार्थकत्वं तथैवोत्तरायणस्य स्वावयवभूतवसन्तादिद्वारा साधनत्वे उत्तरायणस्य विधेः सार्थकत्वमिति मिलितस्यैव साधनत्वं भवति ॥ मैवं ॥ अपराण्हस्य बहुविधसंबान्धित्वात्किमीयापराण्ह इत्यपेक्षायाममावास्याविधिः अमावास्यासंबन्धिविषयः सार्थको भवति ॥ वसन्तादिकालस्य तु उत्तरायणानुत्तरायणसंबन्धाभावात् न तथा मिलितस्य साधनत्वं ॥ किंतु उपनयनविधिबलादेवोदगयनस्य स्वतंत्रस्य कालत्वं ॥ अतः वसन्तादिकालोदगयनकालयोर्विकल्पः ॥ उदगयनस्य रूपान्तरत्वाद्वा विधिः ॥ [८९२] तदुक्तं गृह्यपरिशिष्टे—

रूपान्तराद्विधिरयमुदीच्यायनगोचरः ।

अनयोः कालयोस्तस्माद्विकल्पं मुनयो विदुरिति ॥

सूर्यस्योदक्पथप्रवर्तनमुदगयनस्वरूपं मीनमेषयोः संक्रमणं वसन्तर्तुः॥ अथवा वसन्तश्चैत्रवशाखौ ॥ अतो रूपान्तरं॥ तस्माद्विप्रादेर्वसन्तादेरन्यत्र माघादिमासेषु उपनयनमिति सिद्धं ॥ तथापि ब्राह्मणादीनां वसन्तादिषु मुख्यं ॥ वसन्ते

। ब्राह्मणमुपनयेदित्यादि श्रुतेः ॥ तत्रासंभवे माघादिमासेष्विति ज्ञेयं ॥ व्रतबन्धे मासफलमाह सुरेश्वरः—

माघे मासि महाधनो धनपतिः प्राज्ञो बली फाल्गुने
मेधावी भवति व्रतोपनयने चैत्रे च वेदान्वितः ।
वैशाखे सुभगः सुखी पटुमतिर्ज्येष्ठे बलिष्ठो बुधोऽ
थाषाढेऽपि महाविपक्षविजयी ख्यातो महापंडितः ॥

अत्रोपयनप्रकरणे मासश्चान्द्र इति कालादर्शे त्रिकाण्डी—

चान्द्रो मासः श्रौतस्मार्तकर्मणोर्मासिकाब्दिके ।
विवाहभृत्यवृद्ध्यादावितरे परिकीर्तिता इति ॥

उपनयनं पूर्वाण्हे कुर्यात्तदुक्तं—

शुक्लपक्षे च पूर्वाण्हे सर्वे कुर्युरुपायनम् ॥

सर्वे शाखिनः पूर्वाण्हे उपनयनं कुर्युः ॥ ८८३ तदुक्तं दामोदरीयेऽपि ॥ पूर्वाण्हपक्षे सित इति दामोदरीये कालादर्शे च॥ एकादशी द्वादशी रिक्ता अनध्यायं विनोपनयनं कुर्यादित्युक्तं ग्रन्थान्तरे एकादशी द्वादशी च गृहीता ॥ यथा—

तृतीयैकादशी ग्राह्या पञ्चमी द्वादशी तथा ।
द्वितीयायां च मेधावी भवेदर्थबलान्वित इति ॥
रिक्तायामर्थहानिः स्यात्पौर्णमास्यां तथैवचेति ।

चतुर्थीनवमीचतुर्दश्यो रिक्तातिथयस्तासु उपनयनं न कुर्यात् ॥ गलग्रहेऽपि च न कुर्यात् ॥

त्रयोदश्यादिचत्वारि सप्तम्यादिदिनत्रयम् ।
चतुर्थी काकिनी प्रोक्ता अष्टावेते गलग्रहा इति ॥

तथा—न सप्तम्यां तथाष्टम्यां त्रयोदश्यां न पर्वणि ।

रिक्तासु न प्रतिपदि त्र्यहस्पृद्दिवसे तथा ॥

अथ वारानाह गार्ग्यः—

बह्वृचस्तु गुरोर्वारे यजुर्वेदजुषां कवेः ।
सामगानां धरासूनोरथर्वविदुषां रवेः ॥

कविः शुक्रः । धरासूनुर्मङ्गलः ॥ वराहमिहिरोऽपि—

गुरोः कवेर्लोहितस्य मिहिरस्य च वासराः ।
ऋग्यजुःसामाथर्वाणि पठतां स्युर्व्रते क्रमात् ॥

व्रते उपनयने । लोहितो भौमः । मिहिरः सूर्यः ॥ तथा—

बुधत्रयेन्दुवाराणि शस्तानि व्रतबन्धने ॥ इति गार्ग्यः॥

[८५४] तथा—भौमैनिवारौ मुक्त्वाऽन्ये वारा ग्राह्या उपानये ।

ऐनिः शनैश्चरः ॥ भौमशनिवारौ मुक्त्वा अन्ये वारा ग्राह्याः ॥ भौमोऽपि सामगानां प्रशस्त इति ॥

अथ नक्षत्राणि—मौञ्जीबन्धनमोक्षे च रेवत्यां श्रवणद्वये ।
हस्तादित्रितयेऽश्विन्यां मृगे पुष्ये पुनर्वसू ॥

तथा—हस्तत्रयश्रवणसार्पशिवर्क्षपूर्वा-
मूलेषु बह्वृचबटूपनयःप्रशस्तः ।
पुष्यादितिद्रुहिणभाश्विशशाङ्कपैष्ण
मैत्रोत्तरासु यजुषां रशनानिबन्धः ॥ इत्यादि ॥

स्वस्ववेदविषयो विशेषो ज्योतिःशास्त्राज्ज्ञेय इति ॥

यत्तु वसिष्ठगार्ग्याभ्यामुक्तं—

अनध्यायेऽपि कुर्वीत यस्तु नैमित्तिको भवेत् ।
सप्तमी शुक्लपक्षे तु तृतीया वाक्षया तथेति ॥

तत्प्रायश्चित्तार्थोपनयनविषयं ॥ यतस्तत्रैवोक्तं—

नैमित्तिकमनध्यायं कृष्णप्रतिपदं दिनम् ।
मेखलाबन्धने प्रायश्चित्तार्थं मुनयो विदुः ॥

[८५] वृद्धगार्ग्योऽपि—

स्वाध्यायवियुजो घस्राः कृष्णप्रतिपदादयः ।
प्रायश्चित्तनिमित्ते तु मेखलाबन्धने मताः ॥

घस्राः दिवसाः ॥ एतन्मौञ्जीबन्धनं द्वितीयं जन्म ॥ तदुक्तं—

मातुर्यदग्रे जायन्ते द्वितीयं मौञ्जीबन्धनात् ।
ब्राह्मणक्षत्रियविशस्तस्मादेते द्विजाः स्मृताः ॥ इति ॥

उपनयनानन्तरं साङ्गं सरहस्यं अर्थावबोधपर्यन्तं वेदमधीत्य समावर्तनमाचरेत् ॥ तदपि आपूर्यमाणपक्षे पुण्यनक्षत्रे कुर्यात् ॥ वेदमधीत्यस्नायादित्यापस्तंबः ॥

इत्युपनयनादि कालनिर्णयः ॥

---

## अथ विवाहकालः ॥

तावद्रत्नमालायां—

नाषाढप्रभृतिचतुष्टये विवाहो
नो पौषे न च मधुसंज्ञिते विधेयः ।
नैवास्तं गतवति भार्गवे न जीवे-
वृद्धत्वे न खलु तयोर्न बालभावे ॥

मधुश्चैत्रः स मीनयोगाद्वर्ज्यः ॥ पौषो धनुर्योगाद्वर्ज्यः ॥

[८६] तथा च वृद्धगार्ग्यः—

मीने धनुषि सिंहे च स्थिते सप्ततुरङ्गमे ।

क्षौरमन्नं न कुर्वीत विवाहं गृहकर्म च ॥ इति ॥

मकरे मेषे च प्रवृत्ते पौषस्यार्धं मघोरर्धं विवाहादौ न विवर्जयेत् ॥ कर्कसंक्रान्त्यप्रवृत्तौ दशमीपर्यन्तमाषाढेऽपि विवाहादि स्यात् ॥ इष्टस्त्र्यंशः शुचेरपि इति वचनात् मकरार्के सति पौषेऽपि स्यादिति अर्धं परित्यज्येति ज्योतिषे ॥ यदाह गार्ग्यः—

सौरो मासो विवाहादौ यज्ञादौ सावनः स्मृतः ।
आब्दिके पितृकार्ये च चान्द्रो मासः प्रशस्यते ॥

पितृकार्ये षण्मासिकादौ ॥ तथा देशाचारतस्तु काश्मीरे भाद्रपदे विवाहो दृश्यते ॥ पुष्करे कार्तिक इति ॥ तथा अन्हि चेत्पूर्वाण्हे निशिचेत्सर्वदा ॥ इत्यादि शुभवारमुहूर्तादि ज्योतिःशास्त्राज्ज्ञेयमिति ॥ [८७] एतत्कालपरीक्षणं धर्म्येष्वेव विवाहेषु नाधर्म्येष्विति गृह्यपरिशिष्टात् ॥ अधर्म्या ये विवाहा आसुरराक्षसपैशाचगान्धर्वास्ते सार्वकालिकाः निषिद्धाषाढादिमासेषु भवन्ति ॥ तेषां स्वरूपं तु—

आसुरो द्रविणादानात् गान्धर्वः समयान्मिथः ।
राक्षसो युद्धहरणात् पैशाचः कन्यकाच्छलात् ॥

ब्राह्मदैवआर्षप्राजापत्या धर्म्या विवाहा इति ॥ यथा—

ब्राह्मो विवाह आहूय दीयते शक्त्यलङ्कृता ।
तज्जः पुनात्युभयतः पुरुषानेकविंशतिम् ॥

तथा—यज्ञे ऋत्विज दैवे च आदायार्षस्तु गोद्वयम् ।
चतुर्दशप्रथमजः पुनात्युत्तरजश्च षट् ॥

सह धर्मं चरतां अर्थिने यो दीयते सप्राजापत्यस्तज्जः ष-

द् पुरुषान्पुनाति इति ॥ अत्र विशेषः ॥ आद्यगर्भोत्थयोः सु-
तदुहित्रोः ज्येष्ठे मासि विवाहादि न कुर्यात् ॥ ८९८ तदुक्तं र-
त्नमालायां—

आद्यगर्भदुहितुः सुतस्य वा ज्येष्ठमासि न हि पाणिपीडनम् ।

तथा—ज्येष्ठपुत्रदुहित्रोस्तु ज्येष्ठे मासि न मङ्गलमिति

ज्योतिःशास्त्रात् ॥ अत्र प्रासङ्गिकं स्मृत्यर्थसारात्—

विवाहे वितते तंत्र होमकाल उपस्थिते ।
कन्यामृतुमतीं दृष्ट्वा कथं कुर्वन्ति याज्ञिकाः ॥
स्नापयित्वा तु तां कन्यामर्चयित्वा यथाविधि ।
युञ्जानमाहुतीं हुत्वा ततः कर्म प्रवर्तयेत् ॥

स्मृतिचन्द्रिकायां—

विवाहहोमोपक्रान्ते यदि कन्या रजस्वला
त्रिरात्रं दम्पती स्यातां पृथक्शय्यासनाशनौ ॥
चतुर्थेऽहनि संस्नातौ तस्मिन्नग्नौ यथाविधि ।
विवाहहोमं कुर्यातामित्यादिस्मृतिसङ्ग्रहः ॥ इति ॥

ऋतुकालादर्वाग्विवाहयोग्या तथाप्यष्टवर्षा प्रशस्ता ॥

तदाह संवर्तः—अष्टवर्षा भवेद्गौरी नवमे नग्निका भवेत् ।
दशमे कन्यका प्रोक्ता द्वादशे वृषली स्मृता ॥

८९९ कश्यपः—सप्तवर्षा भवेद्गौरी दशवर्षा तु कन्यका ।
प्राप्ते च द्वादशे वर्षे कुमारीत्यभिधीयत इति ॥

कुचहीना नग्निकेत्याङ्गिराः ॥ नग्निकां विवाहयेत् ॥

तदुक्तं भविष्यत्पुराणे—

दद्याद्गुणवते कन्यां नग्निकां धर्मचारिणीम् ।

अपि नो गुणहीनाय नोपरुन्ध्याद्रजस्वलामिति ॥

तथा—विवाहश्चाष्टवर्षीयाः कन्यायाः शस्यते बुधैः ।

चतुर्णामपि वर्णानां प्रत्यूढा विहिताहिता ॥

आहिता अनृतुदर्शनेति—

त्रिंशद्वर्ष उद्वहेत्तु कन्यां द्वादशवार्षिकीम् ।

इति मनुः ॥ तदाहाङ्गिराः—

अप्राप्तरजसा गौरी प्राप्ते रजसि रोहिणी ।

तस्मादुद्वाहयेत्कन्यां यावन्नर्तुमती भवेत् ॥

यतः ॥ रजः पश्यन्ननूढायास्तत्स्वामी ब्रह्महा भवेत् ॥

इति स्मृत्यन्तरं ॥ ८०० कन्यायाः अदाने स्वामिनो दोषदर्शनात् स्वामी अधिकारी प्रदर्श्यते ॥ याज्ञवल्क्यः—

पिता पितामहो भ्राता सकुल्यो जननी तथा ।

कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः ॥

नारदः- पितादद्यात्स्वयं कन्यां भ्राता वानुमते पितुः ।

मातामहो मातुलश्च सकुल्या बान्धवास्तथा ॥

माता त्वभावे सर्वेषां प्रकृतौ यदि वर्तते ।

तस्यामप्रकृतिस्थायां दद्युः कन्यां स्वजातयः ॥ इति॥

अत्र विशेषः ॥ पितरि प्रेते यद्यसंस्कृता भ्रातरो भगिन्यश्च सन्ति तत्संस्कारकर्मणि भ्राताधिकारी ॥ तदुक्तं मिताक्षरायां—

असंस्कृतास्तु संस्कार्याः भ्रातृभिः पूर्वसंस्कृतैः ।

भ्रातरो भगिन्यश्चेति ॥ एवं पितर्यविद्यमाने तदपत्यानां विवाहपर्यन्तसंस्कारकर्मसु भ्रातॄणां पितृतुल्याधिकारित्वं ॥

तथा अत्र संस्कारार्थवृद्धिश्राद्धकर्मणि तस्यापि पितुरभावे पितृक्रमादेयं इति निरूपितं वृद्धिश्राद्धाधिकारनिर्णये ॥ पितामहादेः कन्यादानाधिकारेऽपि पौत्रादीनां संस्कारार्थवृद्धिश्राद्धाधिकाराभावात् ॥ यच्च कन्यादाने वृध्धिश्राध्धमुक्तं तत्कन्यालक्षणं संप्रदेयं वृध्धिश्राध्धेन असंस्कृतं न देयमिति ज्ञेयं ॥ [५०१] स्कन्दपुराणे—

आत्मीकृत्य सुवर्णेन परकीयां तु कन्यकाम् ।
धर्मेण विधिना दातु मसगोत्रोऽपि युज्यते ॥

अथ कन्यादानविधिमाह ऋष्यशृङ्गः—

वरगोत्रं समुच्चार्य प्रपितामहपूर्वकम् ।
नामसंकीर्तयेद्विद्वान्कन्यायाश्चैवमेव हीति ॥

तथा—देशं कालं च संकीर्त्य संप्रदानस्य चात्मनः ।
संप्रदेयं प्रयच्छन्ति कन्यादाने तु यत्रयम् ॥ इति ॥

इह दानवाक्यं ॥

गौरीं कन्यामिमां विप्र यथाशक्ति विभूषिताम् ।
गोत्राय शर्मणे तुभ्यं दत्तां विप्र समाश्रयेति ॥

दानखण्डात् ॥ अथ विवाहनक्षत्राणि ॥

मूलमैत्रमृगरोहिणीकरैः पौषणमारुतमघोत्तरान्वितैः ।
निर्विधाभिरुडुभिर्मृगीदृशां पाणिपीडनविधिर्विधीयते ॥ इति॥

लग्नादिकं ज्योतिः शास्त्राज्ज्ञेयं ॥ तथा परिणयार्थगमनादौ प्रतिशुक्रादिदोषो नास्ति॥ [५०२] तदुक्तं सुरेश्वरेण (आर्या)

स्वभवनपुरप्रवेशे देशानां विप्लवे तथोद्वाहे ।
न च वध्वा गृहगमने प्रतिशुक्रविचारणं नास्ति ॥

तथा द्विरागमने विशेषस्तेनोक्तः—

माघफाल्गुनवैशाखे शुक्लपक्षे शुभे दिने ।
गुर्वादित्यविशुध्धौ स्यान्नित्यं पत्नीद्विरागमः ॥

अत्र विशुध्धिवचनात् भर्तुः शोभने चन्द्रे शोभनदिवसे दीपावल्यादौ वा नेयेति ॥

## इति विवाहनिर्णयः ॥

---

## अथसोदरविषयो विशेषविवाहनिर्णयः

सोदराणामेकवर्षे विवाहं न कुर्यात् ॥ तदुक्तं मिहिरेण—

एकोदरप्रसूतानामेकस्मिन्नेव वत्सरे ।
विवाहो नैव कर्तव्यो गर्गस्य वचनं यथा ॥

लल्लेनाप्युक्तं—सोदराणां च भ्रातॄणां दशमासान्तरेण तु ।
विवाहो नैव कर्तव्यः श्रेयः कामेन जातु चित् ॥

अत्र वचने पुंसां भ्रातॄणां स्पष्टनिषेधेऽपि भ्रातृपुत्रो स्वदुहितृभ्यामित्येकशेषेण भ्रातॄणामिति पुल्लिङ्गनिर्देशात् पुत्र पुत्र्योरपि न भवेदकस्मिन्वर्षे ॥ [५०३] तथापि पुत्रपरिणयादूर्ध्वं तथा उद्वाह्य पुत्रीं च तथाविदध्यादित्यादिना वक्ष्यमाणेन पुत्र्यन्तरस्य विवाहाभिधानात् पुत्र्योरनिषेधः प्रतिभाति॥ द्वयोः पुत्र्योर्विषये तेनैव विशेष उक्तः—

पुत्रीपरिणयादूर्ध्वं यावद्दिनचतुष्टयम् ।
पुत्र्यन्तरस्य कुर्वीत नोद्वाहमिति सूरयः ॥ इति ॥

पुत्र्याः परिणयादूर्ध्वं यावद्दिनचतुष्टयं चतुर्थदिनसमाप्ति-

पर्यन्तं पुत्र्यन्तरस्यान्यस्याः पुत्र्याः विवाहं न कुर्वीतेति सूर-
यो वदन्तीति कालादर्शे व्याख्यातं ॥ तथात्र वराहमिहिरः—

उद्वाह्य पुत्रीं न पिता विदध्यात्पुत्र्यन्तरस्योद्वहनं कदाचित् ।
यावच्चतुर्थं दिनं मङ्गलस्य समापनं तावदसौ विदध्यात् ॥

तथा पुत्रं विवाह्य पुत्रीं न विवाहयेत् ॥ तथा चूडोप-
नयनविवाहादिषु उत्तरमाङ्गल्ये विहिते पूर्वं न कुर्यादिति च॥
तदाह वराहमिहिरः—

न पुंविवाहोर्ध्वमृतुत्रयेऽपि विवाहकार्यं दुहितुः प्रकल्पयेत् ।
न मुण्डनं चापि हि मुण्डनं च स्यान्मुण्डनान्मण्डनमन्वगेति॥

मुण्डनं मुण्डनं च चूडोपनयने ॥ मण्डनं विवाहः । मु-
ण्डनादन्वक् मण्डनमेति ॥ मण्डनादन्वक् मुण्डनं नेतीत्यर्थः॥

इति सोदरविषयो मङ्गलनिर्णयः ॥

---

## अथ परिवेत्तानिर्णयः

[८०४] अथाग्रजे अपरिणीते अनुजो यदि परिणयेत् स प-
रिवेत्ता इत्युच्यते ॥ तदाह मनुः—

दाराग्निहोत्रसंयोगं यः करोत्यग्रजे स्थिते ।
परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः ॥
परिवित्तिः परिवेत्ता च यथा च परिविद्यते ।
सर्वे ते नरकं यान्ति दातृयाजकपञ्चमा इति ॥

याज्ञवल्क्यः—नाग्नयः परिवित्तीनां न वेदा न तपांसि च ।
न च श्राद्धं कनिष्ठस्याप्येते स्युः फलदा न चेति ॥

तथा अग्रजे क्लीबादिदोषाद्विवाहाद्यावनधिकारिणि दोषाभावः ॥ तदुक्तं—

क्लीबे देशान्तरस्थे च व्रजिते पतिते तथा।
वेदशास्त्राविवर्णे च न दोषः परिविन्दतः ॥

स्मृत्यर्थसारेपि—षण्ढान्धबधिरस्तब्धजडगद्गदपङ्गुषु।
कुब्जवामनरोगार्त शुष्काङ्गिविकलाङ्गिषु ॥
ध्वस्तपुंस्त्वे च मत्ते च शयनस्थे निरिन्द्रिये।
मूकोन्मत्तेषु सर्वेषु न दोषः परिवेदने ॥ इति ॥

सहोदरे अधिकारिणि सति परिवेदनदोषः ॥ ८०५ यथाह—

परिवेदनदोषस्तु सोदर्येण भवेदिति।

तथा—पितृव्यपुत्राः संपन्ना अन्यजाताः सुताश्चये।
दाराग्निहोत्रसंयोगे न दोषः परिवेदने ॥

एवं स्मृत्यर्थसारे—

पितृव्यपुत्रे सापत्ने परदारसुतादिषु।
विवाहाधानयज्ञादौ परिवेदाद्यदूषणम् ॥

यत्तु याज्ञवल्क्येन दारग्रहणमात्रे एव परिवेदनमुक्तं नाग्निहोत्रादौ ॥

यथा—अग्रजानुमते कुर्यादग्निहोत्रं यथाविधि।
दारैस्तु परिवेद्यन्ते नाग्निहोत्रेण नेज्ययेति ॥

तज्ज्येष्ठानुमत्या नित्याग्निहोत्रविषयं ॥ यावज्जीवमाग्निहोत्रं जुहुयादिति श्रुत्यनुसृतं अनुमत्याप्यधिकारिण्यग्रजे कथमधिकारोऽनुजस्येति स्मृत्यर्थसारे ॥ अधिकारिणः पितुरनुज्ञानेऽपि न कुर्यात्पुत्र इति ॥ यदाहुः—

अग्निहोत्रं विवाहं च प्रयोगे प्रथमे स्थितः ।
न कुर्याज्जनके ज्येष्ठे सोदरे वाथ कुर्वति ॥

इति परिवेत्तानिर्णयः ॥

---

[५०६] अथ आवसथ्याधिकारी कालश्चाभिधीयते ॥

शाङ्खायनगृह्ये—

यत्रान्त्यां समिधमभ्यादध्यात्तमग्निमिन्धीत ॥ अन्त्यां समिधं अभिसमावर्त्स्यमानः समावर्तनकर्मणीति तमग्निमिन्धीतेति तस्याग्नेर्दीपनमात्रं मावसथ्यकर्म अपत्नीकत्वात् ॥ तथा वैवाह्यं वा ज्येष्ठे अधिकारिणि सति विवाहकाले अधिकृतस्याग्नेरनुजेन धारणमात्रं कार्यं ॥ नावसथ्यकर्म ज्येष्ठे सति आवसथ्यकर्मकरणे परिवेदनदोषापत्तिः ॥ तथा दायाद्यकाले एके ॥ दायाद्यकाले विभागकालेऽपि ज्येष्ठे सत्यनुजो न कुर्यात् ॥ अपत्नीकोऽपि न कुर्यादावसथ्यमिति ॥

तदुक्तं कारिकायां—

कुर्याद्विभागकाले वा विभागान्तेऽग्निधारणम् ।
रिक्थग्राही यथाज्येष्ठं सपत्नीकोऽधिकारवान् ॥

तथा प्रेते वा गृहपतौ स्वयं ज्यायान् ॥ गृहपतौ पितरि प्रेते वा स्वयं ज्यायान् ज्येष्ठश्चेत् पितृसपिंडनानन्तरमाधानं कुर्यात् ॥ [५०७] तदुक्तं तत्रैव—

प्रेते पितरि वा कुर्याज्ज्येष्ठपुत्रोऽग्निधारणम् ।
सपिंडयित्वा पितरमविभक्तोऽनुजैरपि ॥

एते निमित्तकालाः अमावास्यादावनिमित्ता अपि ॥
तदुक्तं कारिकायां—

अमायामनिमित्तेऽपि कालः स्यादधिकारिणः ।
वैशाख्यां स गुणस्तत्र तिथिनक्षत्रयोगतः ॥ इति ॥

तथा शाङ्खायनः ॥ वैशाख्याममावास्यायामन्यस्यां वा कामतो नक्षत्र एके ॥ अथावसथ्याधिकारिणः ॥ आधानाकरणे कार्ष्णाजिनिः—

कृतदारो गृहज्येष्ठो यो नादध्यादुपासनम् ।
चान्द्रायणं चरेद्वर्षं प्रतिमासमथापि वा ॥ इति ॥

## इति आवसथ्याधिकारी कालश्चनिर्णयः ॥

---

## अथ परिवित्त्यादीनां प्रायश्चित्तं ॥

कृच्छ्रातिकृच्छ्राविति वसिष्ठः ॥ हारीतेनाधिकमुक्तं ॥ ज्येष्ठे सति दाराग्निहोत्रादि कुर्वाणः कनीयान् परिवेत्ता भवति ॥ परिवित्तिर्ज्येष्ठः । परिवेदनी कन्या । परिदायी दाता । परियष्टा याजकः । ते सर्वे पतिताः संवत्सरं प्राजापत्येन कृच्छ्रेण पावयेयुरिति ॥ ५०८ शङ्खोऽपि ॥ परिवित्तिः परिवेत्ता च संवत्सरं ब्राह्मणगृहेषु भैक्ष्यं चरेयातामिति ॥ इदं तु बुद्धिपूर्वानुज्ञाविषयं ॥ प्रायश्चित्तस्य गुरुत्वात् यमोऽपि—

कृच्छ्रौ द्वयोः परिवेद्ये कन्यायाः कृच्छ्र एव तु ।
अतिकृच्छ्रं चरेद्दाता होता चान्द्रायणं चरेत् ॥ इति ॥

एते प्रायश्चित्ताचरणेन परिवित्त्यादयो योग्या भवन्ति ॥

अधर्माचरणं स्थितमेव ॥ तथा ज्येष्ठायां पुत्र्यामपरिणीतायां अनुजायाः पाणिग्रहणेऽपि दोषः ॥ तदुक्तं स्मृत्यन्तरे—

ज्येष्ठायां यद्यनूढायां कन्यायामूह्यतेऽनुजा ।
या साग्रेदिधिषूर्ज्ञेया पूर्वा तु दिधिषुः स्मृता ॥

अत्र विषये दिधिषूपतिदातृयाजकानां च गौतमेन संवत्सरं प्राकृतप्रायश्चित्तस्योक्तत्वात् परिवित्यादिवद्दोष इति ॥ वसिष्ठेन कृच्छ्रातिकृच्छ्रावुक्तौ यमोक्तं प्रायश्चित्तं भवति ॥

## इति ज्येष्ठे अधिकारिण्यनुजविषयो निर्णयः ॥

कृतेऽचलद्विवेदेन ग्रन्थे निर्णयदीपके ।
व्रतबन्धादिविषये निर्णीता निर्णयाः शुभाः ॥

## ८०९ अथ सर्पबलिः ॥

पुराणं—प्रमादादिच्छया वापि यो मर्त्यः सर्पतो हतः ।
तस्य शुद्धिकरं कर्म सर्पपूजनमाचरेत् ॥
पक्षयोरुभयोर्नागान् पञ्चमीषु प्रपूजयेत् ।

तस्य विधिः ॥ पञ्चम्यां कृतस्नानो यजमानो गङ्गादितीर्थेषु यमस्य रूप्यमयीं प्रतिमां कृत्वा हेममयीं नागप्रतिमां च कलशोपरि उभयोः प्रतिष्ठां कृत्वा गन्धादिवस्त्रनैवेद्यैस्तु संपूज्य सर्पमंत्रैः क्षीरजलैः सर्वौषधिसमन्वितैस्तर्पणं कुर्यात् ॥ अत्र मंत्राः ॥ कालिकोनामसर्पः १ नमोऽस्तु सर्पेभ्यः २ या इषवः ३ यो वामीरो ४ सर्पसाम ५ प्रसर्पसाम ६ उपसर्पसाम ७ निधनसाम ८ ॥ एवं एभिर्मंत्रैरष्टौ नागान् अनन्तादिनामभिश्च तर्पयित्वा अष्टाभिर्ब्राह्मणैः प्रधानमु-

र्घ्यैः आर्घ्यं कृत्वा पायसगोधूमचूर्णदधिमधुसंयुक्तान् अष्टौ पिंडान् अष्टभ्यो नागेभ्यो दद्यात् ॥ प्रथमपिंडे अनन्तः। द्वितीये वासुकिः। तृतीये तक्षकः । चतुर्थे कर्कोटकः । पञ्चमे पद्मः। षष्ठे महापद्मः। सप्तमे शङ्खः। अष्टमे कंबलः॥ [६१०]एवं पिंडनिर्वपणं क्षीरजलैः सर्वौषधिसमन्वितैः शङ्खेन ताम्रपात्रेण वा कालिको नाम सर्प इति मंत्रेण प्रथमपिंडे जलधारां दद्यात्॥ द्वितीये नमोस्तु सर्पेभ्यः। तृतीये याइषवो यातु। चतुर्थे येवामीरो। पञ्चमे सर्पसाम। षष्ठे प्रसर्पसाम। सप्तमे उपसर्पसाम। अष्टमे निधनसाम॥ ततो गन्धादिभिरभ्यर्च्य भद्रंकर्णेभिरिति विसर्जयेत् ॥ ततः स्वगृह्योक्तविधिना पञ्चभूसंस्कारान् कृत्वा अष्टनागेभ्यः पायसं चरुं श्रपयित्वा ईशाने रुद्रकुंभं श्वेतवस्त्रेण युतं स्थापयित्वा नागांस्तत्रोपवेशयेत् ॥

सौवर्णाश्च ततो नागाः स्वस्था मणिविभूषिताः ।
अनन्तो वासुकिश्चैव तक्षः कर्कोटकस्तथा ॥
पद्मश्चैव महापद्मः शङ्खः कंबल एव च ।
सर्वांस्तथा गन्धपुष्पैर्धूपैश्चैव प्रपूजयेत् ॥
पूजयित्वा विधानेन ततः स्याच्च कुशाण्डिका ।
श्रपयित्वा चरुं चैव ततो होमं समाचरेत् ॥
आधारौ पूर्वतो हुत्वा आज्यभागद्वयं तथा ।
पायसेन तु साज्येन ततो होमं तु कारयेत् ॥

कालिकादिभिर्मंत्रैराज्याहुतीर्हुत्वा चर्वाहुतीर्जुहोति ॥

[६११]ब्रह्मलोके च ये सर्पाः शेषनागपुरोगमाः ।
नमोऽस्तु तेभ्यः सर्पेभ्यः सुप्रीता मम सर्वदा ॥ १ ॥

विष्णुलोके च ये सर्पाः कालिकप्रमुखास्तथा ।
नमोऽस्तुतेभ्यः सर्पेभ्यः ॥ २ ॥
सर्पसत्रेषु ये सर्पाः आस्तीकेन च रक्षिताः ।
नमोऽस्तु० ॥ ३ ॥
मलये चैव ये सर्पाः कर्कोटकमुखास्तथा ।
नमोऽस्तु० ॥ ४ ॥
ये सर्पाः पर्वताग्रेषु ये च सन्धिषु संस्थिताः ।
नमोऽस्तु० ॥ ५ ॥
पृथिव्यां चैव ये सर्पाः ये सर्पास्तु विलासनाः ।
नमोऽस्तु० ६ ॥
ग्रामे वा यदि वारण्ये ये सर्पाः प्रस्तरेऽपि च ।
नमोऽस्तु० ॥ ७ ॥
समुद्रे चैव ये सर्पाः ये सर्पा जलचारिणः ।
नमोऽस्तु० ॥ ८ ॥
रसातले च ये सर्पा अनन्ताद्या महाबलाः ।
नमोऽस्तु० ॥ ९ ॥
एतासामाहुतीनां च सर्पेभ्यस्त्याग एव च ।
चरोश्च स्विष्टकृध्धुत्वा प्रायश्चित्तं ततः परम् ॥
प्राजापत्यं च होतव्यं संस्रवप्राशनं ततः ।
एवं कृत्वा विधानेन ततः कर्म समापयेत् ॥

ततः संवत्सरे पूर्णे सौवर्णं नागं कृष्णां गां तिलसहितां च दद्यात् ॥ सर्पदंशमृतस्य एकादशेऽहनि अनेन पक्षेण वक्ष्यमाणपक्षान्तरेण वा सर्पबलिं कृत्वा और्ध्वदैहिकं कुर्यात् ॥ इ-

ति सर्पबलिः कार्यः ॥ ५१२ अथ पक्षान्तरं ॥ पञ्चम्यामुभयोः पक्षयोर्भूमौ नागं पिष्टेन विलिख्य वा दारुमयं मृन्मयं वा पञ्चफणं कृत्वा गन्धैः करवीरैः शतपत्रैर्जातिपुष्पैर्धूपैः सिततण्डुलैरनन्तं वासुकिं शङ्खं पद्मं कंबलं कर्कोटकं अश्वतरं धृतराष्ट्रं शङ्खपालं कालियं संपूज्य गव्यं क्षीरमुदकं भूमौ निवेद्य पश्चात् ब्राह्मणान् घृतपायसमोदकैः संभोज्य तं नमोऽस्तु सर्पेभ्य इत्यादिना उपस्थाय एवं वदेत् ॥ मुंच मुंचामुकंजनमिति॥ तद्दिने मधुरं भुञ्जीत ॥ एवमब्दं संपूज्य पूर्णे संवत्सरे सौवर्णनागं गां च दद्यात् ॥ तत और्ध्वदैहिकमिति स्मृत्यर्थसारात् नागबलिः ॥

५१३ अथ विष्णुपुराणान्नागबलिः ॥

नभस्यपञ्चमीं शुक्लामारभ्योभयपक्षयोः ।
नागानां पूजनं कार्यमन्यां वा शुक्लपञ्चमीमिति ॥
दारुमयं मृन्मयं वा पिष्टमयमथापि वा ।
नागं कृत्वा पञ्चफणं गन्धपुष्पैः समर्चयेत् ॥
संपूज्य भोजयेद्विप्रान् नागं दत्वा तथा च गाम् ।
उपस्थाय वदेदेवं मुंच मुंचामुकंजनमिति ॥
अनन्तादीन् समभ्यर्च्य उपस्थानं ततः परम् ।
नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु ॥
ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः ।
अनन्तवासुकिशङ्खपद्मकंबलकालियाः ॥
कर्कोटकशङ्खपालाश्वतरधृतराष्ट्रकाः ।
सर्पाणामधिपा यूयं कुर्वे विज्ञापनामतः ॥

युष्मत्कुलस्य वा येन केनापि स्पर्शदूषितम् ।
अनुकंप्यामुकं तं तु ब्रूतां हि स्वकुलोद्भवम् ॥
त्वन्मुखाद्विषसंस्पर्शव्याकुलस्यास्य चेतसः ।
विषाज्जीवः पृथग्भूतो मुञ्च मुञ्चामुकं जनमिति ॥

तद्दिने मधुरं भुञ्जीत ॥ सुमन्तुः—

सुवर्णतारनिष्पन्नं नागं दत्त्वा तथैव गाम् ।
विप्राय दत्त्वा विधिवत्पितुरानृण्यमाप्नुयात् ॥ इति ॥

पितुरिति सर्पदंशमृतस्योपलक्षणं ॥ नागलक्षणमुक्तं मत्स्यपुराणे—

नागाश्चैव प्रकर्तव्याः खड्गखेटकधारिणः ।
अधः सर्पाकृतिस्तेषां नाभेरूर्ध्वं तु पौरुषी ॥
फणाश्च मूर्ध्नि कर्तव्या द्विजिव्हा बाहवोऽसमाः ॥

शातातपः—सर्पदष्टे नागबलिर्देयः सर्पश्च काञ्चनः ।

मिताक्षरायां तु पुराणोक्तविधिना नागपूजां कृत्वा अनन्तरं विष्णुबलिं कुर्यादिति शेषः ॥

इति सर्पबलिः ॥

---

## ६१४ अथ विष्णुबलिः ॥

विष्णुबलिश्चाण्डालहस्तादिना दुर्मरणेन मृतस्य प्रेतस्य शुध्युत्पादनद्वारेण श्राद्धादिसंप्रदानत्वयोग्यतां जनयति ॥ स चेत्थं कर्तव्यः ॥ कस्यां चिच्छुक्लैकादश्यां विष्णुं यमं च गन्धधूपादिभिः संपूज्य तदग्रे एकादश ब्राह्मणानुत्तराभिमुखानुपवेश्य यजमानो दक्षिणाभिमुखो यज्ञोपवीती विष्णुरूपं प्रे-

तं स्मरन् केशवनारायणाद्येकादशनामभिः एकोद्दिष्टविधानेन देवश्राद्धवद्ब्राह्मणपादप्रक्षालनादि अर्घसहितं तृप्तिप्रश्नान्तं श्राद्धं कृत्वा दक्षिणाग्रेषु दर्भेषु दक्षिणाभिमुखो मधुघृतप्लुतांस्तिलमिश्रानेकादश पिंडान्दत्वा गन्धादिभिरभ्यर्च्य स्वधावाचनसमये जानुभ्यामवनिं गतो ध्यानसंयुक्तः शङ्खेन ताम्रपात्रेण वा सहस्राशीर्षेत्यादि एकादशर्ग्भिः प्रत्येकं एकादशपिंडेषु जलधारां दत्वा विप्रान्दक्षिणयासंतोष्य भद्रंकर्णेभिरिति पिंडान्विसृज्य नद्यांभसि प्रक्षिपेदिति ततस्तस्यां रात्र्यामुपोषितः श्वोभूते विष्णवाराधनं कृत्वा पञ्चसु कलशेषु पञ्चरत्नयज्ञोपवीतमुद्रान्वितेषु ब्रह्माणं विष्णुं रुद्रं सपरिवारं यमं प्रेतं च स्थापयित्वा संपूज्य तदग्रे पञ्चदेवतानामेकोद्दिष्टेन विधिना दक्षिणाभिमुखोऽर्घपिंडसहितं प्रेतं विष्णुरूपं स्मरन् श्राद्धं कुर्यात् ॥

ब्रह्मा विष्णुस्तथा रुद्रो यमः प्रेतश्च पञ्चमः ।
पृथक्कुंभेषु संस्थाप्यास्तदग्रे श्राद्धमाचरेत् ॥ इति ॥

८१५ अत्र ब्रह्मणे विष्णवे रुद्राय यमाय पूर्वोक्तविधिना चतुरः पिंडान् दत्वा नामगोत्रसहितं प्रेतं संस्मृत्य विष्णोर्नाम संकीर्त्य पञ्चमं पिंडं दद्यात् ॥ अत्रापि पूर्ववद्ब्राह्मणोऽस्य मुखमित्यादिना ऋक्पञ्चकेन पिंडेषु जलधारां दद्यात् ॥ पूर्ववद्विसर्जनं च ॥ विप्रान्दक्षिणाभिस्तोषयित्वा तन्मध्ये एकं प्रेतबुद्ध्या संस्मरन् गोभूहिरण्यादिना अतिशयेन तोषयेत् ॥ ततः स्वजनैः सार्धं भुञ्जीत ॥ एकादशाहे चेत्क्रियते तत्रापि विधिरयमेव ॥ अत्र पुराणवचनानि—

६१८ एकादशीं समासाद्य शुक्लपक्षे च काश्यप ।
विष्णुं यमं च संपूज्य गन्धपुष्पादिभिस्तथा ॥
कृष्णाग्रे कारयेद्विप्रैर्विधिं नारायणाह्वयम् ।
यजमानो भवेत्तत्र शुचिर्बन्धुसमन्वितः ॥
भक्त्या तत्र प्रकुर्वीत श्राध्धान्येकादशैव तु ।
यज्ञोपवीती सतिलान् पिंडान्वै दक्षिणामुखः ॥
दद्यादितिशेषः ॥
ध्यानधारणसंयुक्तो जानुभ्यामवनिं गतः ।
शङ्खेन ताम्रपात्रेण अलाभेऽन्येन केनचित् ॥
कृत्वा वै दापयेदर्घं पिंडे पिंडे पृथक्पृथक् ।
अर्घं जलधारां ।
भद्रं कर्णेभिरिति च कुर्यात्पिंडविसर्जनम् ॥
उध्धृत्य पिंडान्पश्चात्तु तीर्थेष्वंभसि निक्षिपेदिति ।
कृत्वैकादशदैवत्यं श्राध्ध कुर्यात्परेऽहनि ॥
विप्रानावाहयेत्तत्र चतुर्वेदविशारदान् ।
पञ्च श्राध्धानि कुर्वीत देवतानां यथाविधि ॥
ब्रह्मा विष्णुस्तथा रुद्रो यमः प्रेतश्च पञ्चमः ।
पृथक्कुंभेषु संस्थाप्यास्तदग्रे श्राद्धमाचरेत् ॥
विष्णुः स्वर्णमयः कार्यो रुद्रस्ताम्रमयस्तथा ।
ब्रह्मा रौप्यमयस्तत्र यमो लोहमयो भवेत् ॥
गरुडपुराणे विष्णुबलिविधाने पूर्वं विष्णुतर्पणमुक्तं—
नागो द्वादशनाडीभिर्दिक्पञ्चदशाभिस्तथा ।
भूतोऽष्टादशनाडीभिर्दूषयन्त्युत्तरां तिथिमिति ॥

स्कन्दवचनेन दिक् दशमी तया पञ्चदशघटिकाविद्धायामेकादश्यां विष्णुबलिप्रभृति कर्म न कार्यमिति निरूपितं शिष्टैः ॥

इति गरुडपुराणोक्तविष्णुबलिविधिः ॥

---

## [८१७] अथ धनिष्ठादिनक्षत्रपञ्चकेषु मृतस्य सद्गतिप्रापको विधिरुच्यते ॥

तत्र गरुडपुराणवचनानि—

पञ्चकेषु मृतो योऽसौ न गतिं लभते नरः ।
आदौ कृत्वा धनिष्ठार्धमेतन्नक्षत्रपञ्चकम् ॥
रेवत्यन्तं सदा ऋक्षमशुभं सर्वदा भवेत् ।
दाहस्तत्र न कर्तव्यो विप्रादिसर्वजातिषु ॥
दीयते न जलं तत्र अशुभं जायते भृशम् ।
लोकयात्रा न कर्तव्या दुःखार्तः स्वजनो यदि ॥
पञ्चकानन्तरं तत्र संतोषोऽप्युपजायते ।
पुत्राणां गोत्रिणां तस्य कर्तव्यं सर्वमन्यथा ॥
गृहे हानिर्भवेत्पृष्ठे ऋक्षेष्वेषु मृतश्च यः ।
[८१८] अथवा ऋक्षमध्ये तु दाहश्च विधिपूर्वकः ॥
क्रियते हि मनुष्याणां सद्य आहुतिकारणात् ।
सद्य आहुतिकरं पुण्यं तीर्थं तद्दाघमुत्तमम् ॥
विप्रैर्नियमतः कार्यो मंत्रैश्च विधिपूर्वकम् ।
शवस्य च समीपे तु क्षेप्तव्याः पुत्तलास्ततः ॥

दर्भमयाश्च चत्वारो ऋक्षमंत्राभिमंत्रिताः ।
ततो दाघः प्रकर्तव्यस्तैस्तु पुत्तलकैः सह ॥
सूतकान्ते तदा पुत्रः कुर्याच्छान्तिकमुत्तमम् ।
विप्राणां दीयते दानं सर्वोपद्रवनाशनम् ॥
सूतकान्ते च तत्पुत्रैः स प्रेतो लभते गतिम् ।
तिला गावश्च हिरण्यं च तस्योद्देशे घृतं ददेत् ॥
भाजनोपानहौ छत्रं हेममुद्रा च वाससी ।
दक्षिणा दीयते विप्रे सर्वपातकनाशिनी ॥
बालस्य यूनो वृद्धस्य पञ्चकेषु मृतस्य हि ।
विधानं यो न कुर्वीत विघ्नं तस्य प्रजायते इति ॥

विधानं नक्षत्राणां पूजनं जपश्च नक्षत्राणां पूजनहवनो-पक्रमं पूर्वं तु दैवं सर्वत्र इत्युक्तत्वात् तद्देवतापूर्वकपूजनं धनिष्ठादिनक्षत्रपञ्चकस्यानुक्रमेणोक्ता देवता ज्योतिषे ॥

[८१८] वासवो वरुणो देवोऽज एकपात्तथैव च ।
अहिर्बुध्न्यस्तथा पूषा ॥
नक्षत्रदेवता ह्येता एताभिर्यज्ञकर्मणि ।

नक्षत्राणां यजनकर्मणि एताभिः कर्म कार्यं ॥

देवतापञ्चकं ह्येतत्कर्तव्यं हेमनिर्मितम् ।
ताम्रमयेषु कुंभेषु वस्त्रमुद्रापणादिषु ॥
स्थापयित्वा विधानेन पूजनीयं सऋक्षकम् ।
जपेयुर्ब्राह्मणास्तत्र देवतानाममंत्रकान् ॥
श्रावयेत्तत्र विप्राग्रे सप्रयोगमिदं वचः ।
अमुकाभिधस्य प्रेतस्य पञ्चके मृतिदोषतः ॥

शंकिता दुर्गतिस्तस्य सद्गतिः स्याद्द्विजोत्तमाः ।
जपान्ते दक्षिणां दद्यात्पुण्याहं वाचयेत्ततः ॥

पुत्रादिर्यजमान इति शेषः ॥

विधानमेतत्कृत्वा तु कुर्यादेकादशाह्निकम् ।

कर्म कुर्यादिति ॥ [८२०] अत्रायं क्रमः ॥ एकादशाहे यजमानो मृद्गोमयादिभिः स्नातः ब्राह्मणाग्रे अद्येत्यादिकालं देशं च संकीर्त्य गोत्रस्यामुकस्य प्रेतस्य पञ्चकमरणसूचितदुर्गत्युपशान्त्यर्थं तथा सपरिवारस्य मम शङ्कितानिष्टनिवृत्त्यभ्युदयार्थं च पञ्चकविधानमहं करिष्ये इति संकल्प्य विष्णुं संपूज्य दक्षिणस्यां दिशि स्थापितेषु पञ्चसु कलशेषु जलपूर्णेषु मुद्रापनपूर्णाम्रवस्त्रनारिकेलसर्वौषधियुक्तेषु सुवर्णनिर्मितवस्वादिदेवतापञ्चकमग्न्युत्तारणप्रतिष्ठापूर्वकं स्थापयित्वा ब्राह्मणास्तत्र तत्तद्देवताकमंत्रैर्जपेयुः जपान्ते यजमानो ब्राह्मणान्दक्षिणाभिः संतोष्य असुकस्य पञ्चकमरणजनितदोषनिवृत्तिरस्त्विति प्रार्थ्य पुण्याहं वाचयेत् ॥ एकादशाहविहितं कर्म कुर्यात् ॥ जपदशांशहोमः पायसकैः ॥ येनः सपत्ना । वरुणः प्राविता । शन्नो अजएकपात् । उतनोऽहिर्बुध्न्यः । शुक्रन्ते अन्यत् । इति ऋक्शाखिनां मंत्राः ॥ वसोः पवित्रमसि । वरुणस्योत्तंभनमसि । उतनोऽहिर्बुध्न्यः । शिवोनामासि । पूषन्तव व्रत । इति यजुः शाखिनां ॥ तमग्निमास्त । यदा कदा च मीढुष । इन्द्रो विश्वस्य राजसि । ब्रह्मजज्ञानं । शुक्रन्ते अन्यत् । इति सामगानां ॥ अष्टौशतानि श्वेतकेतूनां । वाजादेवीदेवमृणानि । शुनासीरौत । सव्याप्याय कृणोमि कर्मसि-

ध्यये । यवहादेहमृषिवः । इत्यथर्वणे ॥

इति पञ्चकमरणे विधिः ॥

---

८२१ अथ नीलोद्वाहकर्मकालनिर्णयः ॥

तावत्फलमाह मत्स्यः अगस्त्यं प्रति—

शृणु साधो प्रवक्ष्यामि यत्पृष्टोऽहं त्वयानघ ।
नीलोत्सर्गविधिं येन पितॄणामनृणो भवेत् ॥
गयाश्राध्धाश्वमेधाभ्यां नीलोत्सर्गोऽधिको मतः ।
ये गता रौरवे घोरे कुंभीपाके च ये गताः ॥
ते सर्वे मुक्तिमायान्ति नीलोत्सर्गे कृते सतीति ॥

कुलानां शतमुध्धरेदित्यादि फलमुक्तं ॥ तस्य काला अभिधीयन्ते ॥

कार्तिक्यामथ वैशाख्यां फाल्गुन्यामष्टकासु च ।
आश्वयुज्यां तथा षष्ठ्यां चैत्र्यां माघ्यामथापि वा ॥
अयने विषुवे चैव ग्रहणे चन्द्रसूर्ययोः ।
वैधृते च व्यतीपाते मन्वादिषु युगादिषु ॥
दिनच्छिद्रेषु संक्रान्तौ क्रान्तिसाम्ये तथैव च ।
मातापित्रोः क्षयाहे तु विशेषेण प्रशस्यते ॥
यदा चित्तं च वित्तं च तीर्थं पात्रं तथैव च ।
तदैव दानकालः स्यान्नान्यत्किंचिद्विचारयेत् ॥
नास्तिका विश्वकर्माणः प्रेतयोनिं च ये गताः ।
सर्वे ते मुक्तिमायान्ति नीलोत्सर्गे कृते सतीति ॥

उन्नतस्कन्धककुदामित्यादिवृषलक्षणान्युक्तानि ॥ ८२२ त-

था शाङ्खायनगृह्ये ॥ यूथे वर्चस्वितमः स्यात्तमलंकृत्य यूथे मुख्याश्चतस्रो वत्सतर्य इति ॥ चतसृणामभावे एकापि भवेदित्युक्तं गरुडपुराणे—

एकवर्णं वृषं चैव सकृद्वत्सतरीं खग
स्नापयित्वा ततः कुर्यात्सर्वालङ्कारभूषितम् ॥
प्रतिष्ठाप्य च तद्युग्मं प्रेतो मोक्षमवाप्नुयात् ।
पुच्छे च तर्पणं कार्यमुत्सृजेन्मंत्रपूर्वकमिति ॥
एकादशाहे प्रेतस्य यस्य नोत्सृज्यते वृषः ।
प्रेतत्वं सुस्थिरं तस्य दत्तैः श्राध्धैः शतैरपीति ॥

इति नीलोत्सर्गकालनिर्णयः ॥

कृतेऽचलद्विवेदेन ग्रन्थे निर्णयदीपके ।
उक्ता नीलोद्वाहकालाः सर्पादिमरणे विधिः ॥

---

८२३ अथ रविवारे सिध्धविरुध्धानां योगोऽभिधीयते ॥

अथ सिध्धयोगः—

आदित्ये चाष्टमी हस्त अश्विनी चोत्तरात्रयम् ।
मूलं पुष्यं धनिष्ठा च सिध्धयोगाः प्रकीर्तिताः ॥
उत्तरात्रितयं मूलहस्तपुष्याः शुभप्रदाः ।

अथ विरुद्धयोगः ॥ सूर्यवारे द्वादशी चतुर्दशी सप्तमी विशाखादिषु विरुद्धयोगः ॥ तदुक्तं—

सूर्ये विशाखा भरणी द्वादश्यथ चतुर्दशी ।
मघानुराधा ज्येष्ठा च वर्जनीयाः प्रयत्नतः ॥ इति ॥

रविद्वादश्योर्योगे क्रकचयोगः ॥ सप्तम्यां रविवारेण संवर्ता-

स्यो योगः ॥ सोऽपि शुभकर्मसु त्याज्यः ॥ तदुक्तं रत्नमालायां-

सप्तम्यां दिनकरवासरो यदि स्या-

त्स त्याज्यः शुभफलकांक्षिभिः प्रयत्नात् ।

धर्म्ये कर्मणि तु ॥

सोमवारे स्वमावास्या भानुवारे च सप्तमी ।

षष्टिवर्षसहस्राणि तत्कर्ता लभते फलम् ॥

८२४ तथा—षष्ठीसप्तमिसंयोगे वारश्चेदंशुमालिनः ।

योगोऽयं पद्मको नाम सहस्रार्कग्रहैः समः ॥

तथान्यत्र ॥

भानौ विशाखात्रितयं षष्ठ्या चेति न शोभनम् ।

एतद्व्यतिरिक्तस्तिथिगणो नक्षत्रगणश्च भानुवारे समः ॥

तथा दिवसे अष्टौ अर्ध प्रहरा भवन्ति ॥ भानुवारे चतुर्थोऽ र्धप्रहरः शुभकर्मसु त्याज्यः ॥ तथा शुक्रार्कयोर्न प्रतीच्यामिति ॥ भानुवासरे पश्चिमायां दिशि दिक् शूलं ॥ तत्र गमनं न कार्यं ॥ तथा तिथिविषये षष्ठीचतुर्दश्योः पश्चिमायां योगिनी। चतुर्थीद्वादश्योर्नैर्ऋत्यां। सप्तमीपूर्णमास्योर्वायव्यां॥ प्रतिपन्नवम्योः पूर्वे। द्वितीयादशम्योरुत्तरे। तृतीयैकादश्योराग्नेय्यां। पञ्चमीत्रयोदश्योर्याम्यां ॥ दर्शाष्टम्योरीशान्यां योगिन्यो वसन्ति ॥ तत्र यात्रां न कुर्यात् ॥ द्वादशीचतुर्दश्यौ भानुवारेऽपि धर्म्ये कर्मणि प्रशस्येते ॥ भानुवारे चतुर्दशं मुहूर्तं कुलिकं ॥ तन्मङ्गलकर्मणि त्याज्यं ॥ रात्रौ त्रयोदशं मुहूर्तं कुलिकं ॥

इति रविवारे सिद्धविरुद्धानां योगनिर्णयः ॥

## अथ सोमवारे सिद्धविरुद्धादिकं॥

सिद्धयोगः॥ नवमी सोमवारेण सिद्धा॥ तदुक्तं—

सोमे तु नवमी पुष्यः श्रवणे रोहिणी मृगः।
एतानि सर्वदा वत्स सिद्धिदानि स्वकर्मसु॥

सोमे अनुराधापि प्रशस्ता॥ तथा—

पुष्यानुराधाश्रवणाः सिद्धये रोहिणीद्वयम्।

अथ सोमे विरुद्धं॥ त्रयोदशी एकादशी च सोमवारे विरुद्धा॥ [५२५] तदुक्तं—

चन्द्रे चित्रोत्तराषाढा पूर्वाषाढा विशाखिकम्।
एकादशीत्रयोदश्यौ नष्टयोगाः प्रकीर्तिताः॥
शीतगौ पुनराषाढे विशाखाभिजितस्त्यजेत्।

आषाढे पूर्वाषाढा उत्तराषाढा च उत्तराषाढान्त्यपादः श्रवणस्याद्याश्चतस्रो घटिका अभिजिन्नाम नक्षत्रं॥ तानि सोमवारे विरुद्धानि॥ अन्यासु तिथिषु सोमवारो न सिद्धो न विरुद्धः॥ अन्यानि नक्षत्राणि सोमे समानि॥ तथा शनिसोमयोः प्राच्यां न गच्छेदिति वचनात् सोमे पूर्वस्यां दिशि दिक्शूलं॥ रिक्तात्वेन शनिवारेऽपि नवमी सिद्धा॥ उक्तं च॥ शनौ रिक्ता सिद्धियोगः॥ तथा सोमवारे सप्तमोऽर्धं प्रहरः शुभकर्मसु त्याज्यः॥ सोमवारे द्वादशमुहूर्तं कुलिकं माङ्गल्ये त्याज्यं॥ रात्रौ एकादशं मुहूर्तं॥

इति सोमवारे सिद्धविरुद्धादियोगे निर्णयः॥

[५२६] अथ भौमवारे सिद्धविरुद्धादिकमुच्यते ॥

सिद्धयोगः ॥ भौमवारे तृतीयाष्टमीत्रयोदश्यः सिद्धाः ॥ षष्ठी च ॥ तदुक्तं ॥

भौमे षष्ठी तृतीया स्यादष्टमी च त्रयोदशी ।
मूलाश्विन्यौ मृगाश्लेषाः सिद्धा उत्तरभाद्रपत् ॥

त्रिविक्रमे तु वारेऽपि भूमिनन्दने कृत्तिकापि प्रशस्तमुक्तं ॥

अश्विनीकृत्तिकाश्लेषोत्तराभाद्रपदाः शुभाः ।

अथ विरुध्यः ॥ भौमे प्रतिपद्दशमी च विरुध्या ॥ तदुक्तं—

कुजे तु वैश्वदेवार्द्रा प्रतिपत्पूर्वभाद्रपत् ।
वारुणं वसुदेवं च पूर्णया सह वर्जयेत् ॥

वैश्वदेवं तूत्तराषाढा वारुणं शतभिषक् ॥ वसुदेवं धनिष्ठा ।

अत्र पूर्णा दशमी ॥ दशम्यां भौमवारेण क्रकचयोगो भवति ॥ तदभिप्रायेण भौमे दशमी वर्जिता माङ्गल्यकर्मणि न तु धर्मकर्मणि ॥ त्रिविक्रमे तु भूनन्दने धनिष्ठादित्रयमार्द्रा च वर्जिता ॥ अत्र पूर्णयेति वक्तुरयमभिप्रायः ॥ पक्षद्वयेऽपि पञ्चदश तिथयः ॥ पुनरावृत्त्या नन्दा भद्रा जया रिक्ता पूर्णा इति ॥ [५२७] तथा हि ॥ प्रतिपत्षष्ठीएकादश्यो नन्दातिथयः ॥ द्वितीयासप्तमीद्वादश्यो भद्रातिथयः ॥ तृतीयाष्टमीत्रयोदश्यो जयातिथयः ॥ चतुर्थीनवमी चतुर्दश्यो रिक्तातिथयः ॥ पञ्चमीदशमी पूर्णिमा पूर्णातिथयः ॥ इति ॥ तत्र कुजे जया सिध्धियोगः ॥ अन्यतिथिषुभौमः समः ॥ सिद्धविरुध्धव्यतिरिक्तानि नक्षत्राणि भौमे समानि ॥ तथा नोदीच्यां बुधभौमयोरिति वचनात् ॥ भौमे उदीच्यां उत्तरस्यां दिशि वि-

क्शूलं ॥ तत्र यात्रां न कुर्यात् ॥ भौमे द्वितीयोऽर्धप्रहरो मङ्गलकर्मणि त्याज्यः ॥ भौमे दशमं मुहूर्तं कुलिकं शुभकर्मणि त्याज्यं ॥ रात्रौ नवमं मुहूर्तं कुलिकं ॥

इति भौमवारे सिद्धविरुद्धादियोगनिर्णयः

---

## अथ बुधवारे सिद्धविरुद्धादिकमाह ॥

अथ सिध्धयोगः ॥ द्वितीयाद्वादशीसप्तम्यः बुधवारेण सिध्धाः ॥ तदुक्तं—

बुधवारे द्वितीया च द्वादशी सप्तमी युता ।
मृगोऽनुराधा हस्तश्च कृत्तिका सिध्धिदायिका ॥

पुनरेतानि ऋक्षाणि बुधे सिध्धिदायकानि ॥ बुधवारमधिकृत्य त्रिविक्रमे—

कृत्तिकात्रितयं पुष्यो अनुराधार्थसिध्धये ।

भवतीति शेषः ॥ अथ विरुध्धः ॥ [५२८] बुधे तृतीयानवमी प्रतिपद्रेवत्यादिभिर्विरुध्धयोगः ॥ तदुक्तं—

बुधे धनिष्ठा भरणी द्रस्त्रमूलसमन्विता ।
तृतीया नवमी प्रतिपद्रेवतीश्च विवर्जयेत् ॥

दग्धं अश्विनी तथा—

बुधे त्रीणि च रेवत्या मूलं च परिवर्जयेत् ।

रेवत्या रेवतीप्रभृतित्रीणि ॥ अन्यास्तिथयोऽन्यानि नक्षत्राणि न सिध्धानि न विरुध्धानीति ॥ बुधे भद्रा सिध्धयोगः ॥ बुधवारे उत्तरस्यां दिशि दिक्शूलं ॥ द्वितीयादशम्योरुत्तरस्यां तत्र गमनं न कुर्यात् ॥ तथा बुधे पञ्चमोऽर्धप्रहरः

शुभकर्मसु त्याज्यः ॥ अष्टमं मुहूर्तं कुलिकं॥ तच्छुभकर्मसु त्या-
ज्यं ॥ रात्रौ सप्तमं मुहूर्तं कुलिकं ॥

इति बुधवारे सिद्धविरुद्धादियोगनिर्णयः ॥

---

अथ गुरुवारे सिद्धविरुद्धादियोगः कथ्यते ॥

अथ सिध्धयोगः॥ गुरुवारे पञ्चमीदशमी पूर्णमास्यः
सिध्धाः ॥ गुरुपूर्णा सिध्धियोगः ॥ [५२९] तदुक्तं–

गुरौ दशमीपञ्चम्यौ पूर्णमासी विशाखकम् ।
भाग्यानुराधे सिध्धाः स्युस्तथा पुष्यपुनर्वसू इति ॥

भाग्यं पूर्वाफाल्गुनी ॥ विशाखकं विशाखा ॥ त्रिविक्रमे–

गुरौ पुनर्वसूरेवत्योर्द्वयं राधार्थसिध्धये ।

पुनर्वसूद्वयं रेवत्याद्वयं राधार्थसिध्धये राधा अनुराधा सिध्ध-
योगः ॥ अथ विरुध्धः ॥ चतुर्थी अष्टमी च गुरुवारे विरुध्धा ॥
तदुक्तं–

जीवेऽष्टमी चतुर्थी च आर्द्रा शतर्क्षकृत्तिके ।
रोहिणी च मृगशिरो विरुध्धाश्च प्रकीर्तिताः ॥

तथा–जीवे तु त्रीणि रोहिण्या दग्धे शतर्क्षकृत्तिके ।

शतर्क्ष शतभिषक् ॥ तद्व्यतिरिक्तनक्षत्रगणो अन्याति-
थिश्च गुरुवारे समाः ॥ तथा न याम्यां गुरौ गच्छेदिति वच-
नात् गुरुवारे दक्षिणस्यां दिशि दिकूशूलं ॥ तथा गुरुवारेऽष्ट-
मोऽर्धप्रहरः शुभकर्मसु त्याज्यः ॥ षष्ठं मुहूर्तं कुलिकं मङ्गले
वर्जनीयं ॥ रात्रौ पञ्चमं मुहूर्तं कुलिकं ॥

इति गुरुवारे सिद्धविरुद्धादियोगनिर्णयः ॥

### [८३०] अथ शुक्रवारे सिद्धविरुद्धादियोगः प्रदर्श्यंते ॥

अथ सिध्धयोगः ॥ प्रतिपत्षष्ठ्येकादश्यः नन्दातिथय-स्ताः शुक्रवारेण सिध्धाः ॥ नन्दा शुक्रे सिध्धियोगः ॥ त्रयो-दशी च शुक्रे सिध्धा ॥ तदुक्तं—

शुक्रेण प्रतिपत्षष्ठी एकादशी त्रयोदशी ।
सिध्धा भाग्योत्तराषाढा हस्तः श्रवणरेवती ॥

भाग्यं पूर्वाफाल्गुनी ॥ शुक्रमधिकृत्य

पुनर्वसुः श्रुतिः सिध्ध्यै राधाथो रेवतीद्वयं ॥

श्रुतिः श्रवणं ॥ एतैः सिध्धियोगः ॥ अथ विरुध्धयोगः ॥

भार्गवे त्रितयं पुष्याद्रोहिणीं द्रोहिणीं विदुः ।

त्रितयं पुष्याश्लेषामघाः ॥ अन्यानि नक्षत्राणि शुक्रे स-मानि ॥ तथा शुक्रवारस्य तृतीयोऽर्धप्रहरः शुभकर्मसु त्या-ज्यः ॥ तथा शुक्रार्कयोर्न प्रतीच्यामिति वचनात् शुक्रवारे पश्चिमायां दिशि दिकूशूलं तत्र प्रयाणं न कुर्यात् ॥ [८३१] तथा शुक्रवारे द्वितीया सप्तमी विरुध्धा ज्येष्टा च ॥ तदुक्तं—

भार्गवे रोहिणी ज्येष्ठा द्वितीया सप्तमी पुनः ।
पुष्यो मघा तथाश्लेषा सर्वकार्येषु वर्जयेत् ॥

शुक्रवारे चतुर्थं मुहूर्तं कुलिकं ॥ माङ्गल्ये तद्वर्ज्यं ॥ रात्रौ तृतीयं मुहूर्तं कुलिकं ॥

### इति शुक्रवारे सिद्धविरुद्धयोगनिर्णयः ॥

## अथ शनिवारे सिध्धविरुध्धयोगो निरूप्यते ॥

अथ सिद्धयोगः ॥ चतुर्थीनवमीचतुर्दश्यः रिक्तातिथयस्ताः शनिवारे सिध्धाः ॥ शनौ रिक्ता सिद्धियोगः रोहिण्यादि च ॥ तदुक्तं–शनौ चतुर्थी नवमी चतुर्दश्यथ रोहिणी ।

शततारा स्वाति मघा भाग्यं चैव सुसिद्धये इति ॥

शततारा शतभिषक् ॥ तथा शनिवारे तूक्तं–

स्वातीश्रवणरोहिण्यः सकलाभीष्टसिध्धये ।

भवन्तीति शेषः ॥ [५३२] अथ विरुध्धयोगः ॥ शनिवारे विरुध्धानि ॥

सौरे हस्तोत्तराषाढा रेवती चित्रया सह ।

पञ्चमी चैव षष्ठी च अर्यम्णा सह वर्जिता ॥

अर्यमा उत्तराफाल्गुनी

शनौ द्वे वर्ज्य आषाढे द्वादशाङ्काञ्त्रयं त्यजेत् ।

उत्तराफाल्गुनीप्रभृतित्रयं ॥ उत्तराफाल्गुनी हस्ताश्चित्रा ॥ एतैर्विरुध्धयोगः ॥ उक्तादन्यो नक्षत्रगणास्तिथिगणश्च शनौ समाः ॥ न प्राच्यां शनिसोमयोरिति ॥ शनिवारे पूर्वस्यां दिशि दिक्शूलं तत्र गमनं वर्ज्यं ॥ तथा शनिवारे षष्ठोऽर्धप्रहरः शुभकर्मसु त्याज्यः ॥ शनौ द्वितीयं मुहूर्तं कुलिकं शुभकर्माणि वर्जयेत् ॥ रात्रौ प्रथमं मुहूर्तं कुलिकं ॥ [५३३] अथ प्रयाणे योगिनी संमुखा वर्जनीया ॥ संमुखज्ञानोपायमाह–

ऊर्ध्वं निरीक्षेद्दशपञ्चनाडीर्नाड्यो दशाधस्तदनुक्रमेण ।

दशैव एकादश दक्षिणाश्च सार्धा दशा संमुखवर्जनीयाः ॥

अर्धेन अधिका दश पञ्चदशेत्यर्थः ॥ तिथेरंत्याः पञ्च–

दश घटिकाः संमुखा ॥

तिथिनक्षत्रवारैर्यैस्त्रिभिर्दुष्टं दिनं भवेत् ।
माङ्गल्ये कर्मणि त्याज्यं धर्मकर्मणि न त्यजेत् ॥

द्वाभ्यामेकेन वा दुष्टमिति ॥

विरुध्धयोगास्तिथिवारजाता नक्षत्रवारप्रभवाश्च येऽत्र ।
हूणेषु वङ्गेषु खसेषु वर्ज्याः शेषेषु देशेषु न ते विरुध्धाः ॥

तथा—अयोगः सिध्धयोगश्च द्वावेतौ भवतो यदि ।
अयोगो हन्यते तत्र सिध्धियोगः प्रवर्तत इति ॥

इति सिध्धविरुध्धनिर्णयः ॥

---

८३४ अथ देवानां वाप्यादीनां च प्रतिष्ठाकालनिर्णयः ॥

सुदिने शुभनक्षत्रे मुहूर्ते तु भवेद्यदा ।
वापीकूपतडागानां तस्मिन्काले विधिः स्मृतः ॥

संक्रान्तिविशेषे फलविशेषमाह—

कर्कटे पुत्रलाभस्तु सौख्यं तु मकरे भवेत् ।
मीने यशोऽर्थलाभस्तु कुंभे च सुबहूदकम् ॥
वृषे च मिथुने वृद्धिर्वृश्चिके निर्मलं भवेत् ।
पितृतृप्तिस्तु कन्यायां तुलायां शाश्वती गतिः ॥
सिंहो मेषो धनुर्नाशं जलस्य द्विज यच्छति । इति ॥

अथ दक्षिणायने तडागादिप्रतिष्ठाविधानमुक्तं ॥

न कालनियमस्तत्र प्रमाणं सलिलं यतः ।

इति भविष्योत्तरोक्ताभिप्रायेण प्रतिष्ठामुदगयने कुर्यात् ॥

तदाह गार्ग्यः—

देवतारामवाप्यादिप्रतिष्ठामुत्तरायणे ।
माघादिपञ्चके शुक्ले कृष्णेऽथ पञ्चमीदिने ॥
दाक्षिणे त्वयने कुर्वन् न तत्फलमवाप्नुयात् ॥

[८३५] तथा मत्स्यपुराणे—

चैत्रे वा फाल्गुने वापि ज्येष्ठे वा माधवेऽपि वा ।
माघे वा सर्वदेवानां प्रतिष्ठा शुभदा भवेत् ॥

कारणतंत्रे—प्राप्य पक्षं शुभं शुक्लमतीते दक्षिणायने ।
विना चैत्रेण मासादौ प्रतिष्ठा मासपञ्चके ॥

केचिदागमिकाश्चैत्रं नाङ्गीकुर्वन्ति ॥ अत्र कालादर्शवचनं—

देवारामतडागादिप्रतिष्ठामुत्तरायणे ।
माघादिपञ्चमासेषु शुक्लपक्षे समाचरेत् ॥
कृष्णेऽपि पञ्चमीं यावत्केचिच्चैत्रं न मन्यत इति ॥

अत्र आदिशब्दात् वापीकूपौ आराम उपवनं । कृष्णपक्षे दशमीपर्यन्तं कुर्यात् ॥ तदुक्तं विष्णुधर्मोत्तरे—

कृष्णपक्षे त्रिभागे तु प्रथमे स्याच्छुभावहा ।
मध्या द्वितीयभागे तु तृतीये कर्तृनाशिनी ॥

कर्तुश्चन्द्रबले युक्ते दिने इति शेषः ॥ तथा तिथिषु रिक्तां विना अन्याः शुभावहाः ॥ [८३६] तदुक्तं कालादर्शे—

रिक्तां तिथिं विना शेषाः शुभाः पूर्णा जया वराः ।
भद्रास्तु मध्यमा नन्दाः कनिष्ठाः स्युः प्रकीर्तिताः ॥

चतुर्थी नवमी चतुर्दश्यः रिक्ताः ॥ ताः विना शेषाः शुभाः ॥ तत्रापि पूर्णाः पञ्चमी दशमी पूर्णिमा वराः श्रेष्ठाः ॥ जयातिथयः तृतीयाष्टमीत्रयोदश्यो वराः ॥ भद्रातिथयः द्वितीया-

सप्तमीद्वादश्यो मध्यमाः ॥ नन्दातिथयः प्रतिपत्षष्ठीएकादश्यः कनिष्ठाः ॥ तदुक्तं कारणतंत्रे—

जयाः पूर्णाः प्रशस्ताः स्युर्मध्यमा भद्रसंज्ञिताः ।
कनिष्ठा नन्दसंज्ञाः स्युर्ग्राह्याः स्युर्देवकर्मणि ॥

देवकर्म प्रतिष्ठा ॥ अत्र मध्यमकनिष्ठत्वं संभवविषयं ॥ रिक्तां विना सर्वाः शुभावहा इति विष्णुधर्मोत्तरेऽभिहितं ॥ वारेषु भौमवारं विना शेषा वाराः शुभकराः स्मृताः ॥ अत्र विशेषः कारणतंत्रे—

रविरुग्रप्रतिष्ठायां चलायां गुरुरिष्यते ।
भौमवर्ज्यं स्थिरायाः स्युः शनिशुक्रबुधेन्दवः ॥

रवेर्वारः उग्रासु प्रतिष्ठासु विदारणानृसिंहवीरभद्रभैरवादिप्रतिष्ठासु संमतः । गुरोर्वारश्चलप्रतिष्ठासु संमतः । इतरे शनिशुक्रबुधसोमवाराः स्थिरप्रतिष्ठासु संमताः ॥ योगेषु—

विना शूलादिकान् योगान् नव शेषाः शुभावहाः ।

८३७ तथा सनत्कुमारः—

व्याघातशूलगण्डेषु व्यतीपातातिगण्डयोः ।
विष्कुंभवज्रपरिघावैधृतीषु न कारयेत् ॥

करणेषु—प्रशस्तानि प्रतिष्ठासु त्रीण्यादौ करणानि च ।

आदौ त्रीणि बवबालवकौलवानि ॥ विष्टिं विना सर्वाणीत्यन्ये आहुः ॥ नक्षत्रेषु कारणतंत्रे—

पैतृकार्यमणे सार्पयाम्याग्नेयार्द्रदैवतम् ॥
चित्रां विना प्रतिष्ठासु शेषर्क्षाणि शुभानि तु ॥

एतानि परिहाय शेषाणि एकविंशतिनक्षत्राणि प्रति-

ष्ठासु शुभानि ॥ तदुक्तं मत्स्येन—

आषाढे पौष्णमूलर्क्षमुत्तरात्रयभाद्रभम् ।
ज्येष्ठा श्रवणरोहिण्यौ पूर्वाभाद्रश्च वासवं ॥
अश्विन्यादित्यहस्ताश्च पुष्यं मृगशिरोऽभिजित् ।
अनुराधा तथा स्वाती प्रतिष्ठासु प्रकीर्तिताः ॥

अत्रोत्तराफाल्गुनी नक्षत्रं निषिध्धमपि गृहीतं॥ उत्तराषाढान्त्यपादः श्रवणस्याद्याश्चतस्रो घटिका अभिजित् ॥

६३८ ततो गार्ग्यः—

वैश्वस्य चान्तिमः पादः श्रवणस्यादिनाडिकाः
चतस्रश्चाभिजिन्नाम नक्षत्रं समुदाहृतमिति ॥

एषु नक्षत्रेषु स्थिराणि भानि रोहिण्युत्तराफाल्गुनीउत्तराषाढाउत्तराभाद्रपदाख्यानि स्थिरप्रतिष्ठासु शुभानि ॥ अस्थिराणि तु ॥ श्रवणधनिष्ठाशततारकापुनर्वसूस्वात्याख्यानि अस्थिरासु शुभानि ॥ तिर्यगाननानि तु ज्येष्ठापुनर्वसुहस्ताश्विनीमृगशिरोरेवत्यनुराधास्वात्याख्यानि ॥ ऊर्ध्वाननानि च पुष्यार्द्राश्रवणोत्तराफाल्गुनीउत्तराषाढोत्तराभाद्रपदशतभिषक्रोहिणीधनिष्ठाख्यानि च स्थिरास्वस्थिरासु च प्रतिष्ठासु शुभान्याहुः ॥ तदुक्तं कारणतंत्रे—

स्थिरप्रतिष्ठासु भवेत्स्थिरर्क्षं चरप्रतिष्ठासु चरर्क्षमेव ।
शुभमूर्ध्वतिर्यग्वदनं द्वयेषु स्थिरोर्ध्ववक्त्रं तु भवेध्धनेष्विति॥

ऊर्ध्वास्यानि स्थिराणि च वनस्पतिप्रतिष्ठायां शस्तानि॥ इतिशब्दात् अधोमुखानि मूलपूर्वाषाढापूर्वाभाद्रपदाख्यानि ॥

६३९ स्थिराणि च वाप्यादीनां प्रतिष्ठायां शस्तानि तीक्ष्णदेवानां

विदारणनृसिंहवीरभद्रादीनां प्रतिष्ठायां तीक्ष्णानि भानि मूलशतभिषगार्द्राख्यानि शुभानि ॥ तदुक्तं—

वापीकूपतडागादिप्रतिष्ठायामधोमुखम् ॥
स्थिरं च तीक्ष्णमपि च तीक्ष्णदेवप्रतिष्ठिताविति ॥

इष्टापूर्तशुभाशुभमहाकर्मसु अनुपहतानामपि ऋत्विगाचार्ययजमानादीनां कृच्छ्रातिकृच्छ्रचान्द्रायणाख्यं सर्वप्रायश्चित्तं तत्स्थाने द्वादशप्राजापत्यान् वा तदर्धं वा वदन्ति इतिस्मृत्यर्थसारेऽभिहितं ॥

इति प्रतिष्ठाकालनिर्णयः

---

८४० अथ संक्षेपेण देवताप्रतिष्ठाविधानमभिधीयते ॥

स्मृतिपुराणपक्षेण प्रतिष्ठासंङ्ग्रहः कृतः ।
कार्यःस्थिरप्रतिष्ठायां प्राग्वोदग्वाथ मण्डपः ॥

मण्डपाधिवासनमग्रे वक्ष्यते ॥

उत्तरे कुण्डमेकं चेदाग्नेय्यां देवमातरः ॥
नैर्ऋत्यां वास्तुपीठंस्यादीशान्यां ग्रहपीठकम् ॥
मध्ये तु वेदिकायां स्यान्मण्डलं वस्त्रकुंभकम् ।
चरदेवप्रतिष्ठायां नियमो मण्डपस्य न ॥
पुनर्न वा कृतं सद्म मण्डपाभाव आश्रयेत् ।
मण्डलेषु च सर्वेषु यवाङ्कुरार्पणं भवेत् ॥
विविधैर्वस्तुभिःपूर्णं स्थाप्यं शूर्पचतुष्टयम् ।
कलशं जलपूर्णं तु फलवस्त्राद्यलंकृतं ॥
आचार्यःशुध्धदेहःसन्नाभिमंत्र्य सुमंत्रकैः ।

श्रीसूक्तान्येवमृग्वेदे मण्डलं ब्राह्मणं यजुः ॥
प्राक्साम सामवेदेन विष्णोर्नुकमथर्वणे ।
चतुर्ग्राहं गृहीत्वाज्यं स्वस्वसूक्तेन होमयेत् ॥
६४१ रक्षोघ्नं तु यजुर्वेदे साग्नि वैश्वानरं महत् ।
शन्नोमित्रमथर्वाख्ये मूलमंत्रेण वा शतम् ॥
एतावत्यश्च होतव्याः पलाशसमिधस्ततः ।
तथा स्थिरप्रतिष्ठायां ग्रहयज्ञःस्मृतोऽखिलः ॥
अग्न्युत्तारणमादौ स्यान्मृत्तिकास्नपनं ततः ।
पञ्चगव्येन स्नपनं भस्मदुग्धेन तत्परम् ॥
कषायैःपञ्चभिःसप्तधान्यैः सर्वौषधैस्तथा ।
होमतीर्थोदकस्नानं मंत्रैस्तल्लिङ्गकैरिह ॥
पञ्चामृतेन स्नपनमिह पश्चाच्च शस्यते ।
वस्त्रचन्दनमष्टाङ्गं चक्षुरुद्घाटनं मतम् ॥
विश्वतश्चक्षुर्मंत्रेण ततो भोज्यानि दर्शयेत् ।
आदर्शं दर्शयित्वा तु कटुकस्नपनं ततः ॥

वरुणः प्राविता १ अहेन्द्राणि २ अभित्वापूर्वप्रीतये ३ वायवायाहि ४ नवोभवति ५ भद्रंवददक्षिणतः ६ धन्वनागाः ७ देवींवाचमजनयं ८ जातवेदसे ९ बलित्थापर्व १० ब्रह्मादेवानां ११ त्यमूषुवाजितं १२ नाहमिन्द्राणि १२ तुंजे तुंज १३ येनापावक १४ प्रयाजान्मे १५ अयंवेनः १६ इति ऋग्वेद मंत्राः॥ वरुणस्योत्तंभनं १ त्रातारमिन्द्र २ प्रपर्वतस्य ३ सविताত्वा ४ इमंदेवा ५ इमंमेवरुणश्रुधी ६ उदुत्तमं ७ लोकंप्रणाच्छिद्रं ८ अग्नेसहस्वपृतना ९ दिवोमूर्धासि १० पयः पृ-

थिव्यां ११ या ओषधीः पूर्वजाता १२ अन्नपतेरन्नस्यनोधेहि १३ त्वंयविष्ठ १४ अग्निः प्रियेषुधाम १५ प्रजापतेनत्वदे १६ त्रीणिपदा १७ इदंविष्णु १८ घृतवतीभुवनाना १९ अवतत्य-धनुः २० इति यजुर्वेदमंत्राः ॥ अग्निंदूताई १ संतेपयांसि २ पृथिव्या अन्तरिक्षा ३ इन्दुरिन्द्रिया ४ शुक्रं शुक्रं ५ अतोदे-वा ६ वरुणसाम ७ देवव्रत ८ भुक्तोत्तर ९ पुरुषत १० इति सामवेदमंत्राः ॥ अग्नेर्मन्वेप्रथमस्य १ शकमयं २ नक्षत्राणि ३ पृथिव्यामग्नये ४ सहस्रबाहुः ५ य आत्मदा बलदा ६ अ-स्मिन्वसु वसवो ७ पुनरेहि वाचस्पते ८ यःकेतुं देवं ९ शन्नो मित्रः १० शन्नोवातः ११ शन्नोदेवी १२ इत्यथर्वेदमंत्राः ॥ शूर्पाणि शिरसि निधाय स्त्रियो गायन्त्यः प्रदक्षिणाचतुष्ट-यं कुर्वन्ति ॥ ततो दिक्पालानां बलिदानं ॥ ततो राजो-पचारेण देवतायाः पीठे नयनं ॥ ततः संक्षेपपूजां कृत्वा क-लशोदकेन पूर्वोक्तमंत्रैरधिवासं जलाभिषेकः ॥ प्रातः प्राणप्र-तिष्ठा ॥ ध्रुवाद्यौरिति साधारणो मंत्रः ॥ प्रतिदेवं मूलमंत्रा असाधारणाः ॥ सुगन्धपुष्पार्चितस्य हृदये करं दत्वा जपम-ष्टोत्तरशतं कृत्वा षोडशोपचारैः पूजयेत् ॥ शिवस्य पञ्चवक्त्र-पूजनं ॥ विष्णोः पुरुषसूक्तेन ॥ देव्याः श्रीसूक्तेन ॥ यद्वा ॥ आपोदेवीरापः । घृतवती । श्रीश्चते । मनसः कामं । सक्तुमि-व । जातवेदसे । कामं कामदुघे । आनोयज्ञं । याओषधीः । सरस्वतीयोन्यां । तेजः पशूनां । देवींवाचेति । समिद्धो अ-ग्निर्मनुषः । योमेधांदेव । मेधांमेवरुणः । इमंमेवरुण ॥ इ-तिषोडशोपचारमंत्राः ॥ सूर्यस्य । विभ्राड् । उदुत्यं । येनापाव-

क। दैव्यावध्वर्जू। तंप्रत्नथा। अयंवेनः। चित्रंदेवाना। आ-
न ईडाभिः। यदद्य। तरणिः। तत्सूर्यस्यदेव। तन्मित्रस्य। ब-
ण्महाँ असि। बट्सूर्यश्रवसा। श्रायन्तइव। आद्यादेवा। आ-
कृष्णेन। इति सूर्यमंत्राः॥ गणेशस्य गणानान्त्वेति अन्यदे-
वतानां तत्तद्व्रतविधिष्ववलोक्यं॥ प्रासादप्रतिष्ठा भुवनानां
न्यासः पूजा च॥ कलशारोपणं ध्वजारोपणं च सार्वदैविक्यां
विस्तृतं॥ स्वस्तिवाचनं माङ्गल्यकरणं दक्षिणा गावो हिरण्यं
वासांसि यथाविभवमात्मनः॥

इति देवताप्रतिष्ठाविधाननिर्णयः॥

## [८४२] अथ तडागाद्युत्सर्गःकथ्यते॥

वन्हिपुराणे—सुदिने शुभनक्षत्रे मुहूर्ते तु भवेद्यदा।
वापीकूपतडागानां तस्मिन्काले विधिःस्मृतः॥
संपूर्णे तु कृते कर्त्तुःसंपूर्णाःस्युर्मनोरथाः।
मत्स्यपुराणे—तडागादिप्रतिष्ठायां वारुण्यां दिशि मण्डपः।
प्रागुदक्प्रवणे देशे तडागस्य समीपत इति॥
मण्डपप्रकारस्तु दानखण्डेऽभिहितः॥ षोडशस्तंभान्वि-
तं षोडशहस्तं नववेद्यात्मकं चतुर्द्वारं तोरणध्वजपताकाद्यलङ्-
कृतं मण्डपं कुर्यात्॥ स सविस्तरं ऋग्वेदोक्तमहारुद्रविधाने म-
या निरूपित इति॥ तत्र मध्यवेदीपरिमितां चतुरस्रामिष्टिका-
भिश्चितां चतुर्थांशोच्छ्रितां शुभां वेदिकां मध्ये कुर्यात्॥ वेद्यां—
रजसा मण्डपं कुर्यात्पञ्चवर्णेन तत्त्ववित्।
षोडशारं ततश्चक्रं पद्मगर्भं चतुर्मुखम्॥

चतुरस्रं तु परितो वृत्तं मध्ये तु शोभनम् ॥

[५४३] मण्डलोपायः ॥

वेदिमध्ये त्वभिज्ञानं कुर्यात्पूर्वं तु पार्श्वतः ।
मध्याच्च लाञ्छनं पूर्वं कुर्याच्चित्र्यङ्गुलोन्मितम् ॥
त्र्यङ्गुलं द्वितीयं तु विंशाङ्गुलं तृतीयकम् ।
चतुर्विंशाङ्गुलं तुर्यं कुर्यात्सूत्रभ्रमं ततः ॥
कुर्याद्वृत्तानि चत्वारि मध्याल्लाञ्छनतो भ्रमात् ।
मध्यवृत्तं तु नाभिःस्यादष्टपत्रं द्वितीयकम् ॥
षोडशारं तृतीयं स्यात्तुर्यं च चतुरारकम् ॥

तुर्यं चतुर्थं नेमिशब्दवाच्यं ॥

तिस्रो रेखाश्च परितश्चतुरस्राश्चतुर्मुखाः
वारुणं मण्डलं ह्येतद्विस्तारेण द्विहस्तकम् ।

एकपार्श्ववृद्ध्याभिप्रायेण ॥

पद्मार्थं नवभिः प्रोक्तं नाभिस्तु त्रिभिरङ्गुलैः ।
अष्टाभिरारकं कुर्यात् नेमिस्तु चतुरङ्गुला ॥

इति केनचिदुक्तं ॥ [५४४] मण्डले रजःस्थापनमाह—

पद्मं पीतं सिता नाभिरारकाः पञ्चवर्णकाः ।
चतुर्वर्णा भवेन्नेमिस्ततो रेखास्त्रिवर्णकाः ॥
वेद्याश्चोपरि तत्कृत्वा पञ्चपल्लवसंयुतम् ।

सजलं कुंभं स्थापयेदिति शेषः ॥ तत्र वरुणादीन् पूजयेदिति॥ रजसा तण्डुलचूर्णेन तत्प्रकारो वक्ष्यते ॥ तथा वरुणस्य उषादीनां च स्वरूपं तन्निर्माणद्रव्यं च वक्ष्यते ॥ उषादीन् पञ्चरत्नगर्भायां सुवर्णपात्र्यां निक्षिप्य स्थापयेत् ॥ वे-

याः सपादकरं त्यक्त्वा परितश्चतसृषु दिक्षु योनिमेखलासहितानि चत्वारि कुण्डानि ईशान्यां पञ्चममाचार्यकुण्डं ग्रहपीठान्वितमिति पञ्चकुण्डानि कुर्यात् ॥ तथा हि—

ईशान्यां ग्रहपीठं तु आग्नेय्यां मातृपीठकम् ।
नैर्ऋत्यां वास्तुपीठं तु वायव्यां मङ्गलं भवेत् ॥

मङ्गले अभिषेकः वस्तुपूजाचात्र कर्तव्या ॥ ५४५ तदकरणे मत्स्यपुराणे दोषः श्रूयते ॥ दोषो जलहानिरिति ॥ कुण्डानि सर्वाणि चतुरस्राणि नानाकृतीनि वा तदसंभवे स्थण्डिलानि वा ॥ प्रतिद्वारं पञ्चरत्नपल्लव फलवस्त्रयुतं कलशद्वयं च एवमन्यदपि यज्ञोपकरणप्रोक्षणीपात्रस्थालीप्रणीताम्बुक्स्रुवसमिदाज्यप्रभृतीनि ॥ तथा पञ्चपल्लवसर्वौषधीनालिकेरनानावर्णगन्धपुष्पधूपदीपमाल्यानि ॥ क्षीरवृक्षनिर्मितं यूपं जलाशयवेष्टनार्थं सूत्रं च अन्यमुपयोगिसंभारं चोपकल्पयेत् ॥ यूपस्वरूपं च वक्ष्यते ॥ तत उत्सर्गात्पूर्वदिवसे श्वस्तडागाद्युत्सर्गं करिष्ये इति विहितसंकल्पो यजमानः वृद्धिश्राद्धं कुर्यात् ॥ ततो ऋत्विग्वरणं ॥ तत्र आचार्यप्रमुखान् चतुर्विंशतिब्राह्मणान्वृणुयात् ॥

शुभास्तत्राष्ट होतारो द्वारपालास्तथाष्ट वै ।
अष्टौ तु जापकाः कार्या ब्राह्मणा वेदपारगाः ॥
कुलशीलसमायुक्तः स्थापकः स्यादिहोत्तमः ।

स्थापक आचार्य इति ॥ पादप्रक्षालनपूर्वकं अमुकोत्सर्गयज्ञेनाहं यक्ष्ये ॥ तत्र मे त्वमाचार्यो भव ऋत्विक् जापक इत्यादि ॥ वृतान्मधुपर्केण चार्चयेत् ॥

[८४६] तत्र ॥ कुण्डलानि च हैमानि केयूरकटकानि च ।
तथाङ्गुलिपवित्राणि वासांसि विविधानि च ॥
पूजयेच्च समं सर्वान् आचार्यं द्विगुणं पुनः ।

शय्यां च स्वस्तिवाचनकरणानन्तरं

यजमानः सपत्नीकः पुत्रपौत्रसमन्वितः ।
पश्चिमद्वारमासाद्य प्रविशेद्यागमण्डपम् ॥
ततो मङ्गलशब्देन भेरीणां निःस्वनेन चेति ॥

ततःआचार्यःपूर्वतःकुण्डे बह्वृचौ होतारौ स्थापयेत् ॥ एवं दक्षिणादिकुण्डेषु यथावेदं होतॄनुपवेशयेत् ॥ जापकद्वारपालानामप्येष एव क्रमो वेदितव्यः ॥ उदङ्मुखो दक्षिणतो यजमान उपविशेदिति ॥

जुहुयुर्वारुणैर्मंत्रैराज्यं च समिधस्तथा ।

होतार इति शेषः ॥ वारुणमंत्राः ॥ तत्त्वायामीति पञ्च । त्वन्नो अग्नेवरुणस्येति द्वे । इमंमेवरुणेति च ॥ होमसंख्या समिदाज्ययोरष्टोत्तरशतं विधेया ॥ ततः आचार्यो यजध्वमिति होतृकान् ब्रूयात् जपध्वमिति जापकान्ब्रूयात् ॥ [८४७] ततः आचार्यः स्वकुण्डे अग्निं प्रयुज्य मंत्रवद्ग्रहशान्तिं कुर्यात् ॥ अग्न्युत्तारणपूर्वकं वरुणप्रभृति कूर्मादीन् जलचरजीवान् वेदिकायामवस्थाप्य पूजयेत् ॥ पूजाविधिर्वक्ष्यते ॥ ग्रहानादित्यादीन् देवताधिदेवतासहितान् पूजयेत् ॥ तथा इन्द्रप्रभृति लोकपालदिक्पालग्रहयज्ञोक्तदेवतासहितान् पूजयेत् ॥ ग्रहादिभ्यः प्रत्येकमष्टाविंशतिराहुतयो होतव्या इति ॥ अथ जपसूक्तानि ॥

रात्रिसूक्तं च रौद्रं च पावमानं सुमङ्गलम् ।
जपेरन् पौरुषं सूक्तं पूर्वतो बह्वृचाः पृथक् ॥

सुमङ्गलं कनिक्रदज्जनुषमिति ॥

शाक्रं सौम्यं च रौद्रं च कौष्माण्डं जातवेदसम् ।
सौरं सूक्तं जपेयुस्ते दक्षिणेन यजुर्विदः ॥

शाक्रं सूक्तं इन्द्रोनोविश्वतस्पतिरित्यनुवाकः ॥ रौद्रं सूक्तं इमारुद्राय तवसे ॥ सौम्यं सूक्तं सोमोधेनुमिति ॥ कूष्माण्डं यद्देवादेवहेडनमिति ॥ जातवेदसं यस्त्वाहृदाकीरणेत्यनुवाकः ॥ सौरं सूक्तं सूर्योदेवीमिति ॥

वैराजं पौरुषं सूक्तं सौपर्णं रुद्रसंहिताम् ।
शैशवं पञ्चनिधनं गायत्र्यं ज्येष्ठसाम च ॥
वामदेव्यं बृहत्सौम्यं रौरवं च रथन्तरम् ।
गवां व्रतं विकीर्णं च रक्षोघ्नं च यशस्तथा ॥
गायन्ति सामगा राजन् पश्चिमद्वारमाश्रिताः ।

वैराजं पिबासोममिन्द्रेति ॥ सौपर्णानि उद्दुदानिःसृतामद्य त्रीणि सामानि इन्द्रसंहिता आवोराजानामिति ॥ शैशवं उच्चाते जातमन्धसोइति पञ्चनिधनं वामदेव्यं कयानश्चित्र इति गायत्र्यं ज्येष्ठसामानि ॥ त्रीणि आज्यदोहानि ॥ बृहत्साम त्वामह इति ॥ सौम्यं सन्तेपयांसि ॥ रौरवं पुमानः सोमधारय ॥ रथन्तरं अभित्वाशूरनोनुम इति गवांव्रतं ॥ तेमन्वतप्रथमामिति ॥ विकीर्णं विभ्राडिति ॥ राक्षोघ्नं यशः साम ॥ बृहदिन्द्रायनायजेति—

अथर्वणाश्चोत्तरतः शान्तिकं पौष्टिकं तथा ।

जपेरन् मनसा देवमाश्रिता वरुणं प्रभुमिति ॥

[६४८] पूर्वेद्युरभितो रात्रावेवं कृत्वाधिवासनम् ।

एवं क्षपां समधिवाह्य विधियुक्तेन कर्मणा ॥ इति ॥

ततः प्रभाते विमले गोतारणयूपारोपणजलोत्सर्गादिकाः पदार्थाः ॥ ते च स्वगृह्योक्तवारुणचरुविधानोत्तरकाले क्रियन्ते ॥ तद्विधानं वक्ष्यते ॥ अत्र यथोक्तमण्डपकरणासंभवे प्राकृतं मण्डपं कुर्यात् ॥ बहुऋत्विक्करणासमर्थत्वे स्वल्पेनापि कुर्यात् ॥ तदुक्तं दानखण्डे—

अयं त्वशक्तावर्धेन विधिर्दृष्टः स्वयंभुवा ।

स्वल्पेष्वेकाग्निवत्कार्यं वित्तशाठ्यादृते नृभिः ॥

एकाग्नाविति ॥ तत्र तस्येति सप्तम्यर्थे वतिः ॥ एतेन असमर्थस्य स्वल्पैर्ऋत्विग्भिः एकस्मिन्कुण्डे जलोत्सर्गविधानं भवतीति सूचितं ॥ स्वल्पेषु पञ्चब्राह्मणान् वृणुयात् ॥ तदुक्तं तडागादिप्रतिष्ठोपक्रमे [६४९] बृहत्पाराशरेण—

तद्विधिज्ञः शुचिः शान्तो ब्राह्मणो धर्मवित्तमः ।

तत्कृत्यर्थं वरेण्योऽसौ चतुर्भिर्ब्राह्मणैः सह ॥

असौ आचार्यो वरणीय इति जलोत्सर्गाकरणे दोषदर्शनादिति॥

पूजयित्वा सदस्यांस्तु बलिं दद्यात्समंत्रतः ।

स्नायादवभृथेनात्र पुत्रभार्यासुहृद्वृतः ॥

प्रदद्याद्दक्षिणां तेभ्यो यथाशक्त्या तथा च गाम् ।

तथा ॥ कृत्वा तु यज्ञपात्राणि यज्ञोपकरणानि च ॥

ऋत्विग्भ्यस्तु समं दत्वा मण्डपं विभजेत्पुनः ।

होमपात्रं च शय्यां च स्थापकाय निवेदयेत् ।

गवां शतं च दातव्यमष्टषष्ट्यथवा पुनः ॥

पञ्चाशद्वाथ षट्त्रिंशत्पञ्चविंशति वा पुनः ।

ब्राह्मणेभ्य इति शेषः ॥ अयं विधिः कूपवापीषु अन्यासु प्रतिष्ठासु साधारणः ॥ तदुक्तं—

एष एव विधिर्दृष्टः प्रतिष्ठासु तथैव च ।

मंत्रतस्तु विशेषः स्यात्प्रासादोद्यानभूमिषु ॥

वारुणचरौ विरुध्धधर्मसंबन्धे स्वशाखोक्तमनुष्ठेयमिति प्रतिष्ठासु अधिवासनविधिः ॥ अथ अधिवासनानन्तरं ब्रव्हृचगृह्योक्तवारुणचरुविधानप्रसङ्गात् यूपारोपणं च गोतारणगोपुच्छतर्पणादिवारुणेष्टिपदार्थजातमभिधीयते ॥

इति तडागाद्युत्सर्गः ॥

---

## अथ गृह्योक्तो वाप्युत्सर्गविधिः ॥

९५० तत्र कारिका—

ब्रह्माणं विष्णुमीशानं गणेशं च तथांबिकाम् ।

नत्वा करोमि गृह्योक्तां व्थाप्याद्युत्सर्गपध्धतिम् ॥

वन्हिपुराणे—

सुदिने शुभनक्षत्रे मुहूर्तं तु यदा भवेत् ।

वापीकूपतडागानां तस्मिन्काले विधिःस्मृतः ॥

तथा—सर्वौषध्युदकस्नातः शुक्लगन्धानुलेपनः ।

यजमानःसपत्नीकःपुत्रपौत्रसमन्वितः ॥

करिष्य इति संकल्प्य वाप्याद्युत्सर्जनं ततः ।

मातृयागं चाभ्युदयं कुर्याद्ब्राह्मणवाचनम् ॥

आचार्यादीनां वरणं मधुपर्कादिपूजनम् ।

ततः ॥ जलाशयात्तु वरुणदिकृते मण्डपे स्थितः ॥

गृह्योक्तविधिनाचार्यःस्थापयेदग्निमुज्वलम् ।

पुराणे–सर्वभूतोपकाराय शान्तिं कुर्याद्द्विजोत्तमः ।

चरुं च श्रपयेद्वन्हौ वारुणं सर्वकामदमिति ॥

वचनात् पूर्वं ग्रहशान्तिः ॥ तत्र विश्वकर्मन् हविषेति-मंत्रेण विशेषहोमः ॥ वारुणैर्मंत्रैःसमिदाज्यातिलहोम इति शान्तिं समाप्यानन्तरं ततः प्राच्यां चरुं यवमयं तत्र वारुणं पयसा श्रपयेत् ॥

वरुणं पूजयेत्तत्र यादोभिश्च समन्वितम् ।

परिशिष्टे–सौवर्णो वरुणःकार्यो मकरस्कन्धमाश्रितः ।

चतुर्हस्तः पद्मपाशकर आल्हादिनीयुतः ।

तस्याः पृष्ठे करस्त्वेको परो मकरवालधृक् ॥

सौवर्णं हंसयोर्युग्मं चक्रवाकद्वयं तथा ।

सौवर्णः कूर्मो रौप्यो वा बकस्ताम्रमयी जलौका अन्य-च्च रौप्यजं जलसर्पमण्डूकादयः ॥ तथा–

मत्स्यी कूर्मी जलौका च दर्दुरी जलगोधिका ।

मकरी तुन्दुकी प्रोक्ताः सप्तैता जलमातरः ॥

धातुजेष्वग्न्युत्तारणं शुद्धिं मृद्भस्मगव्यकैः ।

पञ्चामृतेन स्नपनं प्रतिष्ठाप्याधिवासयेत् ॥

८५१ तथा–धातुमये मृन्मये वा शुभे कुंभे प्रपूरिते ।

सर्वौषधीर्हिरण्यं च पञ्चरत्नं सपल्लवम् ॥

क्षिप्त्वोपरि न्यसेत्पात्रं सवस्त्रं तण्डुलोर्जितम् ।

कुभं स्थाप्यं ॥ स्थण्डिलोपर्यष्टदले वारुणे मण्डलेऽपि च ॥

वरुणादींस्तु पञ्चरत्नगर्भायां पाड्यां निक्षिप्य स्थापयेत् कुंभोपरि ॥ तथा वरुणस्येति मंत्रेण एवं पात्रोपरि न्यसेत् ॥

जलमातृः प्रतिष्ठाप्य पूजयेद्वरुणं शुभम् ।

तथा चोक्तं—

वरुणं विन्यसेत्तत्र सुयादोभिः समन्वितम् ।

एवमन्यदपि प्राकृतोपयोगि कर्मारंभात्पूर्वमेवासादयेद्यूपादिकं ॥ वरुणस्य पूजाविधिः ॥

वरुणस्योत्तंभनमिति वरुणस्यावाहनं मतम् ।
तत्त्वायाम्यासने पाद्ये त्वन्नो अग्ने तथाचमेत् ॥
सत्वं न इति स्नाने स्यादापोदेवी च वाससी ।
उदुत्तमं वरुणस्योत्तंभनं गन्धपुष्पयोः ॥

वरुणाय नमः ॥ प्रचेतसे नमः । प्रतीच्याधिपतये नमः यादोऽधिपतये नमः ॥ परशुपाणये नमः ॥ कमलहस्ताय नमः ॥ आल्हादिनीप्रियाय नमः ॥ इति नामभिः पूजा ॥

देवीराप इति धूपेदेवीः शुद्धास्तु दीपके ।
आपोदेवीति नैवेद्ये आरार्तिक उदुत्तमम् ॥
तत्त्वायामीति चार्घः स्यात्पूजनेऽयं विधिः स्मृतः ।
गृह्योक्तहोमः कर्तव्यः समग्रस्तु यथाविधि ॥

तत्रोदङ्मुखो दक्षिणतो यजमान उपविशेदिति ॥

स्विष्टकृच्च ततो हुत्वा मार्जनान्तं कुशाण्डिकां ।

कृत्वा यूपं निखनेदिति ॥ तथा—

होमस्थानाद्दिशि प्राच्यामीशाने वा जलाशयात् ।

दर्भाक्षतयुते स्थाने यूपं तं निखनेत्ततः ॥

परिशिष्टे–उत्तरस्थश्च यूपः स्याद्वाप्यां कूपतडागयोः ।

खादिराश्वत्थवैकङ्कतौदुंबरशमीवटैः ॥

शिरः स्कन्धोरोनाभिषु प्रमाणं ब्राह्मणादिषु ।

८५२ दानखण्डे—

त्रिरत्निमात्रो यूपः स्यात्क्षीरवृक्षविनिर्मितः ।

यजमानप्रमाणो वा संस्थाप्यो भूतिमिच्छता ॥

यूपलक्षणं तु ॥ यूपोऽवटाद्वहिः कार्यश्चतुरस्रस्तृतीयके ।

मध्येऽष्टास्त्रूर्ध्वभागे तु वर्तुलः पञ्चमस्त्वधः ॥

यूपपदार्थः ॥ सविता प्रथममंत्रेण यूपस्य स्पर्शनं मतम् ।

समुद्रज्येष्ठेति मंत्रेण स्नापयेद्दशकुंभकैः ॥

अञ्जतित्वेति मंत्रेण घृतेनाभ्यञ्जनं पुनः ।

युञ्जन्तिब्रध्नमंत्रेण गन्धपुष्पैःसमर्चयेत् ॥

गर्ते पञ्चामृतं हुत्वाग्नये भूम्यै दिवे तथा ।

यूपव्रस्केति मंत्रेण स्थापयेद्गर्तमध्यतः ॥

युवं वस्त्राणि मंत्रेण छादयेद्वाससापि तम् ।

संस्थाप्य विन्यसेत्तस्मिन्मंत्रान्वरुणदैवतान् ॥ इति ॥

वेदवाद्यादिघोषेण ततो गत्वा जलाशयम् ।

जलमध्ये तु पूजा स्याज्जलमातॄणां जलस्य च ।

जलपूजा समुद्रज्येष्ठा इति ॥

जलाशयाच्च परितो दिक्पालानर्चयेत्तत ॥

यादोभिर्वरुणयुतां कुंभतोयसमन्विताम् ॥

पात्रीमादाय सौवर्णां पञ्चरत्नसमन्विताम् ।

धृतां चतुर्भिर्विप्रैस्तु दध्यक्षतसमन्विताम् ।
उत्तराभिमुखोन्युब्जां जलमध्ये तु कारयेत् ॥
आथर्वणेन साम्ना तु पुनर्मामे तृचेन च ।
आपोहिष्ठेति मंत्रेण क्षिप्त्वा प्रार्थयते पुनः ॥
आथर्वणं तथा साम शन्नोदेवीरभिष्टय इति ।
जले प्रक्षिप्य वरूणं पुनःकुर्याच्च पूजनम् ॥
वरूणस्योत्तंभनमसि इति पूर्वोक्तैर्मंत्रैः ।

८५३ ततःप्रार्थना ॥

जलाधिवासो वरुण त्वं तु देवैर्विनिर्मितः ।
जलाशयेऽस्मिन्देवेश सन्निधानं सदा कुरु ॥
पुष्कराद्यानि तीर्थानि गङ्गाद्याः सरितस्तथा ।
आगच्छन्तु जलेह्यस्मिन्वाञ्छिताभीष्टसिद्धये ॥
मत्स्यादयो जलचरा जलक्रीडासमन्विताः ।
विचरन्तु स्वभावेन कारितेऽस्मिन्जलाशये ॥

यत्किंचेदमिति मज्जनं कृत्वा नित्यतर्पणं ॥

ब्रह्मा विष्णुः रूद्रः प्रजापतिः
ऋषींश्छन्दांसि वेदांश्च पूर्वाचार्यास्तथैव च ।
गन्धर्वानितराचार्यान्संवत्सरान्सहांशकान् ॥
देवानप्सरसो नागांस्तीर्थान्वा सागरांस्तथा ।
पर्वतान्सरितश्चैव मनुष्यान्पन्नगांस्तथा ॥
रक्षांसि च पिशाचांश्च सुपर्णान्पक्षिणस्तथा ।
भूतानि च पशून्सर्वान् वनस्पत्यौषधीस्तथा ॥
वाप्यामस्यां तर्पयामि जलेन शुभहेतवे ।

भूतग्रामाश्चतुर्विधास्तृप्यन्तु जलदानतः ।
दिक्पाला लोकपालाश्च तृप्तिमन्तो भवन्त्विति ।
वाप्यां हि तर्पणे सर्वे प्रयच्छन्तु शुभं मम ॥
सततं तर्पणे देवास्तृप्यन्तु पितृदेवताः ।

[८५४]दानखण्डात्—

कनकालङ्कृतां कृत्वा तत्र गामवतारयेत् ।
सामगाय च सा देया ब्राह्मणाय विशांपते ॥

अयं चानुमंत्रणे मंत्रः ॥ इदं सलिलं पवित्रं कुरुष्व शुध्धाःपूता अमृताःसन्तु नित्यं ॥ मांतारयत्यश्च तीर्थाभिषेकात् लोकाल्लोकं तरते तीर्यते च ॥ पुच्छेऽन्वारभ्य उत्तराभिमुखो गच्छेत् ॥ तटं प्राप्य आपो अस्मानिति मार्जनं पुच्छे तर्पणं च॥ तथा--पूजिताशश्च गोःपुच्छे स्वयमेवावलंबितः ।

उत्तराभिमुखो भूत्वा आगच्छेच्च तटं प्रति ॥

ततः ॥ सुरभे त्वं जगदंब्या पवित्रा पापनाशिनी ।
नीत्वा पारं परं पुण्ये वृद्धिं कुरु सदा मम ॥ इति ॥
जलाशयं च त्रिवृता सूत्रेण परिवेष्टयेत् ।
शुक्लमाल्यांबरधरो यूपमभ्यर्चयेत्ततः ॥
परिवेष्ट्य च वस्त्रेण यूपमालिङ्गयेत्ततः ।
यूप त्वं पापहर्ता च पुरा देवैर्विनिर्मितः ॥
सर्वं गृहाण मे पापं जलरोधप्रभावतः ।
कीर्तिचिन्हः स्थितो यूपः स्थिरो भवतु नित्यशः ॥
यूपस्याधो जलमातृर्वरुणं दिक्पतींस्तथा ।
पूजयित्वाथ मण्डपमागत्य जलोत्सर्गं कुर्यात् सर्वोपभुक्तये इति॥

